उद्युक्तं भवतीत्यवेक्ष्य हरिणा सर्वेश्वरेणैव तत्
सत्यानन्दयशोदयेक्षितमिहाकारीति मन्यामहे ॥ १५ ॥

अन्यथा कृष्णवक्त्राब्जदर्शनामृतपानकृत् ।
तं विहाय कथं गच्छेत् क्षुद्रप्रस्थपयोमतिः ॥ १६ ॥ (युग्मम्)

उन्मार्गवर्तनेन हि पररसभङ्गो मयाऽधुनाऽकारि ।
धिङ् मामिति किं त्रपया पयस्तदासीदधोमुखं सद्यः ॥ १७ ॥

सञ्जातकोप इति : १०.९.६.

सोऽहंभावतयापि योऽहमृषिभिः प्राप्यो न हार्दास्पदं
सोऽहंभावमवेक्ष्य लक्षितगतिर्यस्यास्मि जातः स चेत् ।
मामुत्सृज्य रसात्मकं वतरसे क्षुद्रे भवेत्सक्तधीः,
तत्क्रुद्धो न कथं भवेयमिति किं प्राबोधि कोपच्छलात् ॥ १८ ॥

यन्मामङ्कगतं पिबन्तमपि च स्तन्यं विहाय प्रसूः,
मच्चित्ताऽप्यधुना ययावदयवन्नागो लवोऽस्या इह ।
किं त्वत्राधरसङ्गतेः फलमिदं मत्वा द्विजौघैस्तदा
चक्रे शिक्षितमच्युतस्तमधरं शिक्षेरिता यद् द्विजात् ॥ १९ ॥

धराश्रितमिहाधुना यदि करोमि मे रुट्फलं
गमिष्यति ततो न किं विफलभावमात्मव्रतम् ।
धरा क्षितिरियं जनन्यपि तथेति किं वा स तत्
सुखार्पणधृतव्रतोऽकृत किलाधरैकाश्रितम् ॥ २० ॥

वदन्ति निगमाः सर्वेऽप्येकं मामण्डभाजनम् ।
परमेतत्कुतो यातमित्यभाङ्क्षीद्रुषा नु तत् ॥ २१ ॥

परमार्तिचयान्निहन्ति यस्य स्मरणं तस्य कथं ममाग्र एव ।
कलशः परमार्तिको हि तिष्ठेदिति मुक्तिं गमितो नु भङ्गदम्भात् ॥२२॥

---

१. दन्ताः ब्राह्मणाश्च । २. ओष्ठं नीचं च । ३. माम् अण्डभाजनमिति च्छेदः, अथ च मा मण्डभाजनमिति । अत्र मण्डनं मण्डः भूषणं दधिभाजनं च । ४. परमा आर्तिर्यस्येति मृत्तिकाया अयमिति च ।

यशोदयाविहीनस्य पुंसः स्यादीदृगेव हि।
कृत्यजातमिति व्यक्तं कृष्णेनादर्शि तच्छलात्॥ २३॥

कामी दैन्यमुपैति लोभितमतिर्नैर्घृण्यमप्यात्मजे
क्रोधाक्तः सदसद्विवेकविधुरो दुष्कृत्यमालम्बते।
तस्मादात्महितैषिणा त्रयमिदं संत्याज्यमेवावना-
वित्युटट्ङ्कितमच्युतेन चरिताद्गीतावदस्मात्त्रिकात्॥ २४॥

स्तन्यदैन्यं हि कामेन लोभात् पुत्रेऽप्यनादरः।
भाण्डभङ्गो रुषैवाऽऽसीदिति ज्ञेयं स्फुटं त्रयम्॥२५॥ (युग्मम्)

विपुलेष्वपि सत्सु रसेष्वन्वेष्टव्यो मनीषिणा सारः।
संसारोऽन्वर्थः स्यात्तदेति नवनीतसङ्ग्रहाद् ध्वनितम्॥ २६॥

उत्तार्येति : १०.९.७.

निरर्थकं दुग्धमिदं प्रयातीत्यासं सयत्नाऽहमिवावनेऽस्य।
ततोऽधिकोऽभूद् व्यय एष चित्रामालक्ष्य सा दैवगतिं जहास॥ २७॥

लोकेषु पुत्रनिवहो निजमातृवस्तु-
जातावनेऽनलसधीः प्रतिभात्यहन्तु।
पुत्रेण चानुभव-मीदृशा-मापितेति
साश्चर्यवृत्ति सहसा किमसौ जहास॥ २८॥

उलूखलाङ्घ्रेरिति : १०.९.८.

यथा खलोऽङ्घ्रिस्थितितः प्रयाति तथा न गर्वाद्वशतामिति ज्ञः।
ऊरीचकारेप्सितधीः स युक्त-मुलूखलाङ्घ्रिस्थिति-मप्यनन्तः॥२९॥

न हीयते वदान्यस्य सच्छीलं खलसङ्गतः।
उलूखलकृतावासोऽप्यौदार्यान्नच्युतोऽच्युतः॥ ३०॥

दानमेव जने यावद्दोषदोषाघमोषकम्।
भवतीत्यच्युतो युक्तं तद्दानं तत्कृतेऽकरोत्॥ ३१॥

१. सम्यक् सारो यस्मिन्।

यद्यप्यलभ्यममृतं स्वस्थितमवनौ तथापि मां भजताम् ।
सुलभं कुर्यामिति किं कपये नवनीतमुपरिगतमादात् ॥ ३२ ॥

तामात्तयष्टिमिति : १०.९.९.

अकृत्यमपि मे सर्वं सह्यमस्य परन्तु न ।
उलूखलाङ्घ्रिभजनमित्यागात् सा सयष्टिका ॥ ३३ ॥
श्लिष्यद्द्रोपं मनो यावत् तावदीशः पराङ्मुखः ।
सूक्ष्मवेत्राश्रितस्यापि भवेदित्यभवत् स्फुटम् ॥ ३४ ॥
तमोगुणांशोऽपि न संस्पृशेद्यथा तथा विधेयं मदवाप्तिकामुकैः ।
स चेद्दिदूरोऽहमिति प्रकाशयन् प्रभुः स्वमातुः सरुषोऽन्वपाक्रमत् ॥३५॥

अन्वञ्चमानेति : १०.९.१०.

च्युतप्रसूनानुगतिर्यो भवेत्तस्य वैष्णवम् ।
स्वरूपमभिमृश्यं स्यादिति तं तादृगस्पृशत् ॥ ३६ ॥

कृतागसमिति : १०.९.११.

आलम्ब्य यष्टिमनयाऽवलयापि सम्प्र-
त्यङ्गीकृता सवलतेति विचिन्त्य कृष्णः ।
स्वस्मिन्नपि प्रवलतां रुदितच्छलेन
व्यक्तीचकार रुदितं हि बलं शिशूनाम् ॥ ३७ ॥
मदन्ववायादिमयोर्हिमाहिमोस्रयोः कलङ्कं मम चाक्षिरूपयोः ।
कथं सहे नन्विति रोदनच्छलात्तदञ्जनं क्षालयति स्म पाणिना ॥३८॥
कर्मणां नैव केषामप्येष कर्तेति साक्षिणौ ।
व्रतमित्यच्युतो नेत्रस्थितार्केन्दू व्यवोधयत् ॥ ३९ ॥
नानासाधनशालिनोऽपि पुरुषस्यौजस्विनः स्वात्मनो
मालिन्यापहृताववश्य - मपरापेक्षेति युक्तं यतः ।

---

१. शिक्यस्थितम् । २. ज्ञानी वेत्रयष्टिश्च । ३. हिंसा पुष्पं च । ४. चन्द्र-सूर्ययोः ।

भास्वच्चन्द्रमसोः सहस्रकरयोरप्यत्र नेत्रात्मनो-
रासीदञ्जनमार्जनं न भगवद्धस्तावलम्बं विना ॥ ४० ॥

तवाभिधानं षडरिप्रभञ्जकं भुवीति सद्भिर्यदहं प्रकीर्तितः।
मयि स्थिते द्वेषिणि रोषसंभवः कथं जनन्यामिति तादृशेक्षणः ॥४१॥

त्यक्त्वा यष्टिमिति : १०.९.१२.

तावज्जडाश्रयो युक्तो न यावच्चेतनागमः।
युक्तं श्रीशकरं धृत्वा सा जहौ यष्टिकां जडाम् ॥ ४२ ॥

मदीयं सन्तोषं सुफलदमसम्पाद्य मनुजो
यदि क्षुद्रे किञ्चित् फलिनि दिनकर्मण्यभिरतः।
भवित्री तस्यार्थक्षतिरपि च दूरस्थितिरहं
पुनर्मद्गामी चेत् प्रतिपदमहं तस्य सुलभः ॥ ४३ ॥

हित्वा तदा स्वमकृत - स्तनपानपूर्तिं
यान्त्यां स्वमातरि पयोदृशि मण्डभाण्डम्।
भङ्क्त्वा पलायनपरो यदभूत् स कृष्णः
तद्धस्तगः पुनरपीति विविक्तमत्र ॥ ४४ ॥ (युग्मम्)

बुद्ध्यग्राह्योऽप्यहमिह सुलभस्तस्यास्मि यस्तु मदनुगतः।
उज्झितकर्मत्याशयमबोधयन् मातृहस्तगो हि हरिः ॥ ४५ ॥

गर्गोक्तनामवद्धेऽस्मिन् सुकरं दामबन्धनम्।
इत्यैषीत् सा नामदाम पर्यायैकार्थदर्शिनी ॥ ४६ ॥

तं मत्वेति : १०.९.१४.

परिहातुं खलसङ्गम - मतितर - खलसङ्ग एव हेतुरिति।
अतिसन्निकर्षशास्त्राज्ज्ञानत्येषा बबन्ध किमु तस्मिन् ॥ ४७ ॥

अयं चोरश्चौर्यकर्मण्येतत्साहाय्यभागभूत्।
इति वीक्ष्य द्वयोर्बन्धार्हतां तत्र बबन्ध तम् ॥ ४८ ॥

सा बबन्ध तमित्यास्तां मन्मतं तु बबन्ध सः।
गोपिकोलूखले एव तमस्तन्तुगुणात् प्रभुः ॥ ४९ ॥

---

१. नायकः चक्षुश्च।

शक्तिर्योगो लक्षणा गौण्यपीति
बोधे हेतुः श्रीपतौ तत्र चोक्तम्।
तद्बोध्यत्वं गर्गयोगीन्द्र - वेदै-
र्मन्ये गौण्या गोपिका ज्ञातुमैच्छत् ॥ ५० ॥

तद्दामेति : १०.९.१५.

यथा यथा पूरयितुं विभूदरं
तदा यशोदा जगृहे गुणोत्करम्।
गुणैस्तथेशोऽपि निजैः कृतोद्यम-
स्तदीय - हार्दस्थिति - पूर्तये मुदा ॥ ५१ ॥

यदाऽऽसीत्तदिति : १०.९.१६.

रजःप्रभृतयो गुणा अपि न यं क्वचित् स्प्रष्टुम-
प्यलं जगति तादृशे परतरे जगत्साक्षिणि।
कथं नु खलु संभवेल्लघु गुणाभिसंवेष्टनं
तदेतदुचितं विभौ यदभवद् गुणापूरणम् ॥ ५२ ॥

यदिन्द्रियाणामिह वन्धनं स्मृतं
न जातुचित् तत्तदधीशितुर्भवेत्।
इति स्फुटं ज्ञापयितुं न गोपतेः[1]
वभूव गोर्वन्धक[2] - दामवन्धकम् ॥ ५३ ॥

अध्यस्तस्याश्रावि बन्धो जगत्यां
नाधिष्ठानस्यांशतोऽपीति लोके।
श्रुत्यर्थस्य ख्यातये नोदरेऽभूद्
वन्धस्तस्मिन् विश्वविश्वप्रकाशे ॥ ५४ ॥

यस्मिन् कृपानुग्रहवीक्षणं विभो-
र्भवत्यसौ वेत्ति न बन्धसम्भवम्।

१. इन्द्रियपतेः गोपालस्य च। २. इन्द्रियबन्धकृद् धेनुबन्धकृच्च।

युक्तं तदा तद्धरिणा तथेक्षितं
मुक्तं स्वयं दाम न बन्धभागभूत् ॥ ५५ ॥

उदरे विनिवेशिता गुणा निखिला अप्यलमस्य पूर्तये ।
न भवेयुरितीव सूचितं विभुनोनोदर - दामलीलया ॥ ५६ ॥

नैकेन वीक्षणमभूदिह यस्य तस्मि-
न्नन्धैः शतेन मिलितैरपि किं फलं स्यात् ।
सर्वाण्यवेहि सदृशानि वृथा प्रयासैः
किं वेति दाम किमु सूचयितुं तथाऽऽसीत् ॥ ५७ ॥

द्व्यङ्गुलं न्यूनमिति :

यदाहं प्राप्यः स्यामिह सुमनसां युक्तमनसां
तदानीं सम्बन्धः स्फुरति मयि सत्त्वैकगुणतः ।
द्वयोर्नेति प्रायः प्रकटितमिहेशेन स तदा
यतो द्वाभ्यामूनात्तदुचितगुणाद् बन्धयुगभूत् ॥ ५८ ॥

यत्र स्यातां नामरूपे सरूपे बन्धस्तस्यैवोचितो नोचितोऽत्र ।
द्वाभ्यामूने ब्रह्मणीति व्यबोधि दाम्ना तेन द्व्यङ्गुलोऽनेन मन्ये ॥ ५९ ॥

इमौ तरू सम्प्रति शापबन्धनाद्
विमोचनीयाविति सूचयत् प्रभुम् ।
तदीय-सङ्ख्याङ्गुलि - युग्मतः स्वय-
मबन्धकं दाम बभूव किं तदा ॥ ६० ॥

द्वैतानुराग्यपि हरेः कृपयाऽपयात-
बन्धं च गोकुलमसङ्ग्यपि वासुदेवः ।
प्रेम्णैव तस्य समभूत् किल बन्धपात्र-
मेतद्द्वयं विशदयत् किमु तत्तथाऽऽसीत् ॥ ६१ ॥

दीर्घ-दीर्घतर-दीर्घतमानि तानि तत्र युयुजे पृथगीशे ।
सर्वमेव गृहगं गुणजातं साऽथवा युगपदेव युयोज ॥ ६२ ॥

---

१. अङ्गुलाभ्याम । २. इन्द्रियकुलं व्रजश्च ।

तत्राद्ये भगवत्यनर्घ्यचरिते क्षुद्रोऽथवाऽयं महान्
एवं नैव दयानिधौ समदृशि द्वैविध्यमित्यध्वनि ।
नानन्तत्वमनादिता च विभुवत् कुत्रापि चास्मासु त-
त्त्वेतद्वन्धनवार्तयाऽलमिति वा दाम्नेरितं तादृशा ॥ ६३ ॥

अन्त्येऽनन्तगुणे वभूवुरखिलास्तत्रैव लीना गुणा
नद्योऽब्धाविव नामरूपरहिताः प्राग्गोपदारोहिताः ।
अत्रैकोऽहमपांनिधौ च यमुना द्वौ स्वः सरूपाभिधौ
नान्योऽस्तीत्यलमन्यदामकलनश्चान्त्येति तेनाध्वनि ॥ ६४ ॥

उक्तार्थद्वयमप्यगूढमृषिवाक्-सन्दोहतो भासते
तद्युक्त्यन्वयतस्तु तत्र रुचिरः पूर्वौ समार्थौ मतः ।
अन्त्ये वामनवन्नरूपमलघु प्रादर्शि तत्तद्गुण-
कार्यं वा पृथगित्यथाप्यनुपदं व्याख्यातमीक्ष्यं वुधैः ॥ ६५ ॥

( विशेषकम् )

स्वमातुरिति : १०.९.१८.

न द्वैतमस्या हृदयादपैति तत् किं वृथा स्वां प्रकटीकरोषि ।
निःसङ्गतामित्यवधार्य तादृग् दामस्थितेरास विभुः सबन्धः ॥ ६६ ॥

लघुमपि मद्भक्तगुणं हार्दस्थितितो नयामि पूर्णपदम् ।
ध्वनयन्नेवमनन्तो निन्ये पूर्णत्वमेतदल्पमपि ॥ ६७ ॥

षाड्गुण्यं भजतः सहस्रगुण - सद्वृत्तेरनन्तात्मनो
नित्यानन्तगुणोल्लसत् - सुचरितस्यापीह मेऽवस्थितिः ।
पूर्णत्वं गुणतः प्रयाति न विना मद्भावभाजां गुणा-
लम्बं जातुचिदित्यवोधयदसौ पूर्णोदरस्तद्गुणात् ॥ ६८ ॥

मत्प्रेम - पोषकमपि श्रममात्मभक्त-
देहे सहे न भुवि जातु कुतस्तदन्यम् ।
किं चास्य खेदमपनेतुमहं सहेये-
त्यश्लाघ्यमप्यकृत बन्धनतः स्फुटं सः ॥ ६९ ॥

न मां तत्त्वदृष्ट्या गुणः कोऽपि लग्नः क्वचिद्भासमानोऽपि चेन्मध्य एव।
इति श्रौतमर्थं तदानीमधीशः स दाम्ना स्वमध्येन मन्ये व्यतानीत् ॥७०॥

गोकुलस्थैरहं वद्धः प्रेम्णेत्यर्थं प्रकाशयन्।
तद्गतेन गुणेनेशस्तदाऽगात् किमु वन्धनम् ॥ ७१ ॥

महतामिह सद्गुणो गरीयान् प्रचुराज्ञानविजृम्भितोऽपि भूयः।
अलमीप्सितकार्यपूर्तये स्यादिति तद्वन्धनतोऽभवत्स्फुटार्थम् ॥७२॥

खलगुणसम्वन्धः खलु यदि दैवादुदरसङ्गतो जातः।
सद्यो वन्धाय भवत्यलमिह महतामपीति सुव्यक्तम् ॥ ७३ ॥

ज्ञात्वा कृष्णस्तादृशं मातृचेतो निर्वन्धं यत्स्वीचकाराऽऽत्मवन्धम्।
तेनावोधि प्रेमतो भक्तभव्याद् गौणं कार्यं स्वीयमेवं जनेऽस्मिन् ॥७४॥

मच्छापादचिरेण वां यदुपतिर्मोक्तेति वाचाऽऽर्षया
तावद् वद्ध इवाहमस्मि सततं मुक्तोऽपि मोक्ताऽपि च।
यावद्वार्क्षपदादिमौ न कृपया सम्मोचिताविल्यसौ
तद्वन्धात् किमवोधयद् भुवि विभुर्भक्तैकवाग्वश्यताम् ॥ ७५ ॥

आकल्पकोट्यघटमानमपीह भक्तसङ्कल्पमल्पतरयत्नत एव यो वै।
सम्पूर्यत हृदयधारणजागरूकस्तद्वाच्यमस्य किमु भक्तवशत्वमन्यत् ।७६

नेमं विरिञ्च इति : १०.९.२०.

येषां वालतया सुखोदयकरस्तेषां न षाड्गुण्यतो
येषां तादृशरूपतश्च सुखदस्तेषां न वालत्वतः।
सच्चिद्रूपतया च वालकतया निःसीमसौख्यप्रद-
स्तेषामेव सुभक्तिमन्त इह येऽत्रोदाहृतिर्गोपिका ॥ ७७ ॥

नियम्य हृदयं धियाऽऽत्मभववन्धनाशाहितो-
द्यमैरपि वुधैर्न या क्वचिदलक्ष्यलन्तामयम्।
निजात्म - भववन्धनोत्सुक - मनस्यपि श्रीपतिः
कृपामकृत मातरीत्युचितमेतदार्षं वचः ॥ ७८ ॥

---

१. संसारबन्धनं पुत्रबन्धनञ्च।

नायं सुखाप इति : १०.९.२१.

योगाद्याखिलसाधनाधिकगुणा सिद्धैव सा यद्यया
ज्ञानादप्यतुलोत्सवः प्रभुवशीकारः सुभक्त्याऽधिकः ।
इत्थं सर्वविदग्रगर्षिभणिति-प्रामाण्यबद्धादर-
स्त्यक्त्वा साधनमन्यदच्युतभवद्भक्तिं करोम्यन्वहम् ॥ ७९ ॥

कृष्णस्त्विवति : १०.९.२२.

गृहकृत्यात्यासक्तः स एव बद्धोऽहमस्मि यद्बुद्ध्या ।
तादृग्धियं हि मातरमुदाजहाराऽच्युतः सगृहसक्ताम् ॥ ८० ॥

मुक्तं मामपि बद्धतां नयति योऽदभ्रभ्रमालङ्कृतो
नार्हत्वं भजते स मत्कृत - परोद्धारप्रकारे क्षणे ।
आलोच्येत्थमथाऽच्युतस्तरुसमुद्धारं समैच्छत्तदा
व्यग्रायां गृहकार्यतोऽन्तरगृहं यान्त्यां क्षमं मातरि ॥ ८१ ॥

सन्निहितायां मातरि भविता नहि गुह्यकामितार्थाप्तिः ।
इति किं तस्यां तादृशि सत्यां कृष्णस्तदीक्षणं चक्रे ॥ ८२ ॥

अर्जुनाविति :

धवलत्वमंधस्थित्याऽधुनास्ते पारिभाषिकम् ।
वरत्वं त्वस्ति निर्बाधमित्यद्राक्षीत् स तादृशौ ॥ ८३ ॥

पुरा वर्णतो नामतश्चाधुनापि स्मृतावर्जुनेत्याख्यया निर्विवादम् ।
अतो येन केनापि योगेन पूर्वानुषङ्गोऽभ्युपैति स्वरूपेऽपि कस्मिन् ॥ ८४ ॥

गुणावलम्बनं दीनोद्धरणायैव मे मतम् ।
तद्युक्तं सगुणस्याद्य तादृक्करणमित्यवैत् ॥ ८५ ॥
अर्जुनेत्यभिधाभाजो - रपार्थस्थितिरेतयोः ।
नोचितेति कृतार्थौ तौ कर्तुमैच्छत्कृपानिधिः ॥ ८६ ॥

अहो दयालुत्वमसीममैश्वरं यद्बन्धनं स्वं ह्यनवेक्ष्य सत्त्वरम् ।
तन्मुक्त्युपायं तरुजन्मतस्तदा व्यचिन्तयत् साधुसदध्वदर्शकः ॥ ८७ ॥

श्रीशकल्पतरु० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने नवमोऽध्यायः ॥ ९ ॥

---

१. अनूर्ध्वा धकार-शून्या च । २. निरर्थिका पार्थभिन्ना च ।

## ॥ अथ दशमोऽध्यायः ॥

कथ्यतामिति : १०.१०.१.

गीर्वाणर्षिरशेषविद् गततमाः शान्त्यादिसम्पत्पदं
तावप्युत्तमगोत्रवृत्तचरितौ भाव्यं न चैवं ततः।
मद्वद्वा किमिदं भवेदिति नृपप्रश्नाशयं चिन्तयं-
स्त्वद्धन्नेति विबोधयन्नकथयत् तत्पूर्वसंस्थां मुनिः ॥ १ ॥

रुद्रस्येति : १०.१०.२.

यत्कृत्यं यत्र शोभावहमतिशुभदं तच्च तत्रैव कुर्या-
न्नैवार्हेऽनर्हकर्म क्वचिदपि हितदृग् यत्स्फुटं मानमेतौ।
कैलासे पुण्यभूमौ सुरसरिति सदाचारकर्मोचितायां
नग्नक्रीडाविहाराद् युवतिभिरभितोऽधः प्रपातं प्रयातौ ॥ २ ॥

वारुणीमिति : १०.१०.३.

यन्नामामात्रकलनेन भुजङ्गवृत्तिं
पाशात्मजाऽगमदजस्रमधः स्थितिं च।
तत्सेविनोः स्थितिरियं न तयोर्न युक्ते-
त्याख्यापयन्नकथयत् स हि वारुणीति[1] ॥ ३ ॥

अन्तः प्रविश्येति : १०.१०.४.

तादृग्दुष्कृतशालिनोरपि तयोः शापावसाने क्षणं
तस्याभूदथ चेन्दिरापति - पदाम्भोज - द्वयालोकनम्।
केनेदं सुकृतेन जातमिति तच्छङ्कां प्रमृद्नन्मुनिः
प्रोवाचा-ऽघहरं सदिष्टसुखदं गङ्गाजल - क्रीडनम् ॥ ४ ॥
यद्वा पुण्यसरिद्वरा-ऽमरसरिज्जाताघकृत् - कर्मणः
पाकादेव स आगतो रुड्डुदयोऽप्यस्याथ तादृक्फलः।

---

१. वरुणकन्या। २. मन्दिरा।

शापोन्मोचनमिन्दिराधिपकृपालाभश्च शान्तर्षिवाङ्-
माहात्म्यादथवर्षि - दर्शन - महापुण्या - दगण्यादभूत् ॥ ५ ॥

यदृच्छयेति : १०.१०.५.

प्रतिकूलेऽनुकूले वा विधौ तदनुसारतः ।
योगोऽपि सहसैवेति स्फुटं विध्युदितोदयात्[1] ॥ ६ ॥

तं दृष्ट्वेति : १०.१०.६.

यद्योगाद् वयमीदृगात्मनि सुखं प्राप्ताश्च यः सर्वदै-
वास्मत्कीर्तिलताप्रसारणचणो यो गुह्यकान्तस्थितिः ।
तस्यानङ्गमहीपतेर्गृहमिदं गोप्यं न कार्यं कथं
तत्पोष्याभिरितीव पर्यधुररं वासांसि देव्यो हि ताः ॥ ७ ॥

द्विषल्लक्ष्यं यथा न स्यात्तथा रक्ष्यं प्रभोर्गृहम् ।
युक्तमालक्ष्य कामर्षिवैरमासंस्तथाविधाः ॥ ८ ॥

यत्कार्यं विहितं फलाय भवति प्रायस्तदेवाचरेत्
प्राज्ञो जातु न वाञ्छितार्थविधुरं लोकेष्वितीदृग् दृशौ ।
वस्त्राच्छादितगुह्ययोरपि न नावाच्छाद्यते गुह्यक-
प्राकट्यं तदनेन किन्त्विति धिया तौ तादृशौ तस्थतुः ॥ ९ ॥

लोके शास्त्रेष्वपि यद्वस्तु निगूह्यं न तत्स्फुटीकार्यम् ।
दोषो विहिते तु महान् विवस्त्रगुह्यकपदादिदं ध्वनितम् ॥ १० ॥

न ह्यन्य इति : १०.१०.८.

काम-मोहा-ऽनृतेष्वेको - ऽप्यलमन्याय-कर्मणी ।
स वाच्यः श्रीमदः कैर्वा त्रयो यत्र विराजिताः ॥ ११ ॥

राजन्नेवमिदं यदत्र हि धनोन्मादोऽघदः सर्वदा
नानानर्थनिदानमक्षिण वितते सूर्यागमेऽप्यान्ध्यकृत् ।
तस्माल्लोकसुखार्थिनाऽपि गिरिजानाथेन मन्ये धनं
नित्यानर्थकृदित्यवेक्ष्य बहुधा तत्त्याग एवादृतः ॥ १२ ॥

---

१. नारदोदयात् देवभाषितोदयाच्च ।

यत्पापर्धि-सुरा-दुरोदर-परस्त्रीहा-ऽपहाराः सदा
संत्याज्या नयकोविदेन विदुषा श्रेयः स्वमाकाङ्क्षता ।
इत्येतद्धि निषेधशास्त्रमवनीपाले प्रवृत्तं च यत्
तच्छास्त्रस्य निदानमेतदखिलैरुट्टङ्कितं नापरम् ॥ १३ ॥
पापर्धेः फलमाप्तवान् दशरथो मद्यादिमौ भूरुहौ
द्यूतात् पूर्वभुवस्तवाप्तगहनाः सुन्दश्च कान्तेहया ।
सीताया हरणेन पङ्क्तिमुख इत्येतत्त्वया ज्ञातम-
प्यर्वाक् सर्वमथापि हन्त कथितं धृत्वोपदेशक्रमम् ॥ १४ ॥

हन्यन्ते पशव इति : १०.१०.९.

पशुहिंसनेऽहमदयो यथा तथा
मम हिंसनेऽपि भवितैव कोऽप्यलम् ।
इति मूढवृत्तिरविदन् खराग्रणीः
कुरुतेति गर्ह्यमिदमद्भुतं न किम् ॥ १५ ॥

देहः किमिति : १०.१०.११

यत्र स्वत्वं तु नाऽस्त्येव परस्वत्वेऽप्यनिर्णयः ।
तद्रतिर्मूढ इत्येतद् देहोदाहरणात् स्फुटम् ॥ १६ ॥
कामर्धिं यश्चिकीर्षुर्भुवि भवति पुमान् यत्नवान् वीर्यवृद्धौ
देहाधीना तदृद्धिस्तदनु नियमतो यत्नवान् देहपुष्टौ ।
तत्तादृग्देहपुष्टिर्भवति नहि विना मद्यमांसाशनै त-
न्निर्मन्तून् हन्ति जन्तूनदयमतिरिहैवं स सश्रीमदो यः ॥ १७ ॥
दृष्ट्वा तौ स तथाविधौ मुनिवरः स्मृत्वा निरुक्तक्रमं
प्रोवाचैवमिति प्रभात्यपरथा कामेक्षणोपस्थितेः ।
निन्द्ये वित्तमदेहि पश्वपहतिः सा देहनिन्दाऽपि च
प्रक्रान्तेन्द्रियदेहशोषणकथाऽप्यग्रे कथं तत्स्तवे ॥ १८ ॥
(युग्मम्)

असत इति : १०.१०.१३.

आत्मवत् सर्वभूतानामालोको येन सिद्ध्यति ।
तत्सर्वतोऽप्यभ्यधिकं स्फुटं दारिद्र्यमञ्जनम् ॥ १९ ॥

असुदृष्टिरपि प्रायो वीक्षते परमं जनम् ।
यद्युक्तेऽक्षिण पुमान् युक्ता दारिद्र्येऽञ्जनवाच्यता ॥ २० ॥

यद् द्रावयत्यखिल-भीतिद-मर्थजातं
यच्छङ्ख-चक्रधरपादरतिं तनोति ।
यद्दुर्मदादि - रिपुवर्गमदं धुनोति
दारिद्र्यमुत्कटतपोऽधिकमित्यगूढम् ॥ २१ ॥

लोभो निष्फलतां प्रयात्यतितरां नोत्पद्यतेऽहङ्कृतिः
क्रोधो न श्रयतेऽपगच्छति मदः कामस्तु निर्वीर्यकः ।
मोहो मोहमुपैत्यमत्सरगतिर्यद्योगतो जायते
पुंसः सिद्धवदप्रयत्नमिति तद् दारिद्र्यमीड्यं न किम् ॥२२॥

इन्द्रियाणां वशीकारप्रकारो दुष्करो मुनेः ।
स चेत्सेत्स्यति यद्योगात्स्पृहणीयं न कस्य तत् ॥ २३ ॥

विद्वत्सद्मनिवासिनी च जनताऽनभ्यर्हितं चावनौ
दारिद्र्यं सुतपस्विभिः सह तपस्तप्त्वा प्रसाद्येश्वरम् ।
यत्र त्वं वससि प्रसादसुमुखस्तत्र स्थितिर्मेऽस्त्विति
वव्रे तद्धरमीदृशं यदुभयोर्व्याप्तिर्जने प्रायशः ॥ २४ ॥

साधूनामिति : १०.१९.१८.

युक्तैव हि धनोपेक्षा मुकुन्दपदसेविनाम् ।
निधौ लब्धे निरवधौ कः सुधीरल्पदृग्भवेत् ॥ २५ ॥

तदहमिति : १०.१०.१९.

सम्पत्काममदावलम्बनमिदं कं वा न विभ्रंशये-
दुत्कृष्टान्वयशालिनं निजपदात्सद्योऽनवद्यादपि ।
एकस्तत्र विशेष एष सुमती रुष्टोऽपि तुष्टोऽपि तत्
कर्मावेक्ष्य तदीयमेव कुशलं शापाद्वराद्वेच्छति ॥ २६ ॥

---

१. अनुत्तमदृष्टिः प्राणदृष्टिश्च । २. उत्कृष्टम्, परम् अं विष्णुं च ।
३. विष्णुः निधिविशेषश्च ।

यदिमाविति : १०.१०.२०.

निरावरणमात्मानं वीक्षते नापरोक्षकम् ।
तत्किन्नराविमौ मूर्खौ स्थावरावेव मन्महे ॥ २७ ॥

वासुदेवस्येति : १०.१०.२२.

उपास्यरूपात्मकता यदा च्युता तदैव लभ्या पुनरात्मनः स्थितिः ।
युक्तं मुनिर्वाचमुवाच तादृशस्थितिं तयोः स्थाणुपदैकसेविनोः ॥ २८ ॥

पुत्राविमौ धनपतेरिति नित्यसम्प-
च्छोभाऽनयोः समुचिता, न मदस्ततोऽसौ
हर्तव्य इत्यति-विविक्तमति-र्मुनीन्द्रो
युक्तं निनाय तरुजन्म सुपत्रशोभम् ॥ २९ ॥

यत्तपोभिरपि दुष्करैरिहा-ऽलभ्यमभ्युदित - सद्वरैरपि ।
शापलभ्यमिह तत्कथं भवेत् स्थाणुतामिति न तौ निनाय सः ॥ ३० ॥

शापो नाभिनवो दत्तो रुष्टेन मुनिना तयोः ।
यत्सदा शापता जागर्त्यलमुन्मादकारिणी ॥ ३१ ॥

एवमुक्त्वेति : १०.१०.२३.

कोपोऽथवा तदुदिताघफलाश्रितोऽन्यः
कार्यो न जातुचिदिति स्फुट आर्षमार्गः ।
क्वापि च्युतो यदि तदा तदघापनुत्यै
नारायणेक्षणमिति क्षममेनमागात् ॥ ३२ ॥

उक्तं मया यदिदमस्य पुरो यथार्थ
भावो न तादृशतपोविधिमन्तरा स्यात् ।
आलोच्य विच्युत-विकल्पन-मच्युतांश-
नारायणाश्रममसौ यदगात् तदीड्यम् ॥ ३३ ॥

---

१. देहं चिद्रूपं च । २. वाहनानि पर्णानि च । ३. पत्रशाखाशून्यो वृक्षः शिवश्च । ४. दिक्पालता सशापता च ।

आलक्ष्य सञ्चित-वसुव्ययमत्र लोक-
स्तत्सङ्ग्रहाय यतते पुनराप्तसङ्गात् ।
तच्छापतो निजतपोविलयं विभाव्य
युक्तं पुनः स तदुपार्जनधीस्तमागात् ॥ ३४ ॥

प्राग्वासना दृढतरा भवतीह यादृक्
स्यादन्यजन्मनि तथा फलभागवश्यम् ।
प्रागङ्गनाश्रितमती यदिमौ तरू तौ
भूयोऽङ्गनाश्रितगती च तदापि जातौ ॥ ३५ ॥

देवर्षिरिति : १०.१०.२५.

कृपादृगीक्षणादेव मोक्तुं तौ शक्तिमानपि ।
यत्तत्सान्निध्यधीरीशस्तत्र हेतुर्मुनीन्द्रगीः ॥ ३६ ॥

एकः प्रियो धनदजावपरौ द्वयोर-
प्यावश्यकं यदपि सद्धितचिन्तनं मे ।
तत्राप्यकृत्रिम-यशस्करमाद्य-मन्यत्,
नेत्यच्युतः स किल तद्गिरि दत्तचित्तः ॥ ३७ ॥

इत्यन्तरेणेति : १०.१०.२६.

यदाऽहमन्तरोल्लासी क्लेशहानिस्तदैव हि ।
निदर्शनाय लोकानां द्रुमयोरन्तरे स्थितः ॥ ३८ ॥
विनान्तरगतिं न स्यादुद्धारो युगपद् द्वयोः ।
तुल्यस्थित्योरिति श्रीशस्तादृशस्थितिभागभूत् ॥ ३९ ॥

विहितो गुणावलम्बो यदि विनियोज्यः परोपकृतयेऽसौ ।
निखिलैरेतद्धरिणा तद्गुणभाजा दयाब्धिना ध्वनितम् ॥ ४० ॥

चैतन्य - व्यापृतिर्वेदै - रात्मनिर्वेशनोत्तरम् ।
या प्रोक्ता तामभिव्यक्तामाधात् तत्कृतितः प्रभुः ॥ ४१ ॥

---

१. स्त्री । २. चत्वरम् । ३. नारदः ।

खलपदभाग्यः स च न त्वद्गुणवानपि जहाति निजभावम्।
तादृगुलूखल - मभवत् तिर्यग्गतमेव गोपते यस्मात्॥ ४२॥

बालेनेति : १०.१०.२७.

पुंसस्तद्गुणभाजस्तिर्यग्गतिरपि परोपकृतये स्यात्।
अकृतोलूखलमिह यत् तादृशमपि तौ कुजन्मिनावनघौ॥४३॥

सति प्रसङ्गे परमोपकारः कार्यः स जातौ गुणिनाविशेषात्।
लसद्गुणोलूखल-माप्तवृक्षे, तदोपकारं यदधात् क्षमं तत्॥ ४४॥

इतरेषु युगेषु योग्यभावं
समुदीक्ष्यैव समुद्धृतिं करोमि।
कृपयेह युगे कुजन्मभाजा-
मपि पातेति तरूद्धृते-रबोधि॥ ४५॥

स्वानुगविहितं कर्म हि यथायशोदं तथा न निजविहितम्।
ज्ञात्वेत्यकरोदीश - स्तदुद्धृतिं तामुलूखलद्वारा॥ ४६॥

भगवति समदृष्टावप्यदृष्टप्रधानः
प्रभवति फलभागी तारतम्येन लोकः।
स्फुटमिह पॅलसङ्गेनागमौ तौ कृतार्था-
वनुगतमपि तत्रोलूखलं प्राग्वदासीत्॥ ४७॥

मुख्यो हेतुर्भवति भुवने स्वोद्धृतौ भावनैव
बद्धोऽबद्धः प्रभवतु गुरुस्तत्र हेतुर्न चैषः।
बद्धेऽपीशो यदिह भगवद्भावनातः स्वरूपं
प्राप्तौ मुक्तेऽप्यपरतरवो नैव यत्तद्विहीनाः॥ ४८॥

न तेन स्याद् वृद्धो भवति पलितं यस्य हि शिरो
युवा वा बालो वा सकलगुणवान् यः स हि गुरुः।
त्वया श्रुत्यर्थोऽयं धनद-तनुजा - ऽनुग्रहकृतौ
कृतो व्यक्तस्तत् किं वदसि शिशुरस्मीति वितथम्॥ ४९॥

---

१. वृक्षौकुत्सितप्राणिनौ च। २. सूक्ष्मकालविशेषः।

उत्कलिताङ्घ्रिबन्धाविति :

नेत्रात्मनः कुलीनस्य लोकादृश्यविहारिणः ।
बन्धो न युक्त इत्याधात् तदङ्घ्रिश्लथबन्धनम् ॥ ५० ॥

अतोऽर्हतः स्थावरतामिति श्लोकाङ्घ्रिणर्षिणा ।
कृतो बन्धः सशैथिल्यं नीतः श्रीशेन तन्मिषात् ॥ ५१ ॥

प्रारब्धसौख्यमवशेषतयाऽस्ति भोग्यं
तस्मादिमौ परममुक्तिपदे न योग्यौ ।
सर्वांशतः प्रभुरितीव विचिन्त्य मुक्तौ
तौ तन्मिषेण विदधे किल पादबन्धात् ॥ ५२ ॥

कृतचण्डशब्दाविति :

बालोऽहमेतौ च प्रवालयुक्तौ विटोऽहमेतौ विटपाश्रितौ स्तः ।
अन्योन्यसम्बन्धमिमं समीक्ष्य यथोचितं कुर्विति तौ सशब्दौ ॥ ५३ ॥

कुजस्य मङ्गलार्थत्वं येनाकारीश तस्य ते ।
नान्यथाकरणं युक्तमधुनेतीरितं रवात् ॥ ५४ ॥

तत्र श्रियेति : १०.१०.२८.

दण्डवत्पतनं कार्यं जडैरनधिकारिभिः ।
नमःसद्भिरिति स्पष्टं तरुतर्जकृतावभूत् ॥ ५५ ॥

सर्वेष्वपि तरुष्वास्ते वह्निरित्यखिलप्रथा ।
औपम्यात् स्पष्टमत्रोक्ता धनञ्जयपदेऽर्जुने ॥ ५६ ॥

वृक्षभेदेऽपि तज्जात-वह्निभेदो न रूपतः ।
तथैकमासीत् तद्रूपमित्येकवचनात् स्फुटम् ॥ ५७ ॥

जगदिव नश्वरवृत्तिर्महागमोऽस्मादुदञ्चितं वस्तु ।
सत्यमिति व्यक्तमभूद् भग्नद्रूदितमहापुरुषयोगात् ॥ ५८ ॥

सत्सङ्गादभवदधोगतिः खलाङ्घ्रेः स्पर्शाच्चाच्युतपददर्शनानुभूतिः ।
तन्मन्ये न तदुभयं निदानमस्मिन् किन्तु श्रीमदतदभावयोः फलं तत् ॥५९

१. नायकरूपस्य मूलरूपस्य च । २. भूमिलीनस्य उत्तमकुलोत्पन्नस्य च । ३. चरणः । ४. अङ्घ्रिः, चतुर्थांशश्च । ५. पल्लवः उत्कृष्टबालश्च । ६. वृक्षविस्तारः जारपालश्च । ७. भौमः वृक्षश्च । ८. नलकूबरमणिग्रीवौ ।

कृष्ण कृष्णेति : १०.१०.२९.

आवाभ्यां यदकारि दुर्विलसितं नास्मत्कृतं तत्प्रभो
यत्तद्वक्त्रविनिर्गतं च वचनं तच्चापि नैतत्कृतम् ।
यत्सर्वान्तरवृत्तिवर्तकतया त्वं सर्वदा राजसे
तत्ते तादृशमीदृशोपकृतये मन्यावहे आशयम् । ६० ॥

गृह्यमाणैरिति : १०.१०.३२.

गुणसंवृतानगुण एव विभो त्वं
खलु वीक्षसे न विगुणः सगुणं त्वाम् ।
तव लीलयैव भगवन् सगुणं त्वा-
मगुणावपि स्फुटमिहानुभवावः ॥ ६१ ॥

तस्मै इति : १०.१०.३३.

स्वप्रकाश्यगुणच्छन्नमहिमाऽसीति केवलम् ।
न गिरैवोक्तमद्येश कृपया दर्शितं हि नौ ॥ ६२ ॥

यस्यावतारा इति : १०.१०.३४.

यल्लोके न कदापि देहिकृतितः संभाव्यते दुर्घटं
तत्कृत्यं भुवि लीलयैव कुरुते यः सोऽवतारी पुमान् ।
लक्ष्मैतत्स्फुटमेव जातमधुना बद्धोऽपि यद्बन्धना-
दावां मोचितवान् सलीलमिति किं नाद्यापि निर्णयः ॥ तन्निर्जनः
निजभक्तोद्धृतये त्वं भूत्वा सगुणः करोषि निजविहृतिम् ।
अज्ञा बद्ध इति त्वां वदन्ति सत्यं तदेतदिति भगवन् ॥ ६४ ॥

स भवानिति : १०.१०.३५.

यन्नारायणनाम चेदवशतो वक्त्रात् सकृन्निर्गतं
यस्यासौ दुरितं विधूय भवति श्लाघ्यस्त्रिलोकेष्वपि ।
स त्वं योगविदप्रमेयचरितोऽप्यद्धाऽद्य दृष्टोऽसि यत्
तत्पुण्यानि कृतार्थता च भगवन्नावां किमाचक्ष्महे ॥ ६५ ॥

श्रुतिमात्रतोऽपि सगुणं तव रूपं
भुवि यैरवेदि ननु तेऽपि विमुक्ताः ।
भगवन् भवन्ति पुनरद्य तु तादृक्
परिपश्यतोः स्फुटमनन्तसुखाप्तिः ॥ ६६ ॥

अनुजानीहि इति : १०.१०.३७.

यदामयच्छेदि सुखैककारणं तदौषधं कद्विति को नु वर्णयेत् ।
तथा रमानाथ तवप्रसादको न चैष शापोऽयमनुग्रहो महान् ॥ ६७ ॥

वाणी गुणान्विति : १०.१०.३८.

यशोदयाऽनुसंयतो गुणोऽजनीह कारणं
निजोद्धृताविति स्म तौ विचिन्त्य चेतसा चिरम् ।
गुणानुवर्णनार्थनां यदादितो हि चक्रतुः
क्षमं यतो जनोऽखिलो निजेष्टकृत्स्तुतीक्षणः ॥ ६८ ॥

श्रीमदेष्वन्धता नित्यमस्त्येवेति विभाव्य तौ ।
चक्राते प्रार्थनां युक्तं दृष्टिरस्तु सदीक्षणे ॥ ६९ ॥

ईदृग्जघन्यरूपस्थितिकारणमेकमेव सदवीक्षा ।
जानन्ताविति युक्तं सद्दर्शनदृगवधानमवृणीताम् ॥ ७० ॥

यद्यदर्थितमेतेषु वितर त्वं यथारुचि ।
परमानन्दकन्दं तु साधुसङ्ग दिशानिशम् ॥ ७१ ॥

यत्तातो राजराजो धनमपि निधयो यक्षकन्या रमण्यो
रूपं कामाभिरूपं वपुरपि तरुणं पुष्पकं यानमस्ति ।
पूरेषां चालकाऽपि प्रभुवर भवतो दर्शनादस्ति मोक्ष-
स्तन्नान्यत्प्रार्थनीयं किमपि दिश तवाविस्मृतिं कृष्णनाम्नः ॥ ७२ ॥

प्रहसन्नाहेति : १०.१०.३९.

मुक्तोऽहमस्मि यदमुक्तजनस्तुताङ्घ्रि-
र्युक्तं तदेतदधुना तु तदन्यथैव ।

---

१. बद्धः । २. नगरी ।

इत्यात्मचित्रचरितोल्लसितान्तरङ्ग-
तोषः स एष भगवाननुचितं जहास ॥ ७३ ॥

सद्यः फलत्यघद - कर्म कृतं तु पुण्यं
तादृङ् न किन्तु समयान्तरदर्शितेष्टम् ।
यत्तत्क्षणं मुनिगिरा तरुतामवाप्तौ
लब्धाच्युतेक्षणतया च न मुक्तिभाजौ ॥ ७४ ॥

पुण्यापुण्ये कर्मणी द्वे अपीह लोके स्यातामाश्ववश्यं फलाढ्ये ।
तत्राप्याद्यं नान्त्यवद्यत्स चौर्यात्सद्योवन्धं प्राप मुक्तिं न पुण्यात् ॥७५॥

साधूनामिति : १०.१०.४१.

यः परं बोधयेद् बद्धोऽप्यद्धा प्रारब्धकर्मणा ।
तच्छ्रेयसैव तन्मुक्तिः स्यादितीशगिरेरितम् ॥ ७६ ॥

तद् गच्छतमिति : १०.१०.४२.

मयि निष्ठा दृढा येषां तेषां शिष्टोऽपि भोगतः ।
भवोऽपि विभवायैवेत्यबोधि हरिणाऽऽशयः ॥ ७७ ॥

यो मुक्तः स्वयमन्यमोचक इति श्रुत्येरितः श्रीपते-
स्तस्याऽस्यां भुवि वन्धनं लघुगुणैर्मात्राकृतं दृश्यते ।
आगस्त्वेकमिदं परं यदधुनाऽमुक्तस्य मोक्तुः परा-
नन्यो मोचक इत्यसाध्विति तथैवामन्त्र्य तौ जग्मतुः ॥ ७८ ॥

यावदेष सगुणोऽस्ति सौख्यदस्तावदेव सुलभश्च चक्षुषा ।
निर्गुणस्तु नहि चेतसाऽप्यलं द्रष्टुमित्यनुगतौ तथैव तौ ॥७९॥

स्वस्त्यस्तूलूखलास्मिंस्त्वदुपकृतमिदं केन वा विस्मरावः
संप्राप्तस्वात्मरूपा - वतुलहरिकृपा - ऽलङ्कृतौ येन जातौ ।
तत्पृष्ट्वा त्वां व्रजावो निजसदनसुखं भोक्तुमेतज्जपुण्यात् त्स्ये
स्वस्थस्त्वं चात्र भूया यदुपतिगुणशार्वमामन्त्रिताभ्याम् ॥८०॥

तेनाकारि तदुद्धृतिस्तदुचितं साजात्यभाजा पुन-
स्ताभ्यां तादृगुलूखलं न कृतमित्यात्तोपकृत्या त्वियम् ।

शङ्का सा नियतस्तदस्ति सगुणब्रह्मावलम्बादलं
मुक्तादप्यतिसौख्यभागिति तथैवाऽऽमन्त्र्य तत्तौ गतौ ॥ ८१ ॥

बद्धोलूखलमामन्त्र्येत्यत्र ह्यामन्त्रणं द्वयोः ।
श्रीशोलूखयोर्भातीत्युक्तमुक्तक्रमाद् द्वयम् ॥ ८२ ॥

याभ्यां साकं तव समभवच्छ्रीपते वाग्विहारो
वृत्तिः शिष्टा तदपि च तयोरुत्तरांशावलम्बे ।
येषां प्रश्नप्रथितवचसां नापरोक्षं तवास्ति
तेषां न स्यात् कथमिह मनश्चोत्तराशांऽवलम्बि ॥ ८३ ॥

जडजातमध्यभाजा निपात्य खलमच्युतेन गुणबद्धम् ।
सार्गमकृष्टिर्विहिता सत्या मत्स्यावतारवदिहापि ॥ ८४ ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने दशमोऽध्यायः ॥ १० ॥

---

१. उत्तरदिशा प्रतिवाक्याशा । २. वृक्षः वेदश्च ।

॥ अथ एकादशोऽध्यायः ॥

गोपा इति : १०.११.१.

आगमभङ्गश्रुतिरिह सिद्धाभीरसकरा सुखस्थितिहृत् ।
युक्तं भग्नागमभवरवभीविवशान्तरास्तदाऽऽसंस्ते ॥ १ ॥

निर्नाम निर्गुणमभाणि यदीयरूपं
याभ्यां सदैव बहुसभ्यजनाञ्चिताभ्याम् ।
दृष्टे सनामनि गुणिन्यपि तत्स्वरूपे
सिद्धोऽर्थोऽतो ननु तदागमभूरिभङ्गः ॥ २ ॥

भूम्यामिति : १०.११.२.

यदागमस्थं सल्लक्ष्यं चक्षुषा ये दिदृक्षवः ।
सिद्ध एव भ्रमस्तेषां तदविज्ञानपूर्वकः ॥ ३ ॥

सदङ्गनानारतनेत्रसक्तौ[1] खलप्रसङ्गे च निपातहेतौ ।
लक्ष्येऽपि तेषामभवद्भ्रमो यः सकण्ठचामीकरवत्प्रसिद्धः ॥ ४ ॥

बाला ऊचुरिति : १०.११.४.

मधुरं पीयूषादपि प्रमाणमाम्नायतोऽपि बालवचः ।
श्राव्यं श्रुतिसुखकरमिति शिष्टोक्तावेतदेव मानमभूत् ॥ ५ ॥

खलगणमुलूकगणमिव हरि[3]रिव हरिरिह गुणैरसंख्यातैः ।
दिग्भ्रमकलितं कुर्यादित्याम्रेडितवचोऽर्थ एष मुनेः ॥ ६ ॥

विलोक्य नन्द इति : १०.११.६.

सदागमस्थो देवेशो दृश्यस्तस्याप्रयत्नतः ।
यस्तद्गुणेक्षणो भूयात्तत्र नन्दो निदर्शनम् ॥ ७ ॥
मातेव बन्धनोद्युक्तो नाहमसीति बोधयन् ।
सनन्दस्तद्भयोच्छित्त्यै प्रहसद्वदनोऽभवत् ॥ ८ ॥

---

१. चत्वरं स्त्री च । २. मूलं चक्षुश्च । ३. सूर्यः ।

सर्वेषामविशेषतोऽसि भगवन् त्वं बन्धनोन्मोचक-
स्तत्राऽहं तु पिता तवेति न मनागत्रार्थनापेक्षणम् ।
आस्तामेतदथापि सम्प्रति मया त्वं तादृशोऽपि प्रभो
बन्धान्मोचित इत्यसूचयदसौ किं वा सहासाननः ॥ ९ ॥

सदानन्दस्वभावो यत् परबन्धविमोचनम् ।
नात्र चित्रं तदा नन्दः स्वात्मजाते तथाऽकरोत् ॥ १० ॥

मात्राकृतादात्मबन्धान्मोचयेद् यः कृपानिधिः ।
स चाचार्यः पितैवास्मिन्निति नान्यैरकारि तत् ॥ ११ ॥

अन्य एव मम बन्धको भवत्यन्य एव मम मोचकोऽपि च ।
न स्वतोऽस्ति मम बन्धनं न वा मुक्तिरित्यकृत स स्फुटार्थकम् ॥१२॥

गोपिभिरिति : १०.११.७.

बद्धः सन्नेव जीवोऽस्मिन् क्रीडत्येवमहं पुनः ।
मुक्तः सन्निति वैचित्र्यं स्वं तदूर्ध्वमदर्शयत् ॥ १३ ॥

तावत् स्वकर्मकलितोऽप्यवभाति बन्धो
यावन्न चैक्षि गुरुणा करुणाक्षिणाऽस्मिन् ।
दृष्टे तु तत्क्षणमपस्मृतबन्धभावः
स्वैरं व्रजे विहरतीत्यकृत स्फुटं सः ॥ १४ ॥

दर्शयन्निति : १०.११ ९.

सौख्यं भक्तिभृतां भविष्यति यया तामेव बाल्यच्छला-
लीलामाकलये न तत्र गणये मानापमानौ क्वचित् ।
इत्थं स्वस्य सदा स्वभक्तवशतां सार्वांशिकीं बोधयन्
मन्ये गोप्यनुशासनेन विदधे क्रीडामसौ तन्मुदे ॥ १५ ॥

आधायात्मनि तत्त्वदृष्टिमचलां संत्यज्य चाहङ्कृतिं
स्वैरं वृत्त्यनुरोधतो विहरणं यत्संसृतौ निर्भयम् ।

१. रूपादिपञ्चविषयाः जनन्या च ।

जीवन्मुक्तदशाऽपि सैव गदितेत्यारात् परान् बोधयन्
मन्ये गोप्यनुकूल एव भगवांस्तादृक्तदाऽऽसीद् व्रजे ॥ १६ ॥

सरित्तीरगतमिति : १०.११.१२.

मामर्जुनसखं भग्नार्जुनेत्याकारयत्यसौ ।
कथमित्यच्युतो रोषान्नाहूतोऽप्यायया तदा ॥ १७ ॥

जन्मर्क्षं रोहिणीयं च रोहिणीत्येकनामतः ।
स्वार्थमाकारयत्येषा तन्मे किमिति नागमत् ॥ १८ ॥

नोपेयातामिति : १०.११.१४.

रामस्याप्युपचारचारु - कुतुकक्रीडा - यशोदागृहे-
ष्वेवासीन्न तु रोहिणीगृहभुवीत्येतच्चरित्रात् स्फुटम् ।
तद्युक्तं स यशोदया गृहमुपानीतः स रामोऽच्युतो
युक्तं सा सुतवत्सलेति च तदाह्वानाय तां प्राहिणोत् ॥ १९ ॥

न रोहिणीगृहे क्रीडाप्रचारो हरिणा कृतः ।
तद्धितं[1]प्रत्ययो मा भूद् व्यक्तोऽत्रेत्याशयाद् ध्रुवम् ॥ २० ॥

यदि व्रजाम्येक एव हित्वा कृष्णमहं पुरः ।
तन्मे शेषं[2]गतिर्न स्यात् सिद्धाऽतः सोऽपि नाव्रजत् ॥ २१ ॥

कृष्णेति : १०.११.१५.

यद्भग्नार्जुननामतः प्रभुरसावाकारितो नाऽऽययौ
प्रागाच्च स्फुटमादरेण सविधं कृष्णाच्युतेत्याह्वयात् ।
सत्येष्वप्यखिलेषु नामसु परेष्वेतानि नामानि मां
भक्तायत्त[3]तया नयन्ति वशतामित्यात्मकृत्येरितम् ॥ २२ ॥

प्रतीक्षते त्वामिति : १०.११.१७.

साध्वी सा व्रजपा[4]नुशासनचणा संभोक्ष्यमाणं व्रजा-
धीशं यत्पुरतो विधाय सुखिनी जाताऽच्युतप्रीतितः ।

---

१. तस्या हितं रोहिण्या अपत्यमिति । २. बलरामोऽपि । ३. भक्ताधीनत्वेन । ४. नन्दः ।

एवं या भुवि भोक्तृजीवमनघा कृत्वाऽग्रतः प्रार्थये-
च्छ्रीशं वृत्तिरसावपि प्रभवति सानन्दवृत्तिस्तथा ॥ २३ ॥

तद्देवान्वर्थकं नाम यदर्थालङ्कृतः पुमान् ।
प्रसाद्येशमभूत्स्पष्टं यशोदा सा यशस्विनी ॥ २४ ॥

आहूतोऽहमनागतोऽप्यनुदितोपेक्षं मुहुर्यन्मति-
र्मा मेवैति यशोदया हितदृशा मत्प्राप्तिबद्धस्पृहा ।
भूत्वा तत्सुलभस्ततश्च सहितस्तेनामृताभ्यर्हितं
भोक्ष्ये भोज्यमिति व्यबोधि हरिणा भोक्त्रा पितृभ्यां सह ॥२५॥

गोपवृद्धा इति : १०.११.२१.

बृहद्-भववने सन्ति नोत्पाताः कति भीतिदाः ।
रक्षिता तत्र तत्रास्ति श्रीश इत्यभवत् स्फुटम् ॥ २६ ॥

गोकुलसङ्गादर्जुनपतनमभूत् तत्र का परस्य कथा ।
तस्मादस्य न सङ्गः समुचित इति युक्तमवददुपनन्दः ॥ २७ ॥

कर्ता जीवस्तस्य तत्कर्मसाक्षी द्वावप्येतौ गोकुलाधिष्ठितौ स्तः ।
युक्तं तादृङ् नन्दमूचे तदाऽसौ यत्तस्याग्रे रोचते चेदियं गीः ॥२८॥

वनं वृन्दावनमिति : १०.११.२८.

स्याच्चेदीशकृपा तदा न भविता बाधा कुतः कर्हिचित्
प्रत्यूहप्रचयस्तु गोकुलजुषां प्रादुर्भवत्यन्वहम् ।
तस्मात्सोऽपि भवेन्न यावदमले तावद् विविक्ते वने
स्थेयं बुद्धिमतेत्यवोचदुचितं वृन्दावनस्थायिताम् ॥ २९ ॥

न योगशिक्षा न च मन्त्रदीक्षा तपःसमीक्षाऽपि न विघ्नहन्त्री ।
कलावलं गोकुलवासिनां तु सदेकवृन्दावनदृष्टिरेव ॥ ३० ॥

उत्पाद्य स्वयमेव विघ्ननिचयं दुर्भीतिमात्रप्रदं
चेतः प्रेयसि गोकुलेऽप्यलमनासक्तिं समुत्पाद्य च ।
सद्-वृन्दावनपुण्यशालिनमहं कर्ताऽवनौ भक्तमि-
त्यद्धाऽबोधयदच्युतो व्रजजनं वृन्दावने योजयन् ॥ ३१ ॥

तच्छ्रुत्वेति : १०.११.३०.

यत्रैकमत्यं किं तत्र दुस्त्यजं दुर्लभं च वा।
यद् गोपैर्गोकुलं त्यक्तं लब्धो वृन्दावनक्रमः ॥ ३२ ॥

गोधनानि पुरस्कृत्येति : १०.११.३२.

साधुवृन्दावने दिव्याः साधनानि गिरः सताम्।
इत्यध्वन्यध्वनि[1] तदा गोपुरस्करणेन तैः ॥ ३३ ॥

पुरोहितं[2] ये पश्यन्तः प्रणवोत्सवशालिनः।
वृन्दावने[3] क्षणोल्लासा युक्तास्ते श्रितगोधनाः[4] ॥ ३४ ॥

वृन्दावनमिति : १०.११.३५.

क्षेत्राणि तीर्थान्यपि साधनानि बहूनि किञ्चित्सुखदानि सन्तु।
नित्यानवद्यस्वसुखप्रदा तु तत्साधुवृन्दावनवृत्तिरेव ॥ ३५ ॥

उत्तमा प्रीतिरिति : १०.११.३६.

यदभीष्टमप्रयत्नाल्लब्धं तच्चेत् सुखाय युक्तमतः।
गोवर्धनसक्तमतेरासीद् गोवर्धनेक्षणात् प्रीतिः ॥ ३६ ॥

वत्सपालाविति : १०। ११. ३६.

[5]गवावनविहारोऽयं विना गोजातपालनम्।
रम्यो न स्यादिति श्रीशः प्रागधाद्वत्सपालनम् ॥ ३७ ॥

कामोऽसौ भृगुपादचिह्नमपि च श्रीवत्स[6]संज्ञाङ्कितौ
तत्राद्यस्तु सतां परोऽपि यदभून्मे लाञ्छनायाश्रयात्।
आलोच्यैवमिहाच्युतः समभवद् गोवत्स[7]पालोऽधुना
सत्कीर्तिप्रदपुत्रलालनरतिः सिद्धा हि पित्रात्मनि ॥ ३८ ॥

श्रीवत्समेवानिशमन्तरङ्गे संलालयन्तं प्रसमीक्ष्य मां गौः[8]।
सापत्न्यखिन्ना न भवत्विती शो नाना तदीयानवति स्म वत्सान् ॥३९॥

---

१. ध्वनितम्। २. पुरः हितं उपाध्यायं च। ३. समूहावनम्। ४. भूः धनं च। ५. भूम्यवनम्। ६. लक्ष्म्या वत्सः तत्संज्ञकं चिह्नं च। ७. पृथ्वीवत्सो धेनुवत्सश्च। ८. भूः।

क्वचिदिति : १०.११.३९.

श्रीकृष्णकरुणा पूर्णा यदि तत् किं नु दुःशकम् ।
साधु वृन्दावनक्रीडा वालैरप्युररीकृता ॥ ४० ॥

यमुनातीर इति : १०.११.४१.

सूर्यात्म[1]भूतिसविधस्थितिरेव पुंसो
[2]गोजातवृत्ति-सदसत्फुटनिर्णयेऽस्मिन् ।
हेतुर्भवत्यलमिति प्रभुरह्नि तस्मिन्
गोवत्सचारणमधाद् यमुनातटे सः ॥ ४१ ॥

दत्य इति :

यस्याग्रे स्थितमात्रमुत्तमतमश्रीकं प्रसह्याहृतं
येनासौ क्षुभितेन्द्रियो भवति तं हन्तुं प्रकृष्टोद्यमः ।
एतत्सर्वजनप्रसिद्धमिति यत्तद्व्यक्तमेवाच्युतं
वत्सोऽसौ तृणनाशनोत्तरमगाद्रोषेण पूर्णोऽसुरः ॥ ४२ ॥

न नूतनाभ्यासिनो दृष्टिस्तादृक् पाकमुपैत्यतः ।
श्रीशवञ्चनधीरागात् तद्रूपेण तदाऽसुरः ॥ ४३ ॥

मयि वत्से वत्सपोऽयं नान्यथाभावमेष्यति ।
इत्यन्तराहितमतिस्तद्रूपेण किमागमत् ॥ ४४ ॥

पातालवत्सासुरमग्रज त्वं वीक्षस्व वत्सौघमितीन्दिरेशः ।
तन्निश्चयायैव बलाय दर्शयन् वत्सौ[3]सुरक्षोभित[4]मानसोऽभूत् ॥ ४५ ॥

गृहीत्वेति : १०.११.४३.

यथा दुष्टहतिः साम्ना न क्रौर्येण तथेति किम् ।
जघान धृत्वा तत्पादौ वत्सासुरमपीश्वरः ॥ ४६ ॥

कंसोऽर्धभारो ह्ययमर्धभारो भूमेस्तदेतद्धननात्करोमि ।
भूमिं भरार्धापनयात्सुखाढ्यां क्रान्तद्विपादेन किमन्ववोधि ॥ ४७ ॥

---

१. पण्डितपुत्रो यमुना च । २. वाग्मी धेनुश्च । ३. दैत्यः वत्सप्राणाश्च ।
४. क्षुब्धं रक्षणपूर्णं च ।

रक्षोहतौ मम पुरा बहुसाह्यभाजो
गोलाङ्गुलाः[1] समभवन्निति स स्मृतार्थः ।
तद्वत्समानसहितं[2] खलहानये गो-
लाङ्गूलमात्मकरतो जगृहे किमीशः ॥ ४८ ॥

कपित्थाग्रेति :

असुरहित[3]काङ्क्षयाऽत्र प्राप्तो वत्सासुरोऽयमिति ।
असुरहितो[4]ऽकारि मया भवत कपित्था हि साक्षिणो यूयम् ॥४९॥

स कपित्थैरिति :

श्रीशेन स्वदशेक्षितोऽप्यनुगृहीतोऽप्युद्धृतोऽपि स्ततो
दुष्टात्मा निजदुष्टतां त्यजति नेत्येतद्यथार्थं यतः ।
मन्ये नित्यसमुन्नतान् सुमहतस्तादृक् स वत्सासुरः
स्वीयाधःक्षणसङ्गतोऽनयदधःपातं कपित्थानहो ॥ ५० ॥

यथा कण्टकः कण्टकेनापसार्यस्तथा दुर्जनो दुर्जनेनेति जानन् ।
स दुर्ग्राहिण[5]स्तान् कुजातानधःस्थान् कुजातेन तेनाकरोद्युक्तमेतत् ॥५१॥

समदृष्टिः परेशस्तु सर्वोद्धृतिधृतव्रतः ।
तत्र पापादधो याति पापी वत्सासुरो यथा ॥ ५२ ॥

गोर्जातेषु[6] परेशगामिषु परं गोजातमागन्तुकं
दुर्बोधं तदसाधु कारकपदं[7] वादिप्रविष्टं यदि ।
तेभ्यः शेषमतं[8] विभाव्य मतिमान् निष्कास्य धृत्वा पदे
तत्कुर्यादचिराद्व्यसुप्रकृतिकं तद्योगतो भ्वाश्रितम् ॥ ५३ ॥

धृत्वा पदे वत्सगतासुरन्तं निष्कास्य तेभ्योऽग्रजमाविलोक्य ।
व्यसुं च भूस्थं हरिणात्र कुर्वता तद्रूपकेणेदमबोधि सर्वम् ॥ ५४ ॥

---

१. वानरविशेषाः । २. वत्सासुरः यः तद्वत् सः, मानसहितम् । ३. दैत्यः । ४. प्राणरहितः । ५. दुष्टग्रहणशीलान् कपित्थांश्च । ६. वाक् । ७. षटकारकाणि । ८. सुबन्तादि । ९. व्याकरणम् ।

मत्पाल्यमानमनुजेषु हि तज्जिघांसुः
प्राप्तः खलो विधृतकृत्रिमतद्वपुश्चेत् ।
हत्वा तदैव तमहं सुखयामि नैजान्
वत्सासुरासुहतितः प्रभुणेत्यबोधि ॥ ५५ ॥

ते वीक्ष्येति : १०.११.४४.

दैत्यध्वंसं यत्ततोऽहं करिष्याम्येवंपूर्वं यत्प्रतिज्ञातमासीत् ।
तस्यारम्भो दर्शितोऽद्याच्युतेनेत्यानन्दात्ते साधुपुष्पाण्यमुञ्चन् ॥५६॥

ते तत्रेति : १०.११.४७.

स्यात् सत्त्व[1]मप्यसाधौ चेद्भवेत् त्रासकृदेव यत् ।
जडाशये महासत्त्व[2]स्थितिस्तत्रासदाऽभवत् ॥ ५७ ॥
अतिशुद्धाकृतेरन्तर्मालिन्यं प्रायशः स्थितम् ।
दीपस्येवेति तं भीता ददृशुर्दूरतोऽर्भकाः ॥ ५८ ॥
शुद्धाकृतिं समीक्ष्यैव सहसा तत्समागमः ।
नैव कार्य इति व्यक्तं वकबालनिदर्शनम् ॥ ५९ ॥

वकरूपधृगिति : १०.११.४८.

सजातीयवेषेण गोजातगोऽपि पुरा स स्वकार्याय नालम्बभूव ।
विजा[3]तीयवेषेण गोजा[4]तरोधस्थितः स्यामतोऽसौ तदूर्ध्वं तथाऽगात् ।६०।
वत्सासुरहतिरभवद् वत्सत्वादेव यत्ततोऽहमिह ।
नहि न व[5]कः स्यामिति किं वकरूपोऽगात्तदूर्ध्वमेष कुधीः ॥ ६१ ॥
कियत् कृष्णबलं नाम सत्त्वराशेर्ममाग्रतः ।
इति मत्वा वकः कृष्णं जग्रसे भ्रान्तमानसः ॥ ६२ ॥
जडजाततटस्थतां श्रयन् जलजातेषु च सत्त्वशोधकः ।
भविता य इहास्य मानसे वसतिर्मे श्रुतिगेत्यबोधयत् ॥ ६३ ॥
बहिः सवं शतो रम्यः स्याच्चित्तेऽपि तथैव किम् ।
अवेक्षणाय लक्ष्मीशस्तदन्तरमवीविशत् ॥ ६४ ॥

---

१. बलम् । २. प्राणी । ३. भिन्नजा० पक्षिजा० च । ४. गोसमूहप्रतिबन्धः जलतटं च । ५. बालकः निषेधद्वयाद्वक इति च ।

नाम्नाऽऽकृत्या च कौन्तोऽसौ वृथानेन वको हतः ।
इत्यज्ञवाङ्-निरासाय किर्मीशोऽन्तर्गतोऽभवत् ॥ ६५ ॥

कृष्णमिति : १०.११.४९.

वियोगा[1]द् दुःखितः कृष्णे वयं चात्र कथं शुभम्
इति स्थूलदृशः प्रापुर्भ्रमं राममुखाऽर्भकाः ॥ ६६

तं तालुमूलमिति : १०.११.५०.

श्रीकृष्णस्य यदा निजोदरदरी-यानाय तुण्डे निजे
येनानल्पमकल्पि वर्त्म रिपुणा तत्कृष्ण[3]वर्त्माश्रितः ।
तत्कण्ठः प्रवभूव तेन दहनं कण्ठस्य तस्यार्थतः
प्राप्तं तत्र न शङ्कितव्यमभवत्कृष्णः स उष्णः कथम् ॥ ६७ ॥

चच्छर्देति :

वृन्दावने मम प्रीतिर्विहर्तुं नवका[4]नने ।
इति किं सकलाधीशो निश्चक्राम बकाननात् ॥ ६८ ॥
शुद्धाकृतिर्बहिर्भूरि योऽन्तः संभृतकिल्विषः ।
न तस्य भगवत्प्राप्तिः क्वचिज्जातापि जीर्यति ॥ ६९ ॥

ददारेति : १०.११.५१.

ये पूतनाद्याः खलु तेऽखिला अपि
तदन्नभुक्त्वेन तदीयसेवकाः ।
सत्यस्त्वयं तस्य सखा वकोऽस्ति यत्
प[5]क्षीति सक्रोधमदारयत् तदा ॥ ७० ॥

पीतं यत्स्तन्यमसौ तद्भ्राता मातुलो ममेति किमु ।
मत्वा जनितक्रोधावेशः शकलीचकार बकमीशः ॥ ७१ ॥
कंसादिनिखिलखलजन-वंशविखण्डनमहं तथा कुर्वे ।
निहतो वको यथेत्थं निदर्शनायैव वंशवद् दलितः ॥ ७२ ॥

---

१. ककारान्तः सुन्दरश्च । २. पक्षियोगात् विरहाच्च । ३. कृष्णमार्गाश्रितः अग्न्याश्रितश्च । ४. नेति च्छेदः । ५. सहायवान् पक्षी च ।

कृष्णनाम मुखे स्थाप्यं न कृष्णप्रतिमा क्वचित् ।
अन्यथाचरणात् स्पष्टोदाहृतिर्वकदुर्दशा ॥ ७३ ॥

सद्द्वेषं दधते ये तु दुर्हृदो हिंस्रवृत्तयः ।
विदारयामि सद्यस्तानित्यसौ तमदारयत् ॥ ७४ ॥

मुक्तं बकास्यादिति : १०.११.५३.

[2]हंसोऽपि यं कलयितुं नहि मानसे य-
च्छक्नोति तस्य कलने भुवि रंक एषः ।
शक्तो बकः कथमहो भवितेति कृष्णं
वीक्ष्याऽऽगतं जगदुरात्तमुदोऽर्भकास्ते ॥ ७५ ॥

सत्त्वैकपूर्णरचिताऽऽकृतिरुज्झिताशो-
प्यन्तर्जिघांसुरनिशं मदनिष्ठनिष्ठः ।
तं हन्मि दुष्टमभयाय सतामिति स्वां
सन्धां स्फुटामिह चकार वकासुहत्या ॥ ७६ ॥

अहो इति : १०.११.५५.

विज्ञायापि प्रतापोज्ज्वलमिममसुरास्तत्र यत्संपतन्ति
नैतच्चित्रं यदेते स्फुटमलघुतमः साहसा सर्वदैव ।
चित्रं त्वेतत् पुनर्यत् प्रवलतरमहादैत्यहन्ताऽयमेवं
ज्ञात्वाऽप्यस्मिन्नकुर्वन् व्यवहृतिमखिला बालशब्देन गोपाः ॥७७॥

इति नन्दादय इति : १०.११.५८.

तादृग्रमेशचरितं श्रुतिमात्रवेद्यं
यस्यास्ति सोऽपि भवदुःखलवं न वेत्ति ।
चित्रं किमत्र स च तच्चरितं च येषा-
मध्यक्षमास न विदुर्भववेदनां ते ॥ ७८ ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने एकादशोऽध्यायः ॥ ११ ॥

---

१. साधुद्वेषं उत्तमवेषं च । २. परमहंसः पक्षिविशेषश्च ।

## ॥ अथ द्वादशोऽध्यायः ॥

एवं विहारैरिति चेह पद्यद्विवारपाठादिदमत्र भाति ।
अध्याय्युपात्तं चरितं विभिन्नं तद्बोधितोऽर्थोऽप्यतिगूढतत्त्वः ॥ १ ॥

सृष्ट्यारम्भविधिस्ततः सदसतां प्रोद्बुद्धता प्राणिनां
तद्योग्याचरणं ततो भववने तेषामघग्रस्तता ।
नाशोऽघस्य ततोऽच्युतेन विहितं तस्मिन् विहारादिकं
जीवन्मुक्तवदित्यबोधि प्रथमाध्यायेऽशतः कथ्यते ॥ २ ॥

क्वचिदिति । १०.१२.१.

यत्कल्पे सुमनोज्ञसंसृतिवनानन्तोपभोगेहया
सम्बन्धं मनसो दधद्विभुरनुद्भूतेन नादेन सः ।
सुप्तं जीवचयं सहैव युगपत् सम्बोधयंस्तद्वनं
श्रुत्युद्बोधितपद्धतिः प्रविशतीत्येषाऽऽद्यपद्यार्थिता ॥ ३ ॥

सूलस्य प्रतिपद्योक्तसदसज्जीववर्तनम् ।
पद्यद्वयेनात्र सुज्ञैः क्रमाद्विज्ञेयमार्थिकात् ॥ ४ ॥

तेनैवेति : १०.१२.२.

चिद्रूपेण सहैव तेन विभुना जीवास्ततः कोटिशो
भिन्नास्वादमनन्तसद्रुचिकरं प्रादाय भोग्यं निजम् ।
प्रारब्धप्रकटप्रचोदितगतीन् कृत्वाऽग्रतो गोगणान्
निर्गच्छन्ति ततः प्रपञ्चविपिने प्रारब्धभोग्याश्रिताः ॥ ५ ॥

कृष्णवत्सैरिति : १०.१२.३.

केचिच्चिदेकश्रुतिषु प्रकामं नियोज्य बुद्ध्याऽक्षिगणं स्वकीयम् ।
साकं चिताऽस्मिन् विपिने चरन्ति सुखेन बाला इव साधुजीवाः ॥६॥
केचित्तु सद्वेदगणेन चैकीकृत्य स्वकीयान् विधिकाण्डवादान् ।
बाल्याद्यवस्थाभिरितस्ततस्ते चरन्ति च स्वाभिमतेन जीवाः ॥७॥

फलप्रवालेति : १०.१२.४.

एके गुणत्रयातीताः समलोष्टाश्मकाञ्चनाः ।
अप्यात्मानमलङ्कुर्वन्त्यलं तूष्णीं फलादिभिः ८ ॥

रजस्तमःसत्त्वगुणाश्रिता अपि भवन्ति तत्तत्सुफलाभिसन्धिभिः ।
श्रिताः पुनस्ते रुचिरां निजात्मनां कृतार्थतां तत्र च भूरि मन्वते ॥९॥

मुष्णन्त इति : १०.१२.५.

एकेऽन्योन्यं भोज्यजातं हरन्तो दर्शनादिभिः ।
ज्ञानवत्तां तु संपाद्य कौतुकार्थं पुनर्ददुः ॥ १० ॥
अन्योन्यभोग्यजातेभ्यः स्पृहयन्तः परस्परम् ।
अलब्धतद्रसास्वादा अप्यमन्यन्त धन्यताम् ॥ ११ ॥

यदि दूरमिति : १०.१२.६.

जानन्तोऽपि वसन्तमान्तरगृहे नित्योल्लसन्तं परं
कान्तारे विहरन्तमात्मकुतुकात् कान्तं नितान्तं श्रियः ।
बुद्ध्या भक्तिरसाप्तये परभिदां स्वीकृत्य सज्जीविताः
सेवन्ते भगवन्तमन्तिकगतं नानाविहारैर्मुदा ॥ १२ ॥

एवं सत्त्वरजस्तमोगुणरुचो भोग्यैकबद्धस्पृहाः
रज्यन्ते विवशाः प्रपञ्चविपिने विस्मृत्य सर्वेश्वरम् ।
तेषां दूरतरश्चिरेण भवति श्रीजानिरेतद् ध्रुवं
युक्तं तत्र तमाप्तुमेव कतिचिद् धावन्त्यहंमानतः ॥ १३ ॥

केचिदिति : १०.१२.७.

एके प्राप्तानन्दा अपि किल कुतुकाज्जनानुकृतिहेतोः ।
नानाभिधानकरणै रमयन्तीशं रमन्ते च ॥ १४ ॥

भृङ्गाः केऽपि बकाः पिकाः कति परे भेकास्तथा केकिनो
हंसाः केऽपि चकोरकाः कति शुकाः कामात्तथा दिष्टतः ।
भूत्वा संसृतिकानने स्वचरितै र्नन्दन्त्यमन्द तथा
गोविन्दं रमयन्ति चैवमखिलोन्नेयो भयात्मस्थितिः ॥ १५ ॥

तेऽहं पूर्वतया ततश्च सकला जीवा वनान्तर्गता
मत्वा दूरतरं हृदि स्थितमपि श्रीशं वचोऽगोचरम्।
प्रारब्धोदितवासनानुगतितः प्राप्तप्रयत्नास्तत-
स्तां तां योनिमवाप्य तत्र विहृतिं कुर्वन्त्यथानन्दतः ॥ १६ ॥

साकं भेकैरिति : १०.१२.१०.

परे त्वनाकाङ्क्षितकामकृत्या विधिं निषेधं च परित्यजन्तः।
यथाकथञ्चिद् व्यवहार्यमस्मिन्निति प्लवङ्गा इव सञ्चरन्ति ॥१७॥
नहि बिम्बादतिरिक्तं प्रतिबिम्बं वस्तु किमपि वास्तविकम्।
ज्ञात्वैवं प्रतिबिम्बं हसन्ति दृष्ट्वा विभिन्नमिव सन्तः ॥ १८ ॥

केचित् प्राक्चरितैर्नृदेहजनुषः कीशा इवाहर्निशं
मर्यादागमलङ्घिनोऽल्पमतय-श्चाञ्चल्यसीमाभुवः।
अन्ये च प्रतिबिम्बमुग्धहृदया भ्राम्यन्त्यसद्वस्तुनी-
त्येतत्सृष्ट्युपलक्षणं स्फुटमभूत् तद्बाललीलाच्छलात् ॥१९॥

इत्थं सतामिति : १०.१२.११.

यत्सृष्टेः क्रमसूचनं भववने यज्जीववृत्तिस्फुटी-
कारोऽकारि बकारिणाऽतिकुतुकाद् देवेन वृन्दावने।
यानालभ्य विचित्रचेष्टितपुषस्तेषामशेषेण सद्-
भाग्यं घोषजुषां प्रवक्तुमपटुः शेषोऽपि के मानुषाः ॥ २० ॥

निर्द्वन्द्वो गतविक्रियः परतरो निर्नामरूपोऽक्रियः
पूर्णानन्दघनोऽगुणः श्रुतिगणा-ऽज्ञेयस्वरूपस्थितिः।
येषामिन्द्रियगोचरो व्रजभुवां सोऽपीन्दिरेशोऽभवत्
क्रीडायामिति भाग्यवर्णनविधौ शक्तो न तेषां विधिः ॥२१॥

विद्वज्ज्ञप्त्यर्थमेवायमर्थोऽदर्शि समासतः।
इतः पूर्वक्रमेणैव विज्ञेयाऽध्यायसङ्गतिः ॥ २२ ॥

क्वचिदिति : १०.१२.१.

सदोद्धर्तुं सतः क्लेशादवनाशावलम्बनम्।
तदन्यत्त्वघनाशायेत्युक्तं युक्तं क्वचित्पदात् ॥ २३ ॥

---

१. सिंहावलोकनवत् पुनः पूर्वश्लोक द्वयस्य (१, ३) उत्प्रेक्षणम्।
२. वनाशावलम्बनम्।

गुर्वन्नं सपयोदधि प्रतिदिनं साज्यं मया भुज्यते
मन्मित्रैरखिलैः सहाद्य तु वने भक्तोघनाशो मम।
प्रीतिर्भूर्युदितेत्यसूचयदसावग्रेऽघनाशं हरिः
कर्तव्यं निखिलानपि व्रजजनान् वन्याशनव्याजतः ॥ २४ ॥

प्राचीनपापक्षपणाय पुंसां धृतावतारो भगवान् सदैव।
मुदा वनाशोऽनवनाशनाय मनो दधे तत् किल साधु मन्ये ॥२५॥

सुप्तानां जीवजातानामक्रिये च मयि स्थिते।
नाघनाशो भवेदीशस्तद्दिने किं तथाऽकरोत् ॥ २६ ॥

विजह्रुरिति : १०.१२.३.

यदाऽघनाशं सर्वेषां सतां श्रीशः समीहते।
तदा स्वयं विहरति विहारयति तानपि ॥ २७ ॥

अथाघनामेति : १०.१२.१३.

प्राचीनपुण्यपरिपाक - फलानुरूप
तेषां विहारजसुखं हरिणा सहाभूत्।
तत्रावमानजनिताऽप्यतिसन्निकर्षा-
दासीदघावगतिरित्यतिभाति युक्तम् ॥ २८ ॥

गोजातेन सहान्तरङ्गकलितं श्रीशं यदैषीदघः
कर्तुं तत्र हि तन्मिषेण चकमे प्रायोऽस्य हार्दोदयम्।
योऽन्ते ब्रह्मणि चित्सुखे गतिमगात् सज्योतिरेवं मुनिः
पश्यन् दीर्घदृशा यतः स तमघं नाम्नाऽघ इत्यब्रवीत् ॥ २९ ॥

साधुवृन्दावनक्रीडा सतामेव सुखावहा।
असद्भ्यो ह्यघो युक्तमासीत् तद्वीक्षणाक्षमः ॥ ३० ॥

वत्सार्भकाणामकृतागसामप्यसौ यदासीत् सुखकेल्यसोढा।
चित्रं न चाघस्य भुजङ्गवृत्तेः स्वभाव एवान्यसुखासहिष्णुः ॥३१॥

---

१. अघासुरनाशे मृद्वशने च। २. निषेधद्वयाद् वनाशायेति। ३. दुःखं अघासुरश्च।

प्रपञ्चदुर्गे नियमादघोदयो ह्यमृष्यमाणो विषयोपभोगम् ।
सतोऽसतो वा ग्रसितुं धृतव्रतः प्रतीक्षते काण्डमितीह युक्तम् ॥३२॥

सुखैस्थितैरप्यमृतान्तरङ्गैरघैप्रणाशो यदिह प्रतीक्ष्यते ।
निर्णीतमस्मादघसत्वमस्मिन् स्वस्मिन् परस्मिन्नपि वाऽतिगर्ह्यम् ॥३३॥

न पापभीतिर्मनुजेषु केवला प्रपातनादस्त्यमृतान्धसामपि ।
समञ्जसं तद्यदघासुरात्तदा सुधाभुजोऽप्यापुरतीव साध्वसम् ॥ ३४ ॥

सन्नाशचिन्तन - तथाचरणप्रवृत्ति-
वृत्तिःस्वभावकलिता भुवि याऽघवृत्तेः ।
स्वस्य स्वभावफलमेव हि सा प्रसूते
नान्यस्य तत्स्फुटमभूदघचिन्तितार्थात् ॥ ३५ ॥

सोदरनाशकृदिति : १०.१२.१४.

आँर्यं स्वसौरं च हरन्तमच्युतं सञ्चिन्त्य वेगाद् यदगादघासुरः ।
तद्युक्तमेवात्रजनः सहेत कः प्राणप्रियेष्टार्थवियोगमार्तिदम् ॥३६॥
श्रुतिग्राह्यस्तु भगवाञ्छ्रुतयस्त्वास्यगा विधेः ।
इत्यघस्तज्जिघृक्षुः किं काननाँन्तर्गतोऽभवत् ॥ ३७ ॥

सवनाशारब्धयत्न-कंसाद्यसुरपथ्यदृक् ।
युक्तमासीदघस्तत्र सवनाशः स्ववृत्तये ॥ ३८ ॥

इति व्यवस्येति : १०.१२.१६.

यन्मूलभूतपुरुषाक्रम - सिद्धशक्तेः
के नाम ते मम पुरो भुवि बाहुजाताः ।
तत्राबलो लघुरलं त्वयमित्यघोऽसा-
वासीत् स्मयाद्भजँगवेषधरो दुरात्मा ॥ ३९ ॥

---

१. अवसरम् । २. शोभनं खं सुखं च । ३. दुःखनाशः । ४. श्रेष्ठं बकासुरं च । ५. स्त्रबलं पूतनां च । ६. ब्रह्मदेवाननम् अरण्यं च । ७. बाहुगमनकर्ता सर्पश्च ।

[1]श्रुत्यङ्गहीनत्वमहेरघस्याप्यस्मिन् जने तुल्यमतोऽभियुक्तम् ।
स तद्वपुर्भागभवत् पृथिव्यां तादृक् स तादृक् भवतीत्यगूढम् ॥ ४० ॥
इतरेष्वरिता च मित्रता भवतीशस्य तथा तथा स्वकृत्यात् ।
दुरितं तु निसर्गशत्रुरित्यभवत् स्पष्टमघेऽहिरूपभाजि ॥ ४१ ॥
यो द्वेष्टि साधूनथ साधुनाथं निर्मन्तुवृत्तीन् सदयाद्यभूमिम् ।
सद्योऽघरूपोऽहितमोमयात्मा भूत्वा विपद्भावमिहैति युक्तम् ॥ ४२ ॥
अजो गले मे भविता यथा तथा वपुर्मयाऽङ्गीकरणीयमित्यघः ।
स चिन्तयन्नेव निजेष्टयोजनोत्सुको बभूवाजगरः पुरैव किम् ॥४३॥
तत्प्राणपवनपानं चिकीर्षुरासीत् तदाहिरूपोऽघः ।
युक्तं परन्तु मूर्खो न वेद तं श्रीधरं स शेषेडयम् ॥ ४४ ॥
मदग्रजनुषावुभौ वरतमश्रियावप्यलं
गतौ लघुगरत्वतो भृशमनेन नाशं लघु ।
विचिन्त्य स बृहद्गलामजगरस्थितिं तामघो
दधार किमु यत्पुरा विकसितास्य एवाभवत् ॥ ४५ ॥
यो यो भवेऽस्मिन् जनिमान् हि जन्तुस्तमत्तुमिच्छत्यघकालसर्पः ।
अजस्रमेवं मतिमान् विभाव्य कुर्यादभीत्यै यदुनाथसख्यम् ॥४६॥

दृष्ट्वा तमिति : १०.१२.१८.

विक्रीडद्गोपबालैरघभुजगमुखं प्रेक्षणोत्प्रेक्षितं यत्
तन्मन्ये व्यासपादैर्भवभुजगमुखं वर्णितं तन्मिषेण ।
यस्मात्तत्रैवमेव भ्रमितमतिजनाः संविशन्ति प्रयत्नात्
श्रीशस्तस्मात् कृतान्तान् निजभजकजनान् मोचयत्यस्ततन्द्रः ॥४७॥
यदघेत्यभिधाभाजोऽप्यस्यासीद्रूपमीदृशं भयदम् ।
किं पुनरद्धाऽघस्येत्यालोच्याच्युतमुपाश्रयेत पुमान् ॥४८॥
नादर्शि नाश्रावि च यत्कदापि तच्चेत्कचिद् दृग्विषयेऽभ्युपेतम् ।
दृष्ट्वा न तज्ज्ञातुमलं हि युक्तं नाघं विदुस्ते ह्यनुभूतपुण्याः ॥४९॥

---

१. वेदः कर्णश्च । २. विपत्सत्तां विगतचरणत्वं च । ३. सर्पः अजगलश्च । ४. कण्ठः विषं च । ५. पूर्ववत् । ६. पापम् ।

उद्वसन्त इति : १०.१२.२४.

अघोऽस्माकं पुरस्तिष्ठत्यघभिद्धरिचेतसाम् ।
तद्धृष्टताऽद्भुतैवास्येत्युद्वसन्तो मिथस्तदा ॥५०॥

अघभिदि सति सन्निधौ कथं रे त्वमुदित इत्यघमेतमुद्वसन्तः ।
अघाभिदि सति सन्निधावपीश त्वयि कथमेतदितीन्दिराधिपं वा ॥५१॥

यदाऽघोदयः स्यात्तदा दूरमीशो यदैवेशलाभस्तदा नाघवार्ता ।
प्रसङ्गोऽधुनास्ति द्वयोरत्र चित्रश्चमत्कारमित्याददुर्हस्ततालम् ॥५२॥

दुरन्तात्कृतान्तादपि श्रीशपाद-
जुषां नैव भीतिर्न तेऽपि त्रसन्ति ।
इति स्पष्टमावोधि गोपालबालै-
रशङ्कं विशद्भिस्तदाऽघाहिवक्त्रम् ॥ ५३ ॥

अहो विचित्रा जगतः प्रवृत्तिर्यत्साहसं नाम तदस्य धर्मः ।
न रक्षिता चेद्भगवान् प्रतिक्षणं न वेद्मि किं वा कथमस्य वा भवेत् ॥५४॥

अतज्ज्ञेति : १०.१२.२५.

या दुर्धर्षभवोरगेऽनुरगधीर्या रम्यभावग्रहो
यत्तस्यैव पुनः सलीलमुरगोत्प्रेक्षाभिरालोकनम् ।
यत्तस्मिंश्च ततोऽवगाहनमतिस्तूर्णप्रवेशोऽपि चे-
त्येतत् सर्वमतज्ज्ञकल्पितमिति स्पष्टं बभाषे हरिः ॥ ५५ ॥

दिष्टकृतेनेति : १०.१२.२७.

किशोरसङ्घोऽयमशेषदर्शनः सुरक्ष्यमाणोऽपि मया प्रतिक्षणम् ।
अघावृतोऽभूद्विधिनेत्यघापहस्तदास युक्तं खलु दैवविस्मितः ॥५६॥

यदाऽहिनाऽघरूपेण ग्रस्ता एव न भक्षिताः ।
तदैव घृणया ग्रस्तोऽस्मीति दिष्टेन विस्मितः ॥५७॥

अशेषदृगिति : १०.१२.२८.

भगवन् सजातिरयमिति हन्तव्यः कीदृशोऽपि नहि भवता ।
इति शेषोक्त्यश्रुतये तदास किमशेषदृष्टिरघहर्ता ॥५८॥

---

१. बलरामः ।

शेषावतारिणि बले सति कृत्रिमैतत्
सर्पाकृतिर्न भविता भ्रमदा शिशूनाम् ।
तस्मान्न तद्ग्रसनमोचनकं चरित्रं
स्यादित्यगाद्बिवल एव तदह्नि कृष्णः ॥५९॥

अशेषानसौ वत्ससङ्घानघाहे-
र्मुखान्तर्गतानाविभाव्याप्यघारिः ।
भुजङ्गप्रयातस्थितिज्ञोऽपि तूष्णीं
बभूवास्य बीजं विशेषानुचिन्ता ॥ ६० ॥

यन्नामाखिलदुःखहारि नितरां यो दुष्टविध्वंसकः
शक्तिः कर्तुमकर्तुमन्यथयितुं जागर्ति यस्मिन् सदा ।
स श्रीशोऽघमुखप्रविष्टपृथुकत्राणैकचिन्ताकुलो
यज्जातस्तदवैमि तेन निजसद्वात्सल्यमाविष्कृतम् ॥ ६१ ॥

सर्वत्र सर्वदा भक्तान् रक्षत्येव दयानिधिः ।
तत्रापि चेदघग्रस्तास्तांस्तु धावत्यतित्वरम् ॥ ६२ ॥

भवगह्वरे विहारं करोति यो लालयन् स्वगोजातम् ।
अघसंस्पर्शस्तस्यावश्यमिति व्यक्तमभवदघगिलनात् ॥ ६३ ॥

लोकेऽजस्रमतन्द्रितेन मनसा मां ध्यायतो हृत्स्थितो
न द्राक् पूर्वमहं भवामि यदि सञ्जातोऽपि विद्युत्समः ।
संधत्ते हृदि यस्तु मामकजनांस्तत्राघरूपेऽप्यरं
स्थाता स्यां ननु मूर्तिमानिति विभुश्चख्यौ तदाऽघं विशन् ॥६४॥

तदा घनच्छदा इति : १०.१२.२९.

यत्सृष्टयणुकोऽयमघस्तमचलमग्रसत नैकजगदुदरम् ।
दृष्ट्वा दिवौकसामपि कथं न भीर्विस्मयोऽपि वा भविता ॥६५॥
यत्सङ्गीत्यैवाहिचित्तस्य मोहो निर्वीर्यत्वं तद्वशीकारिता च ।
जानन्नेवं तत्कृते देवसङ्घो हाहाशब्दाद् गायकाह्वानमाधात् ॥६६॥

१. आधिक्यं गरुडशेषौ च । २. गन्धर्वविशेषः ।

जहृषुरिति :

आभासरूपेऽपि कदाचिदैशवीर्यापकर्षे प्रतिभासमाने ।
सौख्यावभासो द्विषतां तदा तु युक्तं प्रमोदोऽघसुहृज्जनानाम् ॥६७॥

भगवतः क्रियते ह्यहिनाऽशनं भगवता क्रियते ह्यहिनाशनम् ।
प्रथमवाचमवोचदघाश्रितः सुरचयश्चरमां गिरमूचिवान् ॥६८॥

ते स्युः पापाश्रिता ये तु वर्तमानैकदृष्टयः ।
भवन्तीति स्फुटमभूत्तदा त्वेक्षा प्रमोदतः ॥ ६९ ॥

ववृधे गल इति : १०.१२.३०.

यदंशतो यस्य मनस्युदीतो दुरात्मनोऽस्मिन् भुवनेऽभिमानः ।
तमंशमामूलमहं छिनद्मीत्यासीत् स वृद्धोऽघवृ[1]हद्गरे किम् ॥७०॥

यो मां द्वेष्टि च मामकानपि जनांस्तस्याहमद्धाऽखिलं
कुर्यां प्राणनिरोधमाशु न भवेन्नामापि शिष्टं यथा ।
एवं बोधयितुं निजावनचणश्चक्रेऽघकण्ठाध्वनो
रोधं नाम स शब्दशास्त्रनिपुणः सर्वेश्वरः श्रीधरः ॥ ७१ ॥

तेनैवेति : १०.१२.३२.

अस्मद्द्वारमनेनेदं यत्संरुद्धमतो वयम् ।
यामस्तन्निर्मितद्वारेत्याशयात्ते ततो ययुः ॥ ७२ ॥

किमस्माभिस्तवाकारि किमस्मद्रोधनं प्रभो ।
अघस्थितिश्चेत्त्यक्ता तत्प्राणैरुक्तः स निर्ययौ ॥ ७३ ॥

यस्यामलेशहृदयस्य निरुद्धवायोः
प्राणाः प्रयान्ति सहसैव शिरोऽध्वनाऽस्मिन् ।
अत्रैव सोऽमृतमयो भवति प्रमाते-
त्यर्थः श्रुतेः स्फुटतरोऽजनि तच्चरित्रे ॥ ७४ ॥

सुधारसमुचा दृष्ट्या सुधाकरनिवासया ।
बालान् सञ्जीवयामास तानिति क्षममच्युतः ॥ ७५ ॥

---

१. विषे कण्ठे च ।

अन्वर्थयञ्जने स्वां सद्वृन्दावनविहारिताम् ।
अमोचयदघाद्बालान् सवत्सान् युगपत्प्रभुः ॥ ७६ ॥

अन्वर्थकान्येव ममाखिलानि नामानि भूमाविति बोधयन्सः ।
मुक्तिं वितीर्याशु निजेष्वघे च मुकुन्दनाम प्रकटीचकार ॥७७॥

मन्मात्राश्रयिणो न जातुचिदघग्रस्ता भवेयुः क्वचि-
ज्जाताश्चेत् स्वयमुद्धराम्यहमसावज्ञातदुःखं क्षणात् ।
इत्थं स्वीयजनावनानलसतां सार्वांशिकीं दर्शयन्
श्रीमानुद्धृतवानघोदरगतान् बालान् सवत्सान् प्रभुः ॥ ७८ ॥

असाध्यं तं ज्ञात्वा सुभगबककवृत्त्या[1] प्रभुमसा-
वघोरः[2] सद्योऽघस्तदजगरवृत्त्या[3]ऽऽश्रिततनुः ।
तथाप्यासीद् यत्नो वकवदफलोऽस्यापि तदिदं
स्फुटं यत्सत्येन स्फुरति स न वै कृत्रिमतया ॥ ७९ ॥

ध्वान्तारावुदिते ध्वान्तं नाशमायात्ययत्नतः ।
हरेस्तथाऽखिलाधारे- रुदयादघनाशनम् ॥ ८० ॥

महज्ज्योतिरिति : १०.१२.३३.

प्रभुणाऽघात्मा निरघः कृतस्तदन्तः प्रविश्य योग्यमतः ।
तेजोमयः स समभूदनामरूपः सुरेशविस्मयभूः ॥ ८१ ॥

खेऽवस्थितमिति :

दुष्टानामपि मुक्तिदो निजजन-त्राणव्रत-श्चाप्ययं
सत्योऽहं शपथं करोमि न मनाङ् मन्यध्वमत्रानृतम् ।
सम्बोध्यैवमघासुरोऽखिजनान् ज्योतिः स्वरूपेण तत्
स्पृष्ट्वा विष्णुपदं विवेश भगवत्यानन्दरूपे हरौ ॥ ८२ ॥

वकः शुद्धसत्त्वोऽपि नाऽऽप स्वरूपं
तमोभूरहं ज्योतिरात्माऽप्यभूवम् ।

---

१. कपटवृत्त्या । २. अघम् उरसि यस्य सः । ३. अवधूतवृत्त्या ।

ततो मे जघन्यं तमोऽप्यत्र धन्यं
विचिन्त्यैव लीनो घनश्यामलेऽभूत् ॥ ८३ ॥

प्रभौ मेघस्वरूपेऽस्मिन् सङ्गता मेऽघरूपता ।
ताद्रूप्यमाप्नुयादस्मात् कृष्ण एव विवेश सः ॥ ८४ ॥

कथमपि हृदये यश्चिन्तयत्यब्जनाभ-
प्रतिकृतिमिह तस्योच्चैर्गतिर्जायते यत् ।
हृदयमविशदीशो यस्य साक्षादघस्य
तदिह किमु विचित्रं तस्य जातं तथेति ॥ ८५ ॥

क्षणमपि सज्जनसङ्गश्चिन्तनमीशस्य सौति फलममलम् ।
योगाधिकमिति यदसावघो गतिं प्राप योगिदुरवापाम् ॥ ८६ ॥

ततोऽतिहृष्टा इति : १०.१२.३४.

सर्वेषामविशेषतोऽभिलषिते श्रीशेन सम्पादिते
तत्तोषे नहि हेतुरत्र निखिलारब्धैकरूपा स्तुतिः ।
किं त्वेतस्य समर्हणं मुहुरहो स्वस्वाधिकारोचित-
मेवेति स्फुटमास भूर्यघहतौ भिन्नार्हणोल्लेखनात् ॥ ८७ ॥

तदद्भुतेति : १०.१२.३५.

सानन्दमद्भुतश्रीश - प्रसाद - फलभोगिनाम् ।
श्रुत्वोदन्तं सतां कस्य न स्याच्चेतसि विस्मयः ॥ ८८ ॥

कृतान्तस्य कृतान्तोऽहममृतानां तथाऽमृतम् ।
अघहत्याऽर्भकोद्धृत्या द्वयमेतत् स्फुटीकृतम् ॥ ८९ ॥

भवाद्यन्तः सन्तो विषयविषसंपर्करहिता
ध्रुवं जीवन्मुक्ता रचितकुतुकास्तत्र नितराम् ।
भवेयुस्ते यैस्तु प्रतिपदमचिन्त्याच्युतपदं
यदस्मिन् स्पष्टोदाहृतिरहिगता गोपशिशवः ॥ ९० ॥

राजन्नाजगरमिति : १०.१२.३६.

संपाद्याश्वनघत्वमच्युतपदाध्यक्षो भवेद् यो भुवि
जीवन्मुक्तिमुपागतोऽस्य हि भवः शिष्टोऽपि नार्तिप्रदः ।

अघटितघटनापटुत्वमत्र प्रकटयितुं निजमेव रासकेलौ।
रतिरससुखभागकारि नूनं यदुपतिनाऽपि मनो नपुंसकं तत् ॥ १६ ॥

विनान्तरङ्गं नान्यस्त्रीसंयोगो जनदृष्टिगः।
सिद्ध्यत्यनन्तरायोऽस्मिन्नितीशस्तदकल्पयत् ॥ १७ ॥

अमनस्कोऽपि प्रभुरिह रन्तुं शक्नोत्यचिन्त्यवैभवतः।
यदकृत मनस्तदर्थं तद्बीजं तत्स्वरूपरक्षैव ॥ १८ ॥

स्वीया चेदनुकूलतामुपगता निर्विघ्नमन्याङ्गना-
भोगः सिद्ध्यति तद्वशीकृतिरपि प्रेम्णा रहोऽवस्थितौ।
ज्ञात्वेमां रसशास्त्रपद्धतिमभूद्गोपाङ्गनानां वशी-
कारायाप्यथ भुक्तये च भगवान्मन्ये स मायाश्रितः ॥ १९ ॥

नाहं चेत्प्रकृतिं श्रयेय न च वा कुर्यां मनः-सर्जनं
न स्याद् बोधविधूदयो निखिलसत्संतापसर्वंकषः।
मय्यासामपि वा प्रवृत्तिरगुणे न स्याच्छ्रुतीनामत-
श्चक्रे दीनदयालुरेष विलसन्मायः सकामं मनः ॥ २० ॥

हृदाकाशे ताराधिकविलसिते वृत्तिरमणी-
विहारेच्छा जाता यदि भवनिशायामतिशयात्।
विधेयं योगाध्वश्रयणमशुभध्वंसि सुधिया
ततः स्वेष्टं सिद्ध्यत्यवगतमिदं योगपदतः ॥ २१ ॥

तत्तत्प्राण्युपभोगकालविलसत्सत्त्वश्रियश्चित्सुखो
दृष्ट्वा हन्त तमस्विनीर्बहुविधा विद्यारजोरञ्जिताः।
स्वां मूलप्रकृतिं भजन् भववने रन्तुं सकामो भव-
त्यार्तत्राणपरायणः स भगवानूह्योऽयमर्थो ध्रुवम् ॥ २२ ॥

तदोडुराज इति : १०.२९.२.

मायामुपाश्रित्य यदा करोति सत्-
संकल्पमीशः स तदैव संसृतिः।
व्यक्ता भवत्यत्र निदर्शनं स्फुटं
यच्चित्तजातेन्दुविलासवर्णनम् ॥ २३ ॥

पूर्णाः स्वान्वयधर्मसंस्तवकृते वंशोद्भवान्पूर्वजाः
पुत्रादीन् प्रति दर्शयन्ति तदनुष्ठानं विधायादरात्।
तद्युक्तं सुरतोत्सवोत्सुकहृदं दृष्ट्वेशमादर्शय-
च्चन्द्रस्तादृशसंप्रदायमतनुश्रेयस्करं दीर्घदृक् ॥ २४ ॥

दृष्ट्वेति : १०.२९.३.

गायन्तं कामयन्तेऽस्मिन् स्त्रियो नरमिति श्रुतेः।
अन्वर्थतां स जिज्ञासुर्जगौ कलमधोक्षजः ॥ २५ ॥
माभूदासामणुरप्यधर्मसंस्पर्श इत्यनन्तात्मा।
सुकृतासुकृतनिदानं मन एवादौ जहार सद्गीत्या ॥ २६ ॥
निःसीमपुण्यफलमत्र सदेतदेव
या स्वाङ्गनाविलसिताङ्गजवैभवेक्षा।
तद्वो मनांस्यचिरमेत तदीक्षणार्थ-
मेवं मनोहृतिमधात् बहुधा स गीत्या ॥ २७ ॥

निशम्य गीतमिति : १०.२९.४.

शारदागमविशारदराका
नायकाधिकविकासितकामा।
यामि यामुनतटीनिकटस्थं
श्यामधाम निजधाम विहाय ॥ २८ ॥
कुञ्जे शरदि वसन्तं कुसुमेष्वनुभूतविविधरसगन्धम्।
भ्रमरं द्रष्टुं यामीत्यूचे काचित्स्फुटं स्वगुरुसविधे ॥ २९ ॥
त्यजन्तु बत मां पतिश्वशुरबन्धुवर्गाश्चिरं
ब्रवीतु किमपि व्रजस्थितजनो व्रजाम्येव तम्।
करोति मुरली यतः कुशलदूत्यकं मत्कृते
ततश्च परमाधरामृतरसं पिबाम्यञ्जसा ॥ ३० ॥

---

१. कामः महश्च। २. सस्त्रीकः पुत्रः। ३. निपुणो धृष्टो वा। ४. पौर्णिमा नूतनऋतुमती च। ५. पुष्पेषु कुसुमेषु कामश्च। ६. कामुकं षट्पदं च।

मुरली तरलीकरोति कस्मात्सरलां मां गरलायतानतन्द्वा।
विरलाङ्गुलि तत्करस्य लोल्यं परनारीजनरक्तारि वा तदेतत् ॥ ३१ ॥

दैत्यारिरेष तनुतां तनुतापदानं
यत्तस्य विश्रुतमिहाश्मविशोभि वक्षः।
त्वं कोमलाऽसि सरला सकलानुरागा
चित्रं मुरल्यतनुतापमलं तनोषि ॥ ३२ ॥

लब्धं सुखं स्वमपहाय परंपरस्याः
का वा यतेत सहचर्यपि सौख्यदाने।
एकैव तत्त्वमसि धन्यतमा यदन्या-
माकारयस्यतुल - रत्यधरामृताप्त्यै ॥ ३३ ॥

श्रीजानिरेष तनुतापहरः सदैवा-
ऽऽनन्दप्रदः शुभयशा विशदस्वभावः।
तद्युक्तमेव करवृत्तिरमुष्य च त्वं
यन्मन्मनोभवसमृद्धिसुखं तनोषि ॥ ३४ ॥

इत्युत्साहकृतानेक - कल्पनाक्षिप्तमानसाः।
निस्त्रोन्नतमजानन्त्यो गोपिकाः प्रस्थितास्तदाः ॥ ३५ ॥

सर्वा इन्द्रियवृत्तयोऽपि विषयं स्वं स्वं विभाव्याञ्जसा
तत्रायान्ति न तद्गतावपि मनागन्योन्यसापेक्षता।
एकश्चेद्विषयस्तदा तु सकला एकीभवन्त्यादरा-
देतद्व्यक्तमभूदलक्ष्यगमनैः श्रीकामिनः सन्निधौ ॥ ३६ ॥
यस्मादस्त्यधुनेशः स सदारामे विरामवृत्तिरतः।
अस्मच्चित्तविरामो नियतं भवितेति तत्र तं जग्मुः ॥ ३७ ॥

यत्पत्यपत्य - धनधामधियोऽपि गोप्य-
स्त्यक्त्वाखिलं हरिपदाब्जमगुर्न चात्र।
चित्रं मनागपि यतः श्रुतिसारभूतं
गी[2]तोपदेशमकृत प्रभुरेव साक्षात् ॥ ३८ ॥

---

१ पाषाणः कौस्तुभश्च। २. भगवद्गीता गानं च।

दुहन्त्य इति : १०.२९.५

श्वस्तनेऽपि सुलभो भवेदयं
गोस्तने रस इहेति किं ततः ।
स्वस्तनद्वय—सुखर्धिकारणं
स्रस्तनीव्युदितमाश्रये रसम् ॥ ३९ ॥

यत्स्वयं तापभाक् तत्किं कुर्यात्परमतापकम् ।
घनं तत्तापहर्तारं कलये कलितामृतम् ॥ ४० ॥

सुस्निग्धमुग्धमधुरप्रकृतिं विहाय
संयावकामितपदाम्बुजरागमीशम् ।
का वाऽन्यलब्धमधुरादिगुणं गुणज्ञा
संयावमल्परसमत्र समाश्रयेत ॥ ४१ ॥

परिवेषयन्त्य इति : १०.२९.६.

बुधश्लाघ्यं शुद्धं मधुररसरसं सुप्रकृतिकं
भुजङ्गेशध्येयं भवति पदमेकं यदुपतेः ।
तदन्यस्मिन्नर्थादधिगतमशुद्धत्वमिह तद्-
विधेया तद्व्यक्त्यै किमिति परिवेषादिरचना ॥ ४२ ॥

स्वसुतानपहाय तास्तदा ययुरत्रास्ति न चित्रमण्वपि ।
स्फुटमेव यदङ्गसङ्गिनी सुतमालाधिकशालिनी रुचिः ॥ ४३ ॥

पतिशुश्रूषणं कार्यं स्त्रियेत्येत्येतद्वचो ध्रुवम् ।
विदेहावस्थितौ सत्यां युक्तं श्रीपतिसेवनम् ॥ ४४ ॥

भवत्यस्माद्भक्तादुदरभरणं तत्क्षणशिवं
पुनर्वाञ्छा भुक्तिः पुनरिति किमस्याप्यशनतः ।
लसच्छ्रीकं नित्याभिनवमधुरं सौख्यजनकं
सुधामुख्यं भक्तोर्त्तममिह हि भोक्ष्यामि शिवदम् ॥ ४५ ॥

---

१. वसनग्रन्थिः मूलधनं च । २. भक्ष्यपदार्थविशेषः सम्यग्यावको लाक्षारसश्च । ३. कुण्डलयादिरचना । ४. सुतपक्तिः शोभनस्तमालवृक्षश्च । ५. मोक्षः कामश्च । ६. अन्नं सेवकेषु विषये उत्तमम् ।

लिम्पन्त्य इति : १०.२९.७.

सिद्ध्येत्किमिष्टमेतेन लेपोऽयमवलेपकृत्।
स लेपो यद्विलेपेनातनुतापहृतिः स्फुटा ॥ ४६ ॥

क्षालनं किल जलैरलमेभि-
र्यत्क्षमं न बहिरंगविशुद्ध्यै।
यत्स्मृतिर्हरति पंकमशेषं
तद्धि पादजलजातमुपैति ॥ ४७ ॥

अञ्जनेन किमनेन लोचने
यत्करोति समले तनुश्रिया।
पूर्णशोभममलं मलापहं
कृष्णरूपमलमेकमञ्जनम् ॥ ४८ ॥

सञ्जायते कृष्णपदाम्बुजेऽनु-
रागो यदा यस्य तदास्तमेति।
भेदभ्रमस्तस्य भुवीति युक्तं
व्यत्यस्तवस्त्राभरणास्तदा ताः ॥ ४९ ॥

आसां पूर्णसुरेशभक्तिरुदिता तन्मुक्तिभाजोऽङ्गना
जाता एव तदङ्गसङ्गतिवशाज्जाता वयं चेत्तदा।
अन्योन्यालयवाससौख्यविषया शिष्टा भवेद्वासना
तत्तत्पूर्तिकृते बभूवुरखिलास्तेऽन्योन्यवासाश्रिताः ॥ ५० ॥

सर्वासां श्रुतनादतुन्दिलहृदां बाह्यावकृष्टात्मनां
संयोगध्वनिताध्वना सुविदितश्रीशस्थितानां पुनः।
वृत्तीनां न हि दुर्घटं भगवतो विष्णोः स्वरूपेक्षण-
मेवं गोकुलयोषिदागमनतो व्याख्यायि योग्यो विधिः ॥ ५१ ॥

अन्तर्गृहगता इति १०.२९.९.

बाह्याभ्यन्तरवृत्तयः सविषया याः स्वैरतो गोकुले
ताश्चेत्स्वान् विषयानपास्य भगवत्पादैक-बद्धस्पृहाः।

१. अलंकाराः। २. प्रकारः।

तत्तासां भवतीश्वराप्तिरुचिता तत्रांतराणां द्रुत-

मित्यावेदितमंगनोभयविधोद्योगार्थकोल्लेखनात् ॥ ५२ ॥

काचिद्वृत्तिर्बहिर्गत्वैवाच्युतं प्राप्य मोदते ।

काचिद् गोकुल एवालं लीना सत्यूह्यतामिदम् ॥ ५३ ॥

कृष्णं विदुरिति : १०.२९.१२.

या वृत्तिर्निखिलानपास्य विषयान्संजायते सुस्थिरा

सैवार्हा पदमैशमीक्षितुमहो नैवापरा जातुचित् ।

जागर्त्येष विधिः श्रुतेरनुभवो विज्ञानिनां चापि तत्-

तत्प्राप्तं विषयात्मभिः कथमिति प्रश्नाशयो भूपतेः ॥ ५४ ॥

उक्तं पुरस्तादिति : १ .२९.१३.

भाव्या निर्विषयैव वृत्तिरिति न श्रौताशयः किंत्वहो

नित्यानन्दघनात्ममात्रविषया सा चेदिहाव्याहता ।

तत्सिद्धैव कृतार्थता सविषयेस्थाने स्थितानामपी-

त्येतद्भाति तदुत्तरं मुनिकृतं श्रीशैकवृत्त्युक्तितः ॥ ५५ ॥

स्वागतं व इति : १०.२९.१८.

या या वृत्तिरुपैति मां शमनिशं तस्यास्तदैवाचरन्

यच्चाभीष्टतरं तदन्तरगतं तच्चापि संचिन्तयन् ।

संघातावनमप्यनालसधियैवालोचयँल्लीलया

पश्यंश्चागमनस्य हेतुमभितोऽकामं सकामं च वा ॥ ५६ ॥

मायारात्रिभयं प्रदर्श्य च ततः संघातवासे स्पृहां

भूयः संजनयन्ममत्वकलिते सत्कर्मधर्मैरलम् ।

जीवस्यैव निषेवणं विधिगिरा लोकोत्तरं दर्शय-

न्नेवं युक्तिचयैरहं प्रथमतः सम्मोहयाम्येव ताम् ॥ ५७ ॥

एवं कृतेऽपि न हि या विनिवर्तते मत्-

पादान्मदेकविनिवेशितसर्वकामा ।

तस्यै रसं निरुपमं प्रदिशामि सैव

योग्येत्यबोधि बहुधा विभुना निजोक्त्या ॥ ५८ ॥

( विशेषकम् )

यथा मद्भजनं लोके मत्प्रसादविधायकम् ।
कलौ तथा न योगादीत्युक्तमप्यूह्यतां मुहुः ॥ ५९ ॥

सौम्या रात्रिरियं न यात सदनं स्थेयं भयं नास्ततो-
ऽरण्यं पश्यत सेन्दुभूरिलतिकं सेवध्वमादौ हि माम् ।
गोष्ठादीन्परतो मदेकरतितस्त्यागोऽपि नाघप्रदः
पत्यादेरिति भासते प्रभुगिरोऽर्थोऽपीति वीक्ष्यं बुधैः ॥ ६० ॥

भुवं लिखन्त्य इति : १०.२९.२९.

भक्तानामिह कामपूरक इति प्रायः प्रशस्तिः प्रभो-
स्त्वय्यस्यास्त्ययकलंकितेति धरणि प्राप्तास्तदास्तामितः ।
मैवं वञ्चितधीर्भवत्त्वपर इत्युल्लिख्यते साऽन्यथा-
कारा स्वानुभवात्तदत्र च भव त्वं साक्षिणीत्यालिखत् ॥ ६१ ॥

वस्त्वस्ति सर्वमपि कौ विपुला यदेपे-
त्येषा प्रथा तव जनप्रथितास्ति पृथ्वि ।
ईदृक् चरित्रमपि कुत्रचिदच्युतस्य
दृष्टं त्वयैकमनुयोक्तुमिवालिखंस्ताः ॥ ६२ ॥

विमोहास्ता अपि श्रीशवागाशयविदस्तदा ।
प्रत्यूचिरे गताशंके व्यक्ताव्यक्तार्थकं वचः ॥ ६३ ॥

स्वागतं वो महाभागा इति ते वदतः प्रभो ।
नैवोचितं ततो वक्तुं प्रतियात गृहानिति ॥ ६४ ॥
प्रियं किं करवाणीति वाणी वाणीश पूज्य ते ।
अप्रियार्थकरं वीक्ष्य भवन्तं ह्रेपयेन्न किम् ॥ ६५ ॥
कर्तुस्तव व्रजस्थानां प्रपन्नानामुपेक्षणम् ।
व्रजस्यानामयप्रश्नो न किं स्यादुपहासकृत् ॥ ६६ ॥

व्याकुलं निखिलमेव गोकुलं जातमित्यचिरमागता इमाः ।
जानतोऽपि भवतो ह्यनामयप्रश्न एष भगवन् किमर्थकः ॥ ६७ ॥

---

१. इन्द्रियकुलं व्रजश्च ।

एकस्मिन् विदिते सजाति सकलं विज्ञायते वस्त्विति
श्रुत्यर्थात्त्वदुदीरितात्सुमनसः पश्यन्ति तादृग्विधम् ।
त्वं तच्छ्रुत्युपपादकः स्वमनसा ज्ञातेन चास्मान्मनो-
जातं वेत्सि कथं न वेत्सि यदि वा तत्किं वृथा पृच्छसि ॥ ६८ ॥

न चेद्रात्रिरियं घोरा घोरसत्त्वनिषेविता ।
तद्व्रजानादरः कस्मात् कस्माद्वा शरणं भवान् ॥ ६९ ॥

घोरेयं बहुघोरसत्त्ववसती रात्रिस्ततः कैरपि
नास्यां त्वय्यपि रक्षके निरलसे कार्यं विहारादिकम् ।
इत्थं चेद् गृह एव कृष्ण विदितं तत्रागतं स्यादिह
प्राप्तानां कथनेन किं तदधुना पाहीश कुर्मः पुरः ॥ ७० ॥

ज्ञानशक्तिक्रियाशक्ती त्वय्युभे हि समर्पिते ।
कैः श्राव्यं कैरनुष्ठेयं प्रतियातेति ते वचः ॥ ७१ ॥

याः स्युः स्त्रियस्ताभिरिह स्थेयं नेत्युचितं वचः ।
वयं तु देवपुंष्वेषोरस्त्रीभूता जगत्पते ॥ ७२ ॥

ते शोधयन्ति नः सर्वे वयं त्वां शोधयामहे ।
तदलं तद्विचारेण सर्वे स्वार्थपरायणाः ॥ ७३ ॥

प्रेष्ठस्य ते जगद्बन्धोर्मा भूदागो मनागिति ।
प्राप्तानामपि नस्तेङ्घ्रिं किमद्याप्यस्ति बन्धुभिः ॥ ७४ ॥

लतोल्लसत्पल्लवशोभितं वनं
यतोऽस्ति राकेशकराभिरंजितम् ।
लताभिलाषस्तत इत्यवेहि नः
स्वतन्त्रमत्राच्युत किं वदाम तत् ॥ ७५ ॥

गोपदेषु लसद्वासं तत्पतिं त्वामुपास्महे ।
अतः शुश्रूषतेत्येषा कमर्थं ते लभेत गीः ॥ ७६ ॥

१. मनःसमूहं कामं च । २. कामस्य । ३. अस्त्राणीव भूताः न स्त्रीभूताश्चेति । ४. वल्ली रतं च । ५. किसलया जारश्च । ६. चन्द्रः नूतनऋतुमतीपतिश्च ।

अबला इमा इति वदञ्जानन्नपि यथार्थतः ।
यदुक्तं ते प्रजावत्यो यूयमित्यद्भुतं न किम् ॥ ७७ ॥

मय्यस्ति निखिलानामप्यरं रतिरिति ब्रुवन् ।
त्वमेवैवं यदि ब्रूषे तर्ह्यनुत्तरमुत्तरम् ॥ ७८ ॥

अमायया भर्तृसेवा स धर्म इति ते वचः ।
त्वद्गीतिमोहितास्वस्मास्वधुना न प्रसज्जते ॥ ७९ ॥

प्रजापतिपतिर्भूत्वाप्यस्मान्वक्षि प्रजाऽवनम् ।
तत्स्त्रीभावं भजस्व त्वं भजामः पुरुषायितम् ॥ ८० ॥

श्रीशाङ्घ्रिसेवनतिरस्कृतिकृत्स पापी-
त्यालोच्य वीक्ष्य च पतीन् प्रतिषेधवाचः ।
अस्माभिराचरितमीदृशमीश पत्यु-
स्त्यागोऽनघस्य यदसौ निगमे निषिद्धः ॥ ८१ ॥

मा पतिस्त्वमिति भाषिते पुरा मेति मां वदत यत्त्वमब्रवीः ।
अर्थतः पतिरिति स्फुटं तदा ह्यौपपत्यमधुना तु कीदृशम् ॥ ८२ ॥

अयं पतिरयं सुतः कुलमिदं च चन्द्रोज्ज्वलं
सुहृत्सहजबान्धवा जनकवंशजाता इमे ।
मनोज्ञमुरलीरवाहृतमनोभिरेवं मना-
गपीश विदितं यदि प्रभवितैष दोषस्तदा ॥ ८३ ॥

कान्तस्त्वं मदनः सुतस्तव करे वंशोऽस्ति वंशोत्तमो
भ्राताऽस्मत्सहभूर्लतादिनिचयो वृक्षाः सदाता इति ।
ज्ञात्वा त्वत्सविधे स्वलोकवसतिं प्राप्तासु नास्मासु तत्-
स्वीयोल्लङ्घनजं मुधैव भगवन् दोषांशमाविष्कुरु ॥ ८४ ॥

पुत्रादयोऽत्र निखिला अपि नाथ देह-
सम्बन्धिनः खलु ततो भविता सुखं किम् ।

---

१. स्त्रियः बलरामशून्याश्च । २. सन्ततिमत्यः भ्रातृजायाश्च । ३. लक्ष्मीपतिः पतिर्नेति च । ४. मा कान् ।

आलोच्य विच्युतविकल्पनमच्युतैवं
तं त्वामनङ्गसुखदायकमागताः स्मः ॥ ८५ ॥

कथं त्वदनुशासनं भुवि विलङ्घ्यमित्यागताः
सखे कथमनादरामदयवद् गिरं भाषसे ।
महत्कृतमसाधु चेदपि सदेव नोचैः कृतं
समञ्जसमसाध्विति स्फुटमिहास्ति सार्वत्रिकम् ॥ ८६ ॥

वद सदय सदा[1]रताभियोगो
जगति जनैर्जगदीश वर्णितो यः ।
तव कथमुदिता परागताऽस्मिन्
स्फुटमितरा[2]श्रमशाखिशोभमाने ॥ ८७ ॥

सुर[3]तरुचिरशोभ - पल्लवस्त्वं
वदतु जनो निखिलोऽपि बाह्यदृष्ट्या ।
अतनुरुचिलता[4]नुभावभाक् चेद्-
भवसि ऋतं हि तदेश तद्वदामः ॥ ८८ ॥

तनुसुखमिह दातुं नेहसे चेत्तदास्तां
वयमपि करुणाब्धे नाल्पसौख्यार्थकामाः ।
हृदयगतसमीहापूरणेनाधुनैत-
दतनुसुखमखण्डं देहि देहीश पूर्णम् ॥ ८९ ॥

देयादेयव्यवस्था यदि मनसि तवास्त्येव पात्रानुसारि-
ण्यास्तामेतावतापि प्रभुवर न मनाग्घानिरस्माकमस्ति ।
देयानि द्राङ् मुनिभ्यस्तरुवरजफलान्याम्ररम्भादिकानि
क्षुद्राभ्यस्तद्दिशेश त्वमधर[5]मुचितं बिम्ब[6]मस्मभ्यमेव ॥ ९० ॥

अन्यस्मै प्रददातु वा न भगवन् पुत्रार्थितं त्वर्पय-
त्येवाल्पोऽयमनल्पमप्यतितरां सम्पाद्य यत्नाज्जनः ।

---

१. दारैःसहितस्तद्भावः प. सदालताभियोग इति च्छेदः प. रतं सुरतम् । २. गृहस्थे भिन्नाश्रमविशिष्टाः शाखिनो ब्राह्मणा आश्रमवृक्षाश्च । ३. सुरते रुचिरशोभः पल्लवो जारः कल्पवृक्षसमशोभपादाग्रश्च । ४. लता रतं च । ५. ओष्ठं नीचं च । ६. तुण्डीफलम् ।

धीरोदारमना अपि त्वमधुना कामार्थदानालस-
स्तद्वाच्यं किमु वाऽर्थ्यमिष्टमपरैरौदार्यमीदृग्यदि ॥ ९१ ॥

मूर्तः स्मरोऽस्तु मयि चेदिति वाञ्छसि त्वं
लक्ष्मीपते कलय सम्प्रति कामदानम् ।
सुज्ञोऽसि तत्तव पुरः किमुवाच्यमन्यै-
र्नादत्तमश्नुत इति श्रुतमस्ति शास्त्रम् ॥ ९२ ॥

अस्मत्तोऽसुलभं यदा दधिपयोऽयासीत्तदैत्यालयं
भूत्वा दैन्यमुखः सखे मुहुरहो तत्प्रार्थनामाचरः ।
सर्वस्वार्पणमद्य कलिपतमपि त्वं नैव गृह्णासि तद्-
युक्तं प्रीतिरलब्धवस्तुनि पुनर्लब्धे त्वनास्थोदयः ॥ ९३ ॥

रमालीलाग्राहिन् व्रजवनचरीभिर्युवतिभिः
सह क्रीडाव्रीडाकृदिति हृदि मा चिन्तय विभो ।
समत्वं योप्यङ्कं नयति नृपतिर्वाऽनधिकृतिं
गुरुः शिष्यं लोके भवति हि स एवातुलयशाः ॥ ९४ ॥

सौन्दर्यात्स्ववशो विधेय इति चेत् सर्वेश तत्त्वत्प्रिया-
दासीनामपि दासिकापदनखेनातुल्यभावा वयम् ।
चातुर्याद्यनवस्थितेस्तु सततं खेटस्थितिर्बोधिका
प्रेमैकं यदि हेतुरत्र तदलं वीक्ष्यानुकम्पां कुरु ॥ ९५ ॥

सरसमसरसं वा सारसं प्रेमपात्रं
भजति जगति भृङ्गस्त्वेवमेवेश जारः ।
चतुरमचतुरं वा प्राप्तमेवोपभुङ्क्ते
युवतिजनमिति श्रीनाथ वक्तुं त्रपा नः ॥ ९६ ॥

इमा यथेष्टाचरणे प्रवृत्ताः
कथं परेणात्र हि वर्तितव्यम् ।
त्वदुक्तवृत्तीरपि वक्षि नश्चेत्
त्वमीदृशं तत्किमितोऽपि वाच्यम् ॥ ९७ ॥

अविधिमज्जनकिल्बिषहानये कुरुत सूर्ययुतिं व्रतपूर्तये ।
विधिमिमं समुदीर्य तदा वयमृजुधियः प्रतिभातिसुवश्चिताः ॥ ९८ ॥

स्त्रीबुद्ध्याऽऽचरणं निषिद्धमिति चेद् बुद्धौ गृहीतं तदा
नास्मद्वाचमुरीकुरु त्वमथवा तद्बोधितार्थक्रियाम् ।
साध्वेतत्तु तवैष वीर मकराङ्कस्य[1] ध्वजो मूर्तिमाँ-
ल्लग्नः कर्णपदे वदन्निव ततस्तत्प्रोक्तदृष्टिर्भव ॥ ९९ ॥

विभावय विभावरीं हिमकरोऽयमासेवते
प्रसर्पति चकोरकोऽप्यमृतमर्पयन्नङ्गनाम् ।
कथं त्वमिह केवलो भवसि सालसः साल[3]सं
जडाशयचलं बुधा भुवि वदन्ति तद्दृश्यताम् ॥ १०० ॥

मनांस्यपि नपुंसकान्यतनुभान्यहो वश्यतां
क्षणेन मुरली निजैर्नयति सानुरागैः स्वरैः ।
पुमानपि भवानहो न खलु लेशवश्यः स्वरै-
र्भवत्यतनुरागिभिर्न इति चित्रमेतन्न किम् ॥ १०१ ॥

दैत्यैः साकं संगरे दुःखमासीदेवं सारे संगरे मा स्म संधेक् ।
आप्रारब्धं चावसानं बतायमानन्दात्मेतीक्षरतां स्वानुभूत्या ॥ १०२ ॥

अयं गुरुरयं बुधः कविरयं च वंशादिमः
पुमानिति कथं मया रतिरहो विधेयाऽनया ।
अलं वितथचिन्तया यदिह सत्पथालम्बिनः
त्वदेकसुरतोत्सवोत्सुकधियः समग्रा अपि ॥ १०३ ॥

पुत्रे सुतासमभिलाषिणि वंशजाद्ये
ताराभिलाषिणि विधौ[4]वविधिं श्रिते यत् ।
मध्ये त्वयैव परदारविचारकोऽय
मुद्दङ्कितो विधिरिहेति वयं न विद्मः ॥ १०४ ॥

---

१. मदनस्य । २. मत्स्यः कुण्डलाकृतिरूपः । ३. कमलम् । ४. ब्रह्मणि चन्द्रे च ।

देवस्त्वमेवाग्निरनङ्गदीप्ति-
रनेकशाखा¹श्रयिणो द्विजा²श्च ।
तद्देवताग्निद्विजसन्निधाने
विधिर्विधेयो विहितोऽस्तशंकम् ॥ १०५ ॥

चरन्ति भुवि ये भवद्वचनबोध्यमानं विधिं
भवन्त्यमृतभोजिनस्त इति वेदघण्टाध्वनिः ।
सतीत्थमधुना त्वदुक्तविधिमाश्रितानामहो
विलम्ब इह तत्कुतोऽधरसुधारसप्राप्तये ॥ १०६ ॥

पतिं सुरतरागदं सुतमखेदतापादकं
कुलं विमलमच्युताविरतभव्यदं भ्रातरम् ।
सदाचरणदर्शकानपरबान्धवानप्यहो
विहाय वनमागताः किमधिकं त्वितः पश्यसि ॥१०७॥

देवस्त्वं पुरुषोत्तमोऽसि भुवने स्त्रीरत्नभूता वयं
कोको यत्प्रभवोऽखिलोपि घटकः सोस्त्यावयोश्चित्तभूः ।
कुञ्जः कान्तगृहं रहः सुमलता चन्द्रः समुद्दीपकः
सत्येवं यदि नेष्टसिद्धिरपरं वाच्यं न दुर्दैवतः ॥ १०८ ॥

त्वं शीतांशुरहं चकोरललना सिन्धुस्त्वमस्म्यापगा
त्वं सूर्यस्त्वहमब्जिनी जलधरस्त्वं केकिकान्ताप्यहम् ।
किं वच्म्यच्युत भूरि शुद्धममृतं त्वं दीनमीनाङ्गना-
ऽहं तत्त्वामपहाय नास्ति कतमाप्यन्याऽधुना मे गतिः ॥ १०९ ॥

शिवः³स्वरूपस्त्वमहं सुमङ्गला
समुज्ज्वलाङ्गस्त्वमहं च गौर्यहो ।
धृताङ्गभूतिस्त्वमिहाचलोद्भवा-
ऽऽगता त्वदर्धाङ्गसमागमाशया ॥ ११० ॥

---

१. वेदविभागः वृक्षशाखाश्च । २. ब्राह्मणाः पक्षिणश्च । ३. शंकरः कल्याणं च ।

प्रा[1]चीनवाग्विलसिते बहुशोभि[2]नेत्रे-
हल्य[3]ास्थिताधिकरतौ बुधगोत्रभव्ये ।
गोपा[4]लके मघवतीव भुवि त्वयीशे
गोपालिका कथमहं शरणं न यामि ॥ १११ ॥

सत्पु[5]ष्पके सततपुण्यजनाभिसेव्ये
पद्मा[6]श्रिते च वसुम[7]त्यधिकामितार्थे ।
सद्राजराजपदभाजि सति त्वयीशे
कं यामि कान्त शरणं वद साल[8]काहम् ॥ ११२ ॥

संकल्पशालिनि विदेहपदाभिधेये
कान्तोल्लसत्पदगतौ मकराङ्कभूषे ।
उग्रो[9]त्तमस्थिति रुषि त्वयि नाथ कामे
कामं सदा मम रतेरुचितो विहारः ॥ ११३ ॥

पद्माधिकप्रियमनन्तपदं तमोभि-
न्नामात्मकं कृतरथा[10]ङ्गविहारशोभम् ।
भास्वन्तमच्युतभवन्तमधिश्रिता स-
च्छायेव भूरि विहरेयमहं सुखेन ॥ ११४ ॥

नित्याचलावनपरे सरसे सुराढ्ये
सन्मन्दरक्षण विचित्ररुचौ सुकल्पे ।
रत्नाकरस्थितिजुषि त्वयि सर्वयोषिद्-
रत्नामिधाऽहमत एव समागताऽस्मि ॥ ११५ ॥

सामोदसर्वगतिके सुरसालशोभे
राधा[11]न्तरंग - विलसत्परिपूर्णभावे ।

---

१. प्राच्या इन इति वाक् प्राचीना चासौ वाक् च । २. नायको लोचनं च । ३.हली बलरामः अहल्येत्यकारप्रश्लेषश्च । ४. स्वर्गो धेनुश्च । ५.पुष्पाणि विमानं च । ६. लक्ष्मी निधिश्च । ७. पृथ्वीद्रव्यविशिष्टे च । ८. सा अलका अलकैः सहिता च । ९. शंकरः भयंकरश्च । १०. आयुधं पक्षी च । ११. राधिका वैशाखश्च ।

कान्ते वसन्तसदृशे सुरभीव्यनाम्नि
प्रातेक्षितुं त्वयि लतोदयवृद्धिभावम् ॥ ११६ ॥

सर्वाचलोन्नतपदे सुमनः - सुदृष्टे
सूर्याद्यनेकविधसत्पथिकाभिसेव्ये ।
सत्कान्तया युवसुराधिकयाऽतिभव्ये
मेराविव त्वयि कथं न च राधिकेच्छा ॥ ११७ ॥

सर्वे नरास्त्वद्वरा जगतीति भूयो
भूयोदयाहृदय लोकमुखाच्छ्रुतं मे ।
त्यक्त्वा पतिं निजमतस्तरसाऽऽगताऽह-
मीड्यं वरं वरयितुं भगवन्भवन्तम् ॥ ११८ ॥

उभयकुलतटाया भर्तृनक्राश्रितायाः
स्वजनमकरभाजोऽगाधलज्जापगायाः ।
परतटमुपगन्तुं जातकामाऽऽगता य-
स्त्वमलमुडुपवंशालम्बि - विख्यातकीर्तिः ॥ ११९ ॥

सर्वज्ञचूडामणिवंशभूषण
त्वयाऽखिलं ज्ञायत एव यद्यपि ।
न पल्लवो भात्यलतोदितः क्वचित्
तथाप्यहं शंसितुमेतदागता ॥ १२० ॥

सत्यं ब्रूहि जनाधिनाथ मदनासक्तं न वा त्वन्मन-
स्तच्चेदस्त्युचितं न ते यदुपते मत्कामनिर्भर्त्सनम् ।
नो चेन्मय्यनुराग एव फलितस्तन्मा दयालो परी-
हासेनापि वदाधुना निजगृहं याहीत्यनाथाऽस्म्यहम् ॥१२१॥

का त्वं ददासि किमु वेति तवाशयश्चे-
ज्जानीहि मां यदुपते तनुदानशौण्डाम् ।

---

१. चन्द्रः नौका च । २. जारः किसलयश्च । ३. न लतोदितः न रतोदितश्च ।
४. मयि अनासक्तं मदने आसक्तं च ।

यद्यङ्गमिच्छसि गृहाण नचेदनङ्गं
दास्ये यथाभिरुचि काममुरीकुरुष्व ॥ १२२ ॥

पद्माब्जोत्पलकञ्जकुन्दकलिकाबन्धूकसच्चम्पका-
न्यादायादरतः सुमान्यभिनवान्यासक्तचित्ताऽस्म्यहम् ।
सत्पुष्पेष्वनुरक्तिरस्ति भवतः श्रुत्वेति याता द्रुतं
तद्योगेन कृतार्थतां नय विभो तान्याश्रितां मामपि ॥ १२३ ॥

आयातो यदि जातुचिद्धि कपिलाषष्ठीष्टयोगस्तदा
कुर्वन्त्यद्भुतपुण्यकृद्धितरणं सर्वे सुपर्वोत्सवम् ।
श्लाघ्ये त्वत्पदपर्वणीह कपिलाकोटीविशेषोत्सवे
सर्वस्वार्पणमद्य कर्तुमहमप्यद्धाऽऽगता गोपते ॥ १२४ ॥

लप्स्ये सुधामाप्तजनाधरास्थिता-
मित्याशयेनैव मया दयोदधे ।
त्यक्ताः कुधामाप्तजनाधरास्थिता-
स्तत्ते किमन्याय्यमिहैक्षि कर्म मे ॥ १२५ ॥

व्रजेऽतिविरहं विभो तव विभाव्य यातामिमां
व्रजेति कथमुच्यते भृशमरुन्तुदं कर्णयोः ।
ददासि यदि नाधरामृतरसं रसान्तर्गता
भवामि सरसा नदो शरणमस्तु वा दिष्टतः ॥ १२६ ॥

निशम्य सुरतोत्सवप्रदमिहावतारं तवा-
ऽच्युतालमहमागता हृदि निधाय तत्प्रार्थनाम् ।
ऋतं यदि तदस्ति तद्दिश विलम्बदम्भैरलं
कथं न सुरतोत्सवप्रदगतिर्भवेन्माधवः ॥ १२७ ॥

त्वं गोकुलाधिपसुतो भगवन् वयं च
तद्दासिसज्जनसुता इति युक्तमेव ।

---

१. कुसुमेषु कामश्च । २. गोजातिविशेषः पर्वविशेषश्च । ३. सुधामिति-च्छेदः ४. पृथ्वी । ५. शोभनलता सुरतं च । ६. वसन्तो विष्णुश्च ।

स्वर्णोल्लसत्कर[1]समर्पणमस्मदीयं
तत्संग्रहोऽपि च तवेति कुतो विलम्बः ॥ १२८ ॥
युष्मद्वासः प्रीतिकारीति पूर्वं
साक्षादुक्तं श्रीमता यद्व्रतान्ते ।
सम्प्रत्येतद्विस्मृतं भाति यस्मा-
दस्मद्वासोऽजन्यहो ग्रासकृत्ते ॥ १२९ ॥
सरलभावमवेक्ष्य सुवंशजं निजकराकलितं कुरुषे सदा ।
तदधिगम्य विभो मुरलीस्थितेर्वयमपीह तथैव धृताशयाः ॥ १३० ॥
धृत्वा मौनमवस्थितं यदि पुनर्नोच्येत चेन्मत्कृति-
र्गुर्वग्रे तदहं करोमि नितरां यद्धृत्प्रियं वो भवेत् ।
अस्मन्मन्दिरदुग्धमोषणविधावस्माभिरालोकिते
यत्त्वं भूर्यवदस्तदेतदधुना कुर्वद्य सत्यं वचः ॥ १३१ ॥
वेदास्तथा स्मृतिचयाश्च पुराणसंघाः
सिद्धाः स्वकार्यकथने भुवि सत्प्रमाणम् ।
कात्यायनीव्रतफलानुभवे कथं वे-
त्येतद्विचारयितुमत्र समागताः स्मः ॥ १३२ ॥
वक्तव्यं बहु चेद्वदिष्यसि महावाचाटिकाश्चेटिकाः
स्थातव्यं यदि नाम मौनमुररीकृत्य प्रभो तज्जडाः ।
तत्कर्तव्यमतः परं किमिति युक्तार्थं न धीर्धावति
धन्यास्ता निजवाग्भिरीशमनिशं स्वं प्रीणयन्त्यञ्जसा ॥१३३॥
अलं वाग्भिरेताभिरुक्तार्थिकाभि-
र्मुकुन्दैकमेवात्र सारं वदामः ।
विना तेऽधरोद्यत्सुधापानलाभं
धरासुस्थितिर्दुर्लभा नः प्रभाति ॥ १३४ ॥
विशिण्ढि रागं प्रणयावलोकै-
र्निष्पिण्ढि रोगं स्मितभेषजेन ।

---

१. हस्तोराजभागश्च । २. वस्त्रं निवासश्च ।

प्रदेहि भोगं विविधोपचारै-
निर्धेहि कीर्तिं भुवि किंकरीणाम् ॥ १३५ ॥
पतिर्भव रतिं देहि मतिरस्तु पदाम्बुजे।
भक्तवत्सल किं ब्रूमस्त्वदन्या नैव नो गतिः ॥ १३६ ॥
भर्तुः पितुश्च शरणं शरणं सतीनां
तत्त्वच्युत च्युतमिति प्रविहाय याताः।
नाथ त्वयापि विपिने समुपेक्षिताश्चेत्
सर्वात्मनाप्यशरणा इति किं न वेत्सि ॥ १३७ ॥
न विद्मो विज्ञप्तिप्रचरणविधिं नैव युवति-
स्वभावस्थान् विद्मो वशितपुरुषानप्यभिनयान्।
न विद्मो वा सेवाऽऽचरणमपि दासीसमुचितं
न जानीमस्त्वन्यत्सदय तव पादप्रणमनात् ॥ १३८ ॥
आकारिते वत मया निजकार्यजातं
त्यक्त्वाऽऽगतो निशि वने जन एष नूनम्।
एतावदेव सदय स्मर नैजचेत-
स्येतावतैव भविताऽखिलदुःखभङ्गः ॥ १३९ ॥
यदि हास्यतामिति सकृद्भवतोक्ते
जनहास्यतापदमहो न भवामः।
त्वमुपेक्षणं वितनुषे यदि न स्यात्
तदुपेक्षणं वत कुतोऽपि विभो नः ॥ १४० ॥
न धर्मं नाप्यधर्मं वा विद्मोऽस्मिन् श्रीश कर्मणि।
जानीमस्त्वेकमेवेदमघघ्नस्त्वं व्रजार्तिहा ॥ १४१ ॥
त्वत्पादजलजोपास्या दास्यस्ते त्वामुपागताः।
स्वामी त्वमसि तल्लोके न नयस्वोपहास्यताम् ॥ १४२ ॥

इति विक्लवितमिति : १०.२९.४२.

मत्पादभक्त्यतिशयोपचयार्थमस्मिन्
जातं कदाचिदपि चेदविधेयकर्म।

तद्धर्मतोऽपि गणयामि गरीय एवं
सम्बोधयन् सुखमलभ्यमदात्स ताभ्यः ॥ १४३ ॥
न धर्मो विधिनिर्दिष्टो नाधर्मोऽप्यविधेयजः ।
किन्तु तौ यावुभौ श्रीशप्रीत्यप्रीतिविधायिनौ ॥ १४४ ॥
त्यागेनैके चामृतत्वं यदाहु-
र्वर्गैपैकोद्देशिनी युक्तमेतत् ।
यस्मात्स्त्रीभिः कृष्णसंगेऽप्यवाप्तं
कामाप्ताभिः स्वामृतं देवतेभ्यस् ॥ १४५ ॥
संयोगाध्वविहारिणीभिरभितो नाडीभिरन्तर्वने
सैकाभिः शतसंख्यकाभिरतनुप्राप्त्युत्सुकाभिस्तदा ।
भावं वीक्ष्य तदीयमुज्ज्वलमयं रेमे स योगीश्वरो
योगार्थोऽयमुदीरितो मुनिपदैस्तत्तत्पदैरूह्यताम् ॥ १४६ ॥
यः सर्वलोकसत्प्रेमसीमापात्रमधोक्षजः ।
जातास्तत्प्रेमपर्याप्ता यास्तास्ता इव शोभनाः ॥ १४७ ॥
तासामिति : १०.२९.४८.
यस्याहंकृतिरन्तरे समुदिता तस्योत्तमस्यापि वा
बाह्याभ्यन्तरभास्वरोऽप्यहमिह स्यामिन्द्रियागोचरः ।
साधूनामनहंकृतिस्थितिकृते संबोधयन् श्रीपति-
र्गोपीमण्डलमण्डितोऽपि कुतुकादासीत्तदान्तर्हितः ॥ १४८ ॥
नानाविलासपरिरम्भगचुम्बनाद्यै-
रासां बहिर्हितमकारि यथा तथैव ।
अन्तर्हितं बत विधेयमिति प्रकाम-
मन्तर्हितोन्तरगमानमवेक्ष्य सोऽभूत् ॥ १४९ ॥
भवत्यन्तर्हितो लोके सुहृत्साधारणोऽपि यः ।
सोऽभूत्तथाऽत्र किं चित्रं मित्रमण्डलमण्डितः ॥ १५० ॥

१. व्यासपादैर्व्यासैरित्यर्थः । २. हितकारी अन्तर्धानं प्राप्तश्च । ३. सुहृत् सूर्यश्च ।

नीतो मे वशतां प्रभुर्निजगुणैः स्नेहार्द्रहार्दाशयै-
रेवं विश्वसितेन जातुचिदपि स्थेयं न पुंसाऽञ्जसा ।
मायाराशिविहारिणाऽत्र निरहंकारेण किन्त्वन्तरे
ध्येयोऽसौ न हि चेत्परस्य तु कथा का गोपिकानां पुरः ॥१५१॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## ॥ अथ त्रिंशोऽध्यायः ॥

सर्वात्मकोऽपि तद्भिन्नो मूर्तिमानप्यदृष्टिगः ।
अक्रीडोऽप्यद्भुतक्रीडः सोऽस्तु नः शरणं प्रभुः ॥ १ ॥
भेदाभेदोपास्यबुद्धिमालम्ब्याखिलवस्तुषु ।
वृत्तीनां या स्थितिः सोपासना सात्र निगद्यते ॥ २ ॥
संयोगेऽहंकृतिर्नोपासनायामिति तद्वरा ।
उपासनेति सारब्धेत्येषोह्याऽध्यायसंगतिः ॥ ३ ॥

अन्तर्हिते इति : १०.३०.१.

तदा तासां पूर्वाभ्यधिकशतभागः समभवद्
व्रजस्त्रीणां तापः प्रियविरहदावानलभवः ।
अतस्तत्र भ्रान्तिभ्रमणमुचितं यत्स्फुटमिहा-
ऽप्यलब्धाल्लब्धस्य च्युतिरतनुखेदाय भवति ॥ ४ ॥
लोकेषु लभ्यमविशेषमपीह वस्तु-
यातं यदि क्वचिदपि क्षणमात्रमेव ।
संभ्रान्तधीर्भवति तेन पुमान् किमत्र
चित्रं स्त्रियः प्रभुकृते विपिने तथाऽऽसन् ॥ ५ ॥
अन्तर्हितस्वरूपः प्रकाशतेऽन्तर्हितं सदा कुर्वत् ।
नैवंविषया यावद्धीस्तावत्स्फुटाऽस्य तापजनिः ॥ ६ ॥

तदात्मिका इति : १०.३०.२.

विरहजतापो विरहे विरहश्च द्वैतधीकृतो भवति ।
अवधार्य युक्तमासंस्तापनिवृत्त्यै च तास्तदात्मानः ॥ ७ ॥
यदस्माभिः सम्प्रत्यतनुतरतापापहृतये
धृतं तत्ताद्रूप्यं विरहसमभावेन भविता ।
स चाप्यस्मद्रूपो युवतिजनदुःखानुभवभाक्
क्षमं स्यान्मत्वाऽऽसन्निति विधृततद्रूपकृतयः ॥ ८ ॥

गायन्त्य इति : १०.३०.४

एक एव प्रभुप्राप्तेरुपायो भुवनेषु यत् ।
वस्तुमात्रे तदध्यास इत्यकुर्वंस्तथैव ताः ॥ ९ ॥

दृष्टो व इति : १०.३०.५

अत्रागमाः[1] सन्ति विभिन्नशाखाः
किं तैर्विवादाकुलितैर्वयस्याः[2] ।
सद्बोधिशाख्यस्त्वयमेव[3] यस्मा-
दनन्तमार्गं किल पृच्छतैनम् ॥ १० ॥

यदश्वत्थ वृक्षेश संसाररूपं
नितान्तं भवन्तं महान्तो वदन्ति ।
तदस्मांस्त्वदंघ्रिप्रदेशावलम्बाः
सकृद् दर्शयेशस्य संसाररूपम् ॥ ११ ॥

नित्यारण्यनिवासिनोऽपि जटिनः शीतोष्णतुल्यस्थितेः
शाखोल्लासिसदागतेरतितरां न्यग्रोध सद्वर्तिनः ।
अज्ञानं भवतोऽपि चेद्भगवतस्तत्कं प्रति ब्रूमहे
को वाऽस्माकमिहेशदर्शनकृते साहाय्यदाने क्षमः ॥ १२ ॥

कच्चिददिति : १०.३०.६

कुरवकोऽयमिति[4] द्रुम कीर्तित-
स्त्वमनयाऽभिधया त्रपसे यदि ।
कथय कृष्णपदं भवतोऽभिधां
सुरवकोऽयमिति प्रथयामहे ॥ १३ ॥

अस्मत्पदाश्रयमवाप्य भवान्विकासं
लब्ध्वा ह्यशोकपदमेत्य[5] सुखान्वितोऽभूत् ।

---

१. वेदाः वृक्षाश्च । २. विवादः वीनां पक्षिणां वादश्च । ३. सद्बोधवान् अश्वत्थवृक्षश्च । ४. कुशब्दकः वृक्षविशेषश्च । ५. शोकरहितं वृक्षविशेषश्च ।

तं चोपकारमधुना स्मरसि द्रुम त्वं
तन्नोऽद्य कृष्णकथया लघु कुर्वशोकाः ॥ १४ ॥

नागोऽस्ति[1] भूरुह भवानिह गूढपादः
ख्यातोऽस्ति नागशयनो भुवि नः सखापि ।
श्रान्त्वा चिरं कलितभूरि परिश्रमोऽसौ
प्राप्तो यदीह शयितुं त्वयि तद्वदाशु ॥ १५ ॥

पुन्नागोऽस्ति[2] भवान् स चापि पुरुषः प्रोत्तुङ्गकीर्तिस्तथा
देवानामपि वल्लभः स च भवांस्तत्केसर त्वां नुमः ।
अस्मान्दर्शय तत्पदं त्वमसि यद्विज्ञाततत्त्वको
न ह्यल्पेन पुमांल्लभेत सुकृतेनैतत्स्वरूपं कचित् ॥ १६ ॥

धत्से सुवर्णकुसुमानि बहूनि भूमौ
त्वं चम्पकेति तव पादमुपागताः स्मः ।
कास्मत्प्रियोऽस्ति कथयेति कृतेऽनुयोगे
त्वेकं सुवर्णमपि नार्पयसीति किं तैः ॥ १७ ॥

कच्चित्तुलसीति : १०.३०.७

अतुलशीलगुणां तुलसीमिमां
मनुमहे वयमार्जवशेवधिम् ।
अपि सपत्नजनानवलोक्य या
प्रसभनम्रमुखी खलु विद्यते ॥ १८ ॥

अयि तुलसि धात्रि युवयोरतुलचरित्रो हि हार्दभावोऽस्ति ।
यत्त्वं पदगैतस्या यत्त्वं छत्रायिता भवसि ॥ १९ ॥

मालतीति : १०.३०.८

मल्लीलायां[3] विहरसि जानास्यखिलान्ततश्च मल्लीलाम् ।
तद्वद कुत्र सखा मम ममतापात्रं यतस्त्वमसि ॥ २० ॥

---

१. वृक्षविशेषः शेषश्च । २. पुरुषश्रेष्ठः वृक्षविशेषश्च । ३. मल्लीति-संबोधनम् इलायां पृथ्व्यां मम लीलायां च ।

परपुंमनसो वशीकृतिं तां कथयास्मान् वनयूथिके यतस्त्वम् ।
गणिका[1]सि तवैष मुख्यधर्मो वयमप्यत्र तवोपदेशभाजः ॥ २१ ॥

अपि पलाश[2]शतं सुमनः[3]शतं
युगपदेव चकास्ति विमत्सरम् ।
तदिह चित्रकरो गणिका[4]लता-
ऽतिशयवृद्धिवशीकरण - क्रमः ॥ २२ ॥

हे मल्लि त्वमनन्तरागिणि मनोजाता[5]य सच्छन्नवे
कृत्वा बाणसमर्पणं प्रतिपलं दीनाः प्रियप्रोज्झिताः ।
अस्मान् हंसि कुतोऽपराधरहितांस्तत्सर्वथा नोचितं
सूनो[6]ल्लासिनि वा तव क्षममिदं त्वद्धर्म एवेदृशः ॥ २३ ॥

चूतप्रियालेति : १०.३०.९

तवात्र सुरसाल[7] इत्यभिहितं हि नामार्थव-
त्तवाऽस्ति यदि पूरयाभिमतमस्मदीयं लघु ।
न चेदमर[8]भूरुहा समकथां वृथा तत्प्रथां
वहस्यतिमहत्पदं किमु न लोकहास्यं लघोः ॥ २४ ॥

रसाल किल भूतले त्वमसि गोपिका[9]नन्दकः
प्रथेति च वृथैव यद्वितरसीह नास्मत्सुखम् ।
सती यदथवा सुतं व्रजपतेर्वतादर्शयन्
युतः किसलयासिना स इ[10]व गोपिकानन्दकः[11] ॥ २५ ॥

निखिलादपि वृक्षजातिवर्गात् सहकारोऽयमतीव दुःसहं यत् ।
तनुते तनुतापमत्र युक्तं यदसौ स्वीकृतसौर[12]भानुवृत्तिः ॥ २६ ॥

निजगतिरञ्जितनन्दं कमलानन्दं सुरेशतरुकन्दम् ।
विहरन्तं स्वच्छन्दं दर्शय माकन्दराज गोविन्दम् ॥ २७ ॥

---

१. लताविशेषः वेश्या च । २. राक्षसाः पत्राणि च । ३. देवाः पुष्पाणि च । ४. वेश्या तत्संज्ञिका लता च । ५.कामाय । ६. हिंसा पुष्पं च । ७. शोभनो रसालः सुरतरुश्च । ८. कल्पवृक्षेण । ९. गोपस्त्रियः, गावश्च पिकाश्च । १०. कृष्ण इव । ११. आनन्दकर्ता खड्गश्च । १२. सौरभं सूर्य-किरणाश्च ।

कौविदारणचणस्त्वमिहासि
सन्दधाति समतां तव सोऽपि ।
कोविदार तव पादमुपेताः
कोविदा रतरसेऽस्य कुरुष्व ॥ २८ ॥

भोः श्रीविल्व भवान् सदा शिवरतेर्दतीति सङ्ख्यो मुहुः
श्रुत्वोत्कण्ठितचेतसस्तव पदं प्राप्ता हि तल्लिप्सया ।
आजन्मार्जितमञ्जुलोज्ज्वलयशोरक्षात्तदीक्षोऽसि चेत्
तर्ह्यव्याहतभव्यसेव्य - भगवद्रत्यर्पणं नः कुरु ॥ २९ ॥

श्रीफलोऽहं कथं नाम श्रीसपत्नीजनान् ब्रुवे ।
नैवं चिन्तय वृक्षेश यत्त्वत्पदजुषो वयम् ॥ ३० ॥

वकुल कुलं तव सरलं यदि वा सुमनःसुगन्धमावहसि ।
तर्ह्यस्मदीयसुमनःसुगन्धमादर्शयेह नन्दसुतम् ॥ ३१ ॥

वासोऽस्मदीयमपहृत्य यदाऽच्युतेन ।
संस्थापितं त्वयि कदम्ब तदा त्वयैव ।
विज्ञातमुत्कपटधीः स च वा वयं वे-
त्यद्य स्वतन्त्रवचसा किमु सूचयामः ॥ ३२ ॥

सत्याश्रये तव भवेन्न भुजङ्गबाधा
स्यात् प्रत्युत प्रतिपदं स्ववशी भुजङ्गः ।
कृष्णे त्वदाश्रयिणि दृष्टमिदं कदम्ब
तत्तद्धियैव वयमद्य समागताः स्मः ॥ ३३ ।

यदा निजफलैरलं रघुपतिस्त्वया तोषित-
स्तदा बदरि संस्तवस्तव बभूव लोकोत्तरः ।
ततः प्रभुरिहाधुना स्फुटमसौ समाहूयतां
यतः परिचयस्तवैव च पुरातनो दृश्यते ॥ ३४ ॥

---

१. विदारणं पक्षिदारणं च । २. शंकरप्रीतिः कल्याणीरतिश्च । ३. विल्ववृक्षः श्रियः फलं यस्मादिति च । ४. हर्षं च । ५. उत्कृष्ट-कपटधीः उत्कः उत्सुकः पटधीश्च । ६. सर्पो जारश्च ।

पुत्र्या दुःखाद् भर्तृदत्ताच्च सौख्यात्
सैका लोके तद्द्वयात्का सवित्री।
तत्ते वाच्यं किं पुनर्नूत्नमस्मद्-
दुःखं यत्त्वं मातृरूपासि धात्रि[1] ॥ ३५ ॥

प्रियोऽस्माकं धात्रीं वदति भवतीं नन्दतनयः
ततस्त्वं नः श्वश्रूरिति तव पदन्यस्तशिरसाम्।
अखण्डाऽस्तु प्रीतिः समभिलषितार्थप्रजननी
सदाभर्तुर्युष्मस्त्विति दिश सदाशीर्गिरमहो ॥ ३६ ॥

पर्वाश्रितोऽपि न ददातु विधुः सुपर्वा-
श्रिथ्योऽपि चामरगणः कृपणस्वभावात्।
दूर्वे[2] त्वमीशपददर्शनपर्वदानं
कुर्वद्य पूर्णशतपर्वयुता यतोऽसि ॥ ३७ ॥

येषामस्ति सदा ह्यमार्गवसतिः किं तैर्वृथैवोन्नतै-
र्भूजातैरथ तत्पदाश्रयितया किं वा भवेदीप्सितम्।
भूमौ शैखरिक[3] त्वमेव यदपामार्गोऽस्यवृद्धोऽपि तत्
सन्मार्गं भगवत्प्रदर्शकमहो सन्दर्शयास्मानिह ॥ ३८ ॥

स्थाणुरेष[4] पुरतः सखि भाति
तद्भवेत् स खलु तत्र परेशः।
मित्रभावमनयोरनपायं
यद्वदन्ति निगमागमविज्ञाः ॥ ३९ ॥

कृष्णागम त्वं यदि वेत्सि कृष्णा-
गमप्रकारं यदि वा ब्रवीषि।
तत्सर्वभूजन्मसु मानयाम-
स्त्वामेव विज्ञातनिजस्वरूपम् ॥ ४० ॥

---

१. उपमाता आमलकी च। २. उत्सवः। ३. वृक्षैः। ४. वृक्षविशेषः। ५. अपगतः अमार्गो यस्मात् स पूर्वोक्तवृक्षश्च। ६. शाखाशून्यवृक्षः शिवश्च।

कृष्णकान्तिरनुरक्तहृत्स्थिति-
मङ्गलादिविबुधार्चनशोभी ।
रक्तचन्दन भवानिव सोऽपि
वर्तते वद भवेद्यदि दृष्टः ॥ ४१ ॥

तिलकोऽसि यथार्थस्त्वं सकलागमराशिषु ।
श्रीमानसि च तद् ब्रूहि ब्रह्म देहि लसत्सुखम् ॥ ४२ ॥

हे पाटीर भुजङ्गभूषिततनुस्त्वं सर्वदा वर्तसे
तद्ब्रूह्यत्र समागतः किमधुनाऽस्माकं भुजङ्गाग्रणीः ।
नैवायं प्रतिवक्ति चेन्न वदतु स्पष्टानुरक्तान्तरां
पृच्छामो रुचिरां भुजङ्गलतिकामेनां भुजङ्गस्थितिम् ॥ ४३ ॥

रे रे कपित्थ निजमन्मथसंज्ञयाऽस्मा-
नुत्तेजयस्यतनुकर्मणि किं वृथैव ।
यः सर्वदा दधिफलादनलब्धकीर्ति-
स्तं चेत्प्रदर्शयसि तत्किमपि स्तुमस्त्वाम् ॥ ४४ ॥

वक्रता तव फलेषु दलेषु
सूक्ष्मता कठिनता च शरीरे ।
याऽम्लताऽस्ति च रसेष्वपि चिञ्चे
यास्यतीह यदि दर्शयसीशम् ॥ ४५ ॥

यदागमज्ञाः[3] कथयन्त्युदुम्बर
त्वामुत्सर्वाङ्गं पशुरक्षणक्षमम् ।
तत्साधनीभूय निरङ्गयोजनं
सम्पूरयास्मत्प्रियसङ्गमोत्सवम् ॥ ४६ ॥

अनेकजन्तुपोषणं फलेन येन जायते
तथाविधानि यत्फलान्यनेकशोऽत्र सन्ततम् ।

---

१. जारः सर्पश्च । २. दधि च फलानि च तेषामदनं कपित्थस्य फलादनं च । ३. वृक्षा वेदाश्च । ४. उत्कृष्टः सवो यज्ञस्तदङ्गम् ।

दधास्युदुम्बर स्फुटं ततस्तवाधुनोचिता
यदस्मदीयजीवनाच्युताप्तिसत्फलोद्धृतिः ॥ ४७ ॥
समंदारैरतिश्रेष्ठो देशोऽसावनुदृश्यते।
तद्यात यामस्तत्रैव भवेत्प्रायः शठाग्रणीः ॥ ४८ ॥
त्यागोऽस्माकमकारि दैत्यरिपुणा तत्किं विहारेऽधिकं
न्यूनं वाऽभवदेतदीक्षितमिदं जानीमहे नाण्वपि।
स्याच्चेत्तेन निरूपितं तव शिवे तद् ब्रूहि पथ्यावहं
पूर्वं तत्प्रियवादिनीह यदसीत्याश्रुत्य पृच्छा कृता ॥ ४९ ॥
यत्क्लेशान् शमयस्यहर्निशमपि श्रेयःप्रदात्री तथा
लोकस्येति शमी शिवेति तव सन्नाम प्रसिद्धिं गतम्।
सत्येवं शरणागताः शमि समालोक्यापि नः सम्प्रति
तूष्णींभाव इहैष ते समुचितः किं कृष्णवर्त्मात्मनः ॥ ५० ॥
अशोकबकुलाम्रकक्षुरकचम्पकादिद्रुमा
जगुः सफलमस्ति वः प्रचुरदोहदेनैव नः।
तदस्य किमु कल्पितं फलमनल्पतापोऽथवा
प्रसिद्धकलिकालतोदयनिदानताऽत्र स्फुटा ॥ ५१ ॥
रे कुब्ज पुञ्जितमहीरुह रञ्जितोऽस्मि
सिञ्जारवैर्बहुभिराभिररञ्जितोऽहम् ।
स्मृत्वोपकारमिममद्य दिशा कयापि
सन्दर्शयास्मदतनुश्रमहारि वस्तु ॥ ५२ ॥
यत्र स्याद्भुवि नारिकेल्यनुसृतिस्तत्रैव मित्रागमः
स्यात्पीडापि न शात्रवी प्रभवतीत्यालोच्य याता वयम्।
पूर्वस्मादधिकामनङ्गरचितामार्तिं वहामोऽधुना
तद्धूर्तेश्वरि नारिकेलि विलसन्नाम्ना त्वया वञ्चिताः ॥ ५३ ॥

---

१. सः मंदारैः समं दारैरिति च च्छेदः। २. हे शमि। ३. कृष्णवर्त्मा अग्निरात्मनि यस्याः कृष्णमार्गे आत्मा यस्याश्च। ४. कलिकाश्च लताश्च कलिकालस्य भाव इति च। ५. सम्बुद्धिः। ६. अलं जितः रञ्जितो नेति च। ७. न अरिकेलिः वृक्षविशेषश्च।

यदा यदाऽस्मद्द्विजवर्णनं प्रभु-
श्चकार शृङ्गारशिरोमणिस्तदा ।
स्मृतिस्तवैवास्य बभूव दाडिमि
ततो भवेद्भात्यभिवीक्षितस्त्वया ॥ ५४ ॥

जम्भारिसूनोरमलस्य वार्तां
प्रष्टुं हठाद्दन्तशठं न यात ।
तापप्रदातैव भवेद् गते तु
यज्जम्भलोऽयं रिपुपक्षघाती ॥ ५५ ॥

वयमन्तेवासिन्यस्त्वमनुग्राहीति युक्तमिदमजनि ।
तदकैतवमिह वाच्यो यदुपतिपदपद्मलाभकृन्मन्त्रः ॥ ५६ ॥

यत्पल्लवैरभिनयस्यतनुं प्रसादं
धत्से महेश्वरमुदेऽम्बरशालि रूपम् ।
शैलूष इत्यभिहितं तव नाम सत्यं
ब्रूमस्ततः प्रकटितं कुरु नायकं नः ॥ ५७ ॥

मध्वागमोऽत्र लसतीत्येवं गिरमाकलय्य कस्याश्चित् ।
दुद्रावैका दैत्यभ्रान्त्याऽन्या वैष्णवाशयात्तस्थौ ॥ ५८ ॥

सरल सरलता तेऽन्वर्थिका भाति यस्मात्
तदिह वद मुदा नः कुत्र स प्राणनाथः ।
त्वदुपकृतिमिमां संस्मृत्य दास्यामहेऽद्या-
भिनवसरलतां ते स्वां पुनर्दार्ढ्यहेतोः ॥ ५९ ॥

अहं जगति केवलोनुपमकृष्णरूपोऽस्त्यलं
तमाल दलचालनप्रकटितेन गर्वेण ते ।
स च स्वपदसेविनां हरति तापमत्युज्ज्वलं
भवानिह तु खेदयत्यतनुतापदानेन नः ॥ ६० ॥

---

१. उपेन्द्रस्य । २. जम्भं दैत्यं लाति सः वृक्षविशेषश्च । ३. अनुग्रहशीलः अन्विति ग्राही वृक्षविशेषश्च । ४. राजा शंकरश्च । ५. नटः बिल्ववृक्षश्च । ६. मधोर्दैत्यस्य मध्वानां च आगमः वृक्षविशेषश्च । ७. वृक्षविशेषः । ८. हारलताम् । ९. कामतापः महातापश्च ।

सत्कुक्षौ प्रसवोऽस्ति यस्य भुवने नित्यं स एवाच्छलं
सत्पात्रं सुखदुःखहृद्गतवसुक्षेपस्य साधूदितम्।
तत्सख्यः किमिति प्रयात सविधं तस्याश्रयात्किं फलं
स्याद्वा ख्यातिमधिश्रितो हि भुवने स्पष्टं कदम्बेति यः ॥ ६१ ॥

लोके यद्यपि सर्वतो हरिकरिद्वेषोऽस्ति नैसर्गिको
नैषोऽथापि सुरेभराजि यदसौ तद्वाहनं श्रूयते।
अभ्यर्णे हरिरस्ति ते किमिति मत्प्रश्नं सदिष्टार्थकं
भो ऐरावत वृक्ष हेलयसि किं कूजद्विरावैर्मुधा ॥ ६२ ॥

अहो शाल्मलि त्वं यदि श्रीधराप्ति-
लसद्वासनापूरणं चेत्करोषि।
तदा मान्यवाचो वयं नामधेयं
स्थिरायुस्तवेत्याशिषा वर्धयामः ॥ ६३ ॥

एह्येहि शीघ्रमिह कृष्णपदाब्जलाभो
भूयादयत्नत इति प्रतिभाति यस्मात्।
देशोऽयमस्ति निखिलोऽपि नलाधिकश्री-
स्तत्रेशदर्शनमृषिः सुलभं जगाद ॥ ६४ ॥

अतिगतिवशतश्चरणौ श्रान्ताविति मनसि मा तमत।
स्यन्दनमिममालम्ब्य क्षणाद्धरं शोधयामस्तम् ॥ ६५ ॥

द्रष्टव्य एष भगवानिह चेद्विरक्तै-
र्दृष्टो भवेन्मुनिगणेष्विति शास्त्रवादम्।
आलोच्य कृष्णपददर्शनभूरितृष्णा
गोप्यस्तदा मुनिर्गणान्तिकमाययुस्ताः ॥ ६६ ॥

उद्दिश्यान्तरनङ्गरङ्गसुखदं श्रीशाङ्गसङ्गं मुदा
कात्यायन्यतितोपकारिणि पुराऽस्माभिर्व्रतेऽनुष्ठिते।

१. कुमातृकः वृक्षविशेषश्च। २. ऐरावते। ३. हरिवाहनम्। ४. सिंहो विष्णुश्च। ५. स्थिरमायुर्यस्य तत्संज्ञो वृक्षश्च। ६. तृणां नरस्य अधिका श्रीर्यस्मिन् सः। ७. रथं वृक्षविशेषं च। ८. वृक्षविशेषः ऋषयश्च।

दुर्धर्षोऽयमुपस्थितोऽत्र विरहः कस्माद्दशा चेदृशी
तत्सत्यं वद भूमिजोत्तम फलाध्यक्षोऽसि लोके यतः ॥ ६७ ॥

पुण्यश्लोकस्य वार्तापि न यत्र श्रूयते सखि ।
किमर्थं तत्र गन्तव्यं देशोऽसावनलाश्रितः ॥ ६८ ॥

शुकः स भववारिधौ मधुरया गिरा भावुकान्
प्रतारयति तद्वदप्यहमिहाचरेयं ध्रुवम् ।
तदाह्वय इति स्मयान्निखिलमूर्खचूडामणे
प्रतारयसि किं मुधा भवसि किं शुकस्त्वन्तरो ॥ ६९ ॥

रे शाखोटक माधवं सुपिहितात्मानं विलोक्यादरा-
दस्मांश्चेदधुना वदिष्यसि ततः पुण्यं तथा ते भवेत् ।
येनात्रैव विपल्लवस्थितिमिमां लुम्पन् लतोद्यत्सुमै
राजत्पल्लवशेखरैरधिगतश्रीस्त्वं भविष्यस्यरे ॥ ७० ॥

काचिद् दूरतरं विलोक्य सहसा प्रत्याह पार्श्वस्थितां
प्रेयांस्तत्र भवेत्फलाढ्यकुसुमारम्भा चिरं भासते ।
यद्वा नायमलं विलासरसिकस्तत्रानुरक्तो भवेद्
यत्प्रीतौ रसिकस्य योषिति परा या न प्रसूताऽजनि ॥ ७१ ॥

इयं ब्राह्मणी प्रायशः श्रीशवार्तां
वदेदित्यनल्पाशयान्नालि गच्छ ।
यदङ्गारवल्लीति लोके प्रसिद्धा
ततोऽस्याः किमु स्यादतापोदयस्ते ॥ ७२ ॥

उन्मत्तधूर्तकितवान्यतमाभिधस्य
पुंसोऽपि नाधिकृतिरीशपदावलोके ।
पर्याप्तिभूमिरयमत्र तु तत्त्रिकस्य
तत्प्रश्नतस्तदधुना भविता फलं किम् ॥ ७३ ॥

---

१. फलानामध्यक्षोऽधिकारी वृक्षविशेषश्च । २. अग्निः नलाश्रितो नेति च । ३. वृक्षविशेषः किमिति च्छेदश्च । ४. विपदो लवः विगतपल्लवा च । ५. कदली स्वर्गवेश्या च । ६. ब्राह्मणस्त्री लताविशेषश्च । ७. पूर्वोक्तलता अग्निवल्ली च । ८. धत्तूरः ।

आद्यवर्णरहितं भुवि नान्यद्
वर्णयुग्मनुपयाति हि मानम् ।
सा विलोकय ततः सखि कुन्दं
मान्य एक इह नस्तु मुकुन्दः ॥ ७४ ॥

त्वमसि भुवने विष्वक्[1]सेनप्रियेति समुच्यते
किमपि वद[2]रे कृत्वा भूयः प्रणामपरम्पराम् ।
अहितसहजं त्यक्त्वा सापत्नकं पदगामिनीः
कुरु सुखवतीस्त्वं नः प्रेयः प्रदर्शनदानतः ॥ ७५ ॥

कुत्रास्ते भगवान् कथं स्थितिरिति ज्ञातुं मुहुर्वीक्षिता
अप्यस्मान्न हि दर्शयन्ति तमिह प्रत्नाग[3]माः शाखिनः ।
दुर्लक्ष्योऽपि विभुर्भवत्यतितरां लभ्यः पुराणा[4]गमै-
रित्याचार्यवचस्तु भाति भुवने जातं तदेतत्कथम् ॥ ७६ ॥

देशोऽयमैशाग्रपदप्रचारं विवेद भाग्यादधुना स्मृतिं ताम् ।
नोपैति चैवं जड[5]भावभाजो विभात्यनूप[6]स्थितिरस्य चित्रम् ॥ ७७ ॥

नैवामुना सखि विना यमुना मनाग-
प्यानन्दकृद्भवति शारदवारिपूर्णा ।
गर्वं वहत्यलमहं सरसेत्यमुष्यां
संदृश्यते किमपि सम्प्रति नीरस[7]त्वम् ॥ ७८ ॥

इन्द्रनीलमयरङ्गवर्तिनी-
मञ्जिनीं मधुरषट्पदस्वराम् ।
नर्तयत्यनुरागवृद्धये
वायुरेष भर[8]तागमार्थवित् ॥ ७९ ॥

जङ्घा-लतान्त-कमनीयगतिः कृता चे-
ज्जङ्घा[9]लतां तव तदा बहु वर्णयामः ।

---

१. विष्णुप्रिया वनौषधिविशेषश्च । २. पूर्वोक्तवनौषधिः । ३. वृक्षा वेदाश्च । ४. पुराणानि चागमाश्च पुराणाश्च ते आगमावृक्षाश्च तैः । ५. जडत्वं जलसत्ता च । ५. अनु उपस्थितिः अनूपा जलप्राया स्थितिश्च । ७. नीरस्य सत्वं रसराहित्यं च । ८. नाट्याचार्यः । ९. शीघ्रगामित्वम् ।

यत्साम्प्रतं तु रचयस्यतनुप्रसङ्गं
तन्मान्द्यमेव तनुते नितरां नभस्वन् ॥ ८० ॥

नभस्वान् सूर्योऽपि त्वमपि सुमनःपूजितवपुः
स चापि त्वं शाखाविरचितविहारः स च भवान् ।
ततस्तद्वृत्तापार्पणमुचितमप्याशुगजने
सरूपः सोऽरूपस्त्वमिति किल भेदोऽल्पकलितः ॥ ८१ ॥

तात वात वत तापतापितं
मा प्रतापय पुनर्जनं त्विमम् ।
नाथहीन - जनमानखण्डनं
निन्द्यमुक्तमृषिभिः [1]सदागतेः ॥ ८२ ॥

कुरु मारुत मा रुतं मुधा वसुधा[2]जन्म मुहुः प्रशंसया ।
यदि तत्र सदादरस्तदा भव सद्रू[3]पविलोकनोन्मुखः ॥ ८३ ॥

सद्रूपशोभी सततोपदेशा-
दृतागमः शीलितसौमनं[4]स्यः ।
लब्धं ततो वात मरुत्पदं[5] तत्
प्रसीद सौख्यं दिश हर्य[6]भीष्टम् ॥ ८४ ॥

नानागमोज्ज्वल - सुवर्ण-सुपर्ण-शाखा-
मुख्यस्थितेर्गतिमतोऽखिलसंत्पदेऽपि ।
वायो कथं न विदितस्तव सोमवंश-
शाखाविहाररसिको मरुदीड्यपादः ॥ ८५ ॥

प्रभञ्जन त्वमञ्जनप्रभञ्जनं प्रदर्शय
यतोऽसि कृष्णवर्त्मभागनन्तवृत्तिरन्वहम् ।
सदागमप्रभञ्जनं विधातुमुद्यतस्य ते
न दृश्यमेव वोल्लसत्सदागमस्थितं महः ॥ ८६ ॥

---

१. सत्सु सती वा आगतिर्यस्य तस्य । २. वसुधाया जन्म वृक्षाश्च । ३. सद्रूपो भगवान् सन्तश्च ते द्रवो वृक्षाश्च तेषाम् उपविलोकनं च । ४. देवत्वं सुमनस्कता च । ५. मरुदिति पदं देवपदं च । ६. इन्द्रो विष्णुश्च । ७. आकाशे उत्तमपद च ।

विष्णोः पदात्त्वमसि वात यदात्तजन्मा
भागीरथीव हर तापमशेषतो नः ।
यद्वा न सोदरतया स्थितिरत्र हेतुः
स्पर्शं हि तादृशसुधाविषयोश्चरित्रम् ॥ ८७ ॥
स्पर्शवानिति जने निजप्रथां
वर्धयस्यनिल सा वृथा न किम् ।
दातुमद्य यदिहेशदर्शन-
स्पर्शनं न पलमात्रमोहसे ॥ ८८ ॥
कुजातसंदोहशिरोऽग्रवृत्तेः
खलस्य नित्यानलमैत्र्यभाजः ।
निरर्थकाऽन्यातनुतापदानं
प्रसिद्धमेवेति न वात चित्रम् ॥ ८९ ॥
अन्यस्य कस्यापि च किंचिदस्तु
त्वत्तः सुखं त्वं दिश वा न वाऽस्मिन् ।
न लोकवच्चिन्तय नस्तु वय्यो
यत्त्वं वयं चापि भुजङ्गभोग्याः ॥ ९० ॥
कान्तासु व्याकुलीभावकरणं नोचितं मम ।
जगत्प्राणस्य मत्वेदं जडजातानुराग्यभूत् ॥ ९१ ॥
अहो कालगतिश्चित्रा यन्नः श्रीनाथचेतसः ।
जडस्थितं हसत्येतज्जडजातमपि स्वतः ॥ ९२ ॥
कथं त्वं पाथोज प्रथितमनिशं शम्बरजमि-
त्यशङ्कं निर्लज्जं भवसि हिमकृच्छम्बररिपोः ।
तवैतद्वा योग्यं जडमधुपसङ्गाहितहृदः
पितृद्वेष्ट्रा स्नेहस्त्रिजगति लघुत्वाय महताम् ॥ ९३ ॥
रे नीरज द्विजगुणोल्लसितान्तरङ्गं
श्रुत्यर्हतामुपगतं हि सुहृत्समाजे ।

१. विष्णुचरणादाकाशाच्च । २. खला वृक्षाश्च । ३. स्त्रीषु कान्तानामसवश्च ।

नित्यामृतोज्ज्वलितवृत्त्यसि तन्न युक्तं
सर्वात्मना तव परातनुतापदानम् । ९४ ॥
नालीकरस्यरसिकोऽसि सदाम्बुज त्वं
सत्कीर्तिशालिभुवने जनुराश्रितो हि ।
कृष्णानुरक्तहृदयः प्रमदैकभूमि-
स्तस्माद्वयं तव पदं ध्रुवमागताः स्मः ॥ ९५ ॥
सृष्ट्वा वियोगफलिकां लिपिमेतदीये
भालेऽधुना लिख सुखोदयसङ्गमार्थीम् ।
पद्मैवमद्य वद पद्मभवं यतोऽसौ
पुत्रस्ततस्तव वचस्तदलङ्घनीयम् ॥ ९६ ॥
स्तोत्रं मृषाऽलपधिषणे कुरुषे किमस्य
पद्मस्य नेदमुपयोगकृदस्सदादेः ।
अस्त्रीप्रगल्भमभिधानमिहास्य घण्टा-
घोषेण गर्जति पुराणकवीन्द्रवाणी ॥ ९७ ॥
अत्यनभिज्ञे कुमुदिनि किं नः खिन्ना निरीक्ष्य हससि मुधा ।
मत्पतिवंशजरीतिस्त्वीदृगसाविति कथं न जिह्रेषि ॥ ९८ ॥
कामिन्यो विविधा विहाररसिकाः कान्ताः सकान्ता अपि
दृष्टास्तत्र कुमुद्वतीव भुवने दृष्टा न धृष्टा परा ।
यज्जाग्रत्यपि सन्निधावलिजने सद्द्विशकेऽस्मज्जने
कामं याऽधिकबन्धजातललितोल्लासा सुखं मन्यते ॥ ९९ ॥
एका मित्रपदानुरक्तहृदयाऽन्या राजमान्या तथा
कीर्तेरास्पदमाश्रिते सममुभे सत्यं तथाऽपीक्ष्यताम् ।
एका म्लानमुखी प्रसन्नवदना त्वन्येत्यतो निश्चितं
नैकात्मा समयः कदापि घटते कस्माऽप्यनौपाधिकः ॥ १०० ॥

---

१. कमलं नेति च्छेदश्च । २. श्रीकृष्णो भ्रमरश्च । ३. स्त्रीषु प्रगल्भ नेति पद्मशब्दस्य पुंनपुंसकत्वादस्त्रीत्वं च । ४. उदकम् अधिकाः बंधाः कामशास्त्रप्रसिद्धाश्च । ५. पद्मिनी । ६. कुमुदिनी ।

सूर्यालङ्कृतमिन्दिराश्रितमिह प्रोद्यद्द्विधिश्रीकम-
प्यब्जं सम्प्रति दृश्यते गतरसं म्लायन्मुखं दीनवत्।
यद्दोषाकरसङ्गरागि कुमुदं सानन्दमामोदते
तत्कार्यं सुकृतं किम यदथवा श्रेयोऽर्थिभिः सज्जनैः ॥१०१॥

सूर्यादरं कुमुद रे कुरु पद्म रे त्वं
प्रोद्यद्द्विजेशभजनं भविता ततो वाम्।
सौख्यं सदा किमथवा विधिरेव तादृग्
यत्तादृशोऽपि हि वयं भृशमीदृशः स्मः ॥ १०२ ॥

त्रिजगत्पतिदुर्धरो वियोगावसरः कान्तजनस्य मन्महे यत्।
दिवसेशवियोगतोऽब्जिनीयं जडजाताऽप्यनुतापमेति कामम् ॥१०३॥

पद्मिन्यपीयं प्रियविप्रयोगा
दुःखं बताऽस्मत्सममेव भुङ्क्ते।
म्लानाननाऽम्लानसमग्रपत्रा
याऽऽस्ते यतो जीवनमात्रवृत्ति ॥ १०४ ॥

मित्रपादविरहेण पद्मिनि
त्वं वयं च सममेव दुःखिताः।
तत्कुतोऽस्मदवलोकनह्रिया-
ऽधोमुखी बत जले निमज्जसि ॥ १०५ ॥

त्वं पद्मिन्यतिपुण्यवत्यसि यतो दुर्धर्षतापापह-
स्वापोद्रेकनिमग्नवर्तनतया कालस्त्वया नीयते।
अस्माकं तु न मित्रपादविरहक्लेशाग्निभाजां पुनः
प्रारब्धाद्भगवानिव क्षणमिह स्वापोऽपि दृग्गोचरः ॥ १०६ ॥

त्वं सर्वतोमुखगतिर्भवसीति कर्त्री
केनाप्युपायविधिना तनुतापशान्तेः।
नित्या द्वितीयमुखभाज इहैकचित्ताः
कुर्मः किमब्जिनि वदात्र कमप्युपायम् ॥ १०७ ॥

---

१. उदकं प्राशनं च। २. स्वरय आपम् उदकसमूहः स्वापश्च। ३. उदकं सर्वतः प्रसृता च।

मित्र[1]द्वेषमुरीकरोष्यरिगं[2]णान् दत्वाऽऽश्रयं पोषय-
स्यस्ताशङ्कमधःकरोषि भुवनं दोषाकरेऽभ्युद्गते ।
सद्यो हृष्टतरान्तरं भवसि यन्नीलाम्बुजास्मिञ्जने
तत्ते युक्तमिदं न जातुचिदुदा[3]सीनस्य मन्यामहे ॥ १०८ ॥

तावत्स्वयं वह विनिन्दय चारिवाग्भि-
र्हास्यं विधत्स्व वसुमद्विहिताश्रय त्वम् ।
प[4]द्मानुरक्तहृदयोऽभ्युदितो न यावत्
पश्चाद्धि कैरव ददामह उत्तरं ते ॥ १०९ ॥

सच्छ्यामद्युति भृङ्गवेणुविलसद्गीतं रसालं कृतं
सत्पत्रं भुवनाप्तकीर्तिकलितं कामे[5]षुरूपं दधत् ।
एवं नीरज रे त्वमीशसमतां सम्मन्यमानं हृदि
माऽस्मान्मोहय यत्स पूरुषवरः क्लीबस्त्वमेतत्स्फुटम् ॥ ११० ॥

नैतद् गृहाण सखि मा स्पृश वारिजातं
नैवास्य सङ्गतिरिहात्मसुखाय भूयात् ।
दोषाकराश्रितमिति स्फुटमाविभाव्य
त्यक्तं यतः सततमेव जगज्जनन्या ॥ १११ ॥

रे रे द्विरेफ मुरलीधरकृष्णसाम्यं
त्वं वर्णतोऽस्यधिगतः कृतितोऽप्यवाप्तुम् ।
यत्नस्तवैष बहुधा प्रतिभाति यस्मात्
त्यक्त्वाऽनिशि भ्रमसि पङ्कजिनीः सुदीनाः ॥ ११२ ॥

लब्धो रसो यदि निशाचरसेवकेभ्य-
स्तद्रुंक्ष्व राजै[6]विदितं न यथाऽत्र भूयात् ।
यद्वा वृथा कथनतः किमु पानकर्तु-
र्मत्तस्य राजभयमेतदलीकमेव ॥ ११३ ॥

---

१. सखा सूर्यश्च । २. भ्रमराः शत्रवश्च । ३. उदकासीनस्य अरिमित्र-भिस्य च । ४. सूर्यः कृशाणश्च । ५. कामबाण-इच्छासु सतंपु च । ६. चन्द्रो नृपश्च ।

मा त्वं कुरु भ्रमर हे मधुपानमद्य
माऽनल्पजल्पनमपि च्छलनं सतीनाम्।
अर्वाक् क्वचिच्चरितमस्ति फलं तदस्य
यत्पङ्क[1]जातनिलये स्थितिमागतोऽसि ॥ ११४ ॥

अप्राशस्त्यव्यापृतौ सक्तचेता
भूयादन्यस्त्वं न भूयाः कदापि।
यस्माल्लोके षट्पदाशेषमान्या
जागर्त्येषा षाट्पदी राजनीतिः ॥ ११५ ॥

दृष्ट्वाऽगाधवसुप्रभूतिविलसत्कोशं च पद्माश्रितं
यत्त्वं भृङ्ग रसाशयेह कुमुदं स्तुत्युन्मुखः सम्प्रति।
युक्तं तत्तु परं निशाचरपतावभ्यागते सम्मुखं
यत्सूर्य[3]गमने ह्यधोमुखमिति स्यात्ते किमस्मात्फलम् ॥११६॥

शिलीमुख तवाभिधा जडजनुःष्वनङ्गेन य-
न्न्ययोजि न ततोऽभवत्किमपमानसम्पादनम्।
सतीत्थमपि यत्पुनर्भवसि तत्सहायः कथं
कथं च जडजात्मनो मृदुगिरा करोषि स्तुतिम् ॥ ११७ ॥

विप्र[6]राजवनितां भ्रमरैतां
यद्भुनक्ष्यगणितोभयभीतिः ।
साहसं त्विदमवर्ण्यमलं नः
केवलं न भविता वत धातुः ॥११८॥

राजयोषित्समासक्तिस्त्वयि या भृङ्ग दृश्यते।
नागस्ते किं त्विमा एव कलिकालक्षणस्थिताः ॥११९॥

मित्राङ्गनेयमिति चेतसि भृङ्ग मत्वा
युक्तं न संस्पृशसि यन्निशि पद्मिनीं त्वम्।

---

१. पापजातं कमलं च। २. चन्द्रे चौरराजे च। ३. सूर्यस्य सूरीणां चागमने। ४. भ्रमरो बाणाश्च। ५. कमलेषु जडोत्पन्नेषु च। ६. चन्द्रो ब्राह्मणश्रेष्ठश्च। ७. कलिकानां रक्षणो कलिकालोत्सवश्च। ८. सुहृत् सूर्यश्च।

जानंस्तथैव बत नः खलु मित्रसक्ताः
शब्दच्छलाच्छलयसीति न युक्तमेतत् ॥१२०॥

आस्तामेतत्सखि किमनया वार्तया जारवृत्तेः
सर्वस्यास्मिन्ननुभवविधेः पात्रपर्याप्तिभाजः।
धात्रैवाराद्वयमिह कृताः सत्रपा निस्त्रपा वा
प्राप्ताः सम्प्रत्यलिजलजनिप्रोदितं स्वोपहासम् ॥१२१॥

विधे विदितमस्ति ते निखिलमेव यत्त्वं भव-
स्यशेषजनसृष्टिकृत् तदिदमेकमापृच्छ्यसे।
अनन्यमनसः सतीर्निशि विहाय यः कौतुकं
बिभर्ति चतुरः क्वचित्तव पितेव संलक्षितः ॥ १२२ ॥

वेदान् वहन्नपि मुखेष्वखिलान् सदर्थ-
प्रख्यापकाननुवसन्नपि सत्यलोके।
अन्याङ्गनाच्छलनवृत्तिरिहासि कस्मा-
दस्त्येव हेतुरथवा जडजातवासः ॥ १२३ ॥

सृष्टा एव विधे त्वयाऽत्र बहवो जाराः प्रजाराजिषु
कश्चित्तेषु वदेद्गस्ति कुमतिर्यः स्वीयमातर्यपि।
त्वत्तातप्रियभामिनीश्छलयसि त्वं रे विधातः कथं
यावत्सृष्टिजनिस्मयात्समभवत् किं वा भ्रमान्धो भवान् ॥१२४॥

याति ख्यातिं स एवास्मिन् पितृधर्मानुगो हि यः।
युक्तं धातस्त्वमधुना पितेवाद्यतां गतः ॥ १२५ ॥

यो विद्धकण्टकपदो व्यपनीय दुःखं
लोके स एव सुखयत्यपरान् भवांस्तु।
आजन्म वृद्धपदभाक् त्वमिति क्षमं न-
स्तारुण्यदुःखहरणे न दयाऽभ्युदेति ॥ १२६ ॥

त्वं सर्वतोमुखगतिस्थितिरब्जयोने
त्वं सर्वतश्च समदृक् चतुराननोऽसि।

१. कमलम्।

तत्ते मुरल्यपि वयं च समानरूपाः
कस्मात्सुखासुखगतौ विहितो विभेदः ॥ १२७ ॥

अलं तत्परिहासेन विधेरन्यस्य कस्य वा ।
एकैव कारणं सख्यो मुरली सुखदुःखयोः ॥ १२८ ॥

न हि विधेरपराधलवोऽप्यहो भृशमिहोपकृतं बत तेन तु ।
सुलभमस्त्वधरामृतमैशमित्यचिरतो मुरली निरमायि यत् ॥१२९॥

मुरलि सरलतां ते वीक्ष्य सद्वंशजत्वं
निजहितमिति मत्वा त्वद्वचो दत्तचित्ताः ।
तदिह कथमिदानीं वंचयस्यस्तशङ्कं
तदुचितमथवा ते धूर्तसंसर्गभाजः ॥ १३० ॥

य इह पिशुनचेताः साधुवंशोदितोऽपि
मधुरकपटवाचा वञ्चयेत् कं न वाऽसौ ।
यदिह निशि वनेऽस्मिन् नः समानीय दीनां-
स्तिरयति यदुराजं छिद्रभागेष वेणुः ॥ १३१ ॥

समाहूय विश्रम्भतोऽस्मान् वनेऽस्मिन्
नयस्यन्यथाभावमेनं मुकुन्दम् ।
सपत्न्यास्तवेदं भवत्येव योग्यं
वयं चैव वाच्या मुरल्यत्र गर्ह्याः ॥ १३२ ॥

अस्मत्सुखोदयकृते प्रभुणा धृता त्व-
मस्मद्विरोधकृदभूरधुना वृथैव ।
तत्तेऽथवा न हि मनागपि मन्तुरत्र
प्राप्तोत्तमाधिकृतिगर्वफलं तदेतत् ॥ १३३ ॥

मुरलि त्वं शृणुष्वेकं प्रभुस्तु प्रभुरेव सः ।
त्वमात्मानं परं पश्यन्त्याचराऽद्य यथारुचि ॥ १३४ ॥

प्राप्ते वियोगेऽपि विधेर्नियोगात्
सन्त्यज्य कान्तां न हि दूरमेति ।

शृङ्गारशिक्षागुरुरेक एव
मान्योऽवनौ पक्ष्यपि तद्रथाङ्गः ॥ १३५ ॥

रे रे रथाङ्ग विधिदिष्टमिमं स्वधर्म-
मध्यापयैनमकृतास्मदुपान्तवेगम् ।
नो चेत्तदीदृशकृतेरयशस्तव स्याद्
यस्माद्रथाङ्गकर इत्यवनौ स सिद्धः ॥ १३६ ॥

सन्मित्रपादविरहात्सदृशां त्रयाणां
प्रीत्यै न राजकरलालनमप्यवाप्तम् ।
एकं तु पद्ममपरो हि रथाङ्ग एष
दैवाहतः समुदयः सखि नस्तृतीयः ॥ १३७ ॥

निर्हेतुकारिमतयो भुवने वने च
व्याधादयो हि मृगमीनसतां प्रसिद्धाः ।
राज्ञः सदध्वविहृतेः सुगुणस्य सख्य-
श्चन्द्रस्य तादृगुचितं न हि चक्रजाते ॥ १३८ ॥

चक्रवाकमिमं दीनमुदासीनं निशापते ।
किमु तापयसि व्यर्थं पद्मिनीं नश्च तादृशीः ॥ १३९ ॥

नित्यं विष्णुपदस्थितिः शिवशिरोवन्द्यश्च तारोल्लसद्-
वृत्तिः सत्त्वगुणोज्ज्वलो द्विजपतिः सम्पूर्णसन्मण्डलः ।
यस्त्वं तस्य विधो तवेदमुचितं दातुं हि नोऽस्मिन् वने
श्रान्तिक्लेशहरोपदेशविलसच्छ्रीनाथसन्दर्शनम् ॥ १४० ॥

सद्रुचिस्तव सदास्ति सत्पथे[1] मान्यता च भुवि सर्व[2]मूर्धनि ।
तत्स्ववंशमिममब्ज बोधय स्पष्टमीदृगपथानुवर्तिनम् ॥ १४१ ॥

रा[3]काप्रियः सत्पदपूर्णशोभः सर्वाभिवन्द्यः सकलागमश्रीः ।
सु[4]धाधरः सोऽपि भवानपीन्दो तद्वां भिदा पीतसितांशु[5]कत्वात् ॥ १४२ ॥

---

१. आकाशे सन्मार्गे च । २. शङ्करः अशेषश्च । ३. पूर्णिमा नूतनऋतुमती च । ४. सुधायाः धरः सुधा अधरे यस्येति च । ५. वस्त्रं किरणाश्च ।

भवान् वामनेत्रं वयं वामनेत्राः
प्रभो स्तद्विधो मित्रभावोऽत्र सिद्धः।
ततोऽस्मद्विपत्तिप्रणाशे विधेये
कथं रे करैस्तापमेवातनोषि ॥ १४३ ॥

बुधगुरुकविवर्याः प्रोल्लसल्लक्ष्मवीर्या-
स्तुहिनकरविहारं कुर्वते सत्पथे च।
हरिपदभजकानां तापदो नस्त्वमेवे-
त्युचितमिदमवैमो यत्कलङ्कयच्यसेऽस्मिन ॥ १४४ ॥

त्वमसि विष्णुपदे स्थितिमागतो
विधिवशेन विधो तदिहाधुना।
कमपि तापय नोग्रकरैर्यतो
बहुचलो भुवने कमलोच्छ्रयः ॥ १४५ ॥

सकलोऽस्यवनौ त्वमेव राकाधिपतेऽन्ये विकला इतीह सिद्धे।
पुनरप्यतिदीनगोसमाना निजगोभिर्विकलाः कुतः करोषि ॥१४६॥
उग्रतापहरणं प्रकुर्वतो नोग्रतापकरणं तवोचितम्।
अत्र बीजमथवोग्रभानुना स्पष्टमेकदिनसङ्गतिस्तव ॥ १४७ ॥
यस्माज्जातश्चन्द्रमस्त्वं न युक्तं
तस्मै दत्से चेतसे भूरि तापम्।
अस्त्येतद्वा किं वृथैवोपदेशै-
र्वृत्तिः सिद्धा सर्वदैषा खलस्य ॥ १४८ ॥
जातो जातुचिदात्मजो यदि जने जायामुगस्मिन् गुरु-
स्तद्योगं कुरुते करेण तरसेत्येषा महत्पद्धतिः।
त्यक्त्वा तां कुरुषेऽब्ज यन्निजकरैरस्मद्वियोगाम्बुध-
र्वृद्धिं तत्र न ते ऽपैति सुवचं नित्याप्रतिष्ठाजुषः ॥१४९॥

---

१. लक्ष्मीः। २. किरणैः। ३. शङ्करः। ४. सूर्येण। ५. दुर्जनस्य खं लाति तस्य च। ६. प्रतिष्ठाभावः अपां प्रतिष्ठा च।

सौम्या गतिर्भुवि ममेति जनान् प्रतार्य
यन्निर्भयं चरसि चन्द्र सदा निशासु ।
तद् गूढतत्त्वमवगच्छति ते स्वसाऽपि
यत्त्वद्भिया निजगृहं निशि सन्निधत्ते ॥ १५० ॥

कृत्वाऽऽभिर्वशमीशमत्र विरहं यन्मे स्वसा प्रापिता
कुर्यां तत्प्रतिकारमद्य हि यथा कर्त्र्यो न भूयस्तथा ।
मत्वैवं यदि दातुमिच्छसि विधो तापं करैस्तत्कथं
तत्सद्मोल्लसनासहिष्णुरसि रे तज्ज्ञातमेतन्न किम् ॥१५१॥

राज्ञो मे पुरतः सदध्वविहते रेता अकुर्वन् रतिं
पुंसा नष्टभयं परेण तदिमाः शिक्ष्या बहूग्रैः करैः ।
चन्द्रैवं यदि मन्यसे न हि भवान् राजाऽस्ति राजापरो
यः ख्यातोऽत्र नखेन्दुरीशपदगः श्रीराजराजस्तुतः ॥१५२॥

वयं हरिसमाश्रिता लघुशशाश्रितस्त्वं शशि-
स्ततस्तव पराजये न खलु यत्नलेशोऽस्ति नः ।
परन्तु भगिनीरमासहज इत्युपेक्षास्पदं
ततः किमिति जाल्मवद् वहसि रे प्रतापस्मयम् ॥१५३॥

त्वं मातुलस्वसृजयोरनुरागभावं
कंसेशयोर्ध्रिरमपेत्य विधो प्रसिद्धम् ।
स्वस्रात्मजानुमतपक्षमुपेत्य यन्न-
स्तापप्रदो भवसि ते किमु जाल्मताऽन्या ॥ १५४ ॥

अपहाय रसाशया भ्रमन् भ्रमरोऽयं निशि मुग्धपद्मिनीः ।
जुषते नु बलात् कुमुद्वतीं हिमगो त्वत्सदगीशवंशजः ॥ १५५ ॥

वृद्धोऽपि रे त्वमिह चन्द्र बृहन्निशायां
निःशङ्कमेव सुरतोत्सवमातनोषि ।
यूनः सुतस्य रमणीभिरिमाभिरद्य
सम्प्राप्तमर्हमपि तं सहसे न कस्मात् ॥ १५६ ॥

---

१. लक्ष्मीः । २. सिंहः कृष्णश्च । ३. कामः रहे । ४. हे चन्द्रः !

लोके कदाचिदपवादकरः कलङ्को
जातस्तदा तदपमार्जनयत्नवृत्तिः ।
साधुर्भवत्युचितमेतदिदं विचित्रं
यन्नः स्पृशन्निजकरैः कुरुषे दृढं तम् ॥ १५७ ॥
तापप्रदोऽपि मिहिरो न हि तापदाता
स्वीया इमा इति विदन् भुवनेऽब्जिनीनाम् ।
त्वं शीतलोऽपि कुरुषेऽतनुतापदान-
मस्मासु ते सुत सतीषु विचित्रमेतत् ॥ १५८ ॥
यैरस्मास्वबलासु वर्षति करैरङ्गारमङ्गार्तिदै-
स्तैरेवामृतमिष्टमेष विकिरत्यब्जश्चकोर त्वयि ।
तद् बीजं किमु तादृगार्जवमुतानुष्ठानमीदृक् फलं
किं वाऽस्यैव खलस्य दुर्विलसितं यत्सत्तदन्नोच्यताम् ॥ १५९ ॥
यथा वीक्षसे रे चकोर त्वमस्मां-
स्तथेशं दृशा पश्य योगीशवश्यम् ।
त्वया वीक्षितेऽस्मत्स्मृतिस्तस्य भूयात्
ततः सिद्धमेवातुलं सद्यशस्ते ॥ १६० ॥
नीतो भेदधियं सपत्नगतया नैवं श्रिया यज्जने-
ष्वेषा मातृपदैकभूमिरिति साऽस्मद्व्यक्तसर्वदा ।
क्रीडत्यत्र [1]सुतोऽप्यमत्सरमसावस्मासु तस्मादसौ
नीतोऽन्यत्र [2]बलेन वै यदबलाः सर्वा वयं सम्प्रति ॥ १६१ ॥
दृष्ट्वाऽस्मद्रहितं प्रियं चिरतरोत्कण्ठाम्बुजावासिनी
नीत्वा स्वीयगृहं सुखेन रमते मन्येऽधुना तेन सा ।
नो चेत् षट्चरणान् प्रियस्तुतिचणान्निष्कास्य कस्मादसौ
चक्रे पत्रकवाटघट्टनमनुप्राप्तेऽपि बन्धौ गृहम् ॥१६२॥
चाञ्चल्यमेवमिह तस्य निरीक्ष्य सख्यो
मन्ये रमापि परमा परमाप तापम् ।

---

१. कामः २. बलरामेण बलवताऽन्येन वा ।

नो चेन्निशोन्दुकरकन्दलतुन्दिलायां
तूर्णीं पिधाय निजसद्म कुतो नु शेते ॥ १६३ ॥

अस्मान् खेटकवासिनीरचतुरा लावण्यहीनाश्च यत्
तत्त्याजासदृशीरनेकसुरतोत्कर्षं बुभुत्सुः प्रभुः ।
साध्वेतत्सरसास्तथा गुणवतीः कस्माद्व्रजेः पद्मिनी-
स्तन्मन्ये पुरुषव्रतं यदबलात्यागो हि भोगोत्तरम् ॥१६४॥

अरिंदरकर इत्यखिले भुवने तव नाम कृष्ण जागर्ति ।
कथमस्मासु वियोगान्मैभ्याङ्गीस्वत्र भीतिमाचरसि ॥ १६५ ॥

स्वतन्त्रोऽहमिति श्रीशस्वगर्वोल्लासभूमयः ।
वयमेव कथं दीनाः सखि जाता जगत्त्रये ॥ १६६ ॥

स्वायोग्यत्वात्परित्यक्ताः प्रभुणेति विदन्नपि ।
किं रे व्याकुलयस्यस्मान् स्मयभृत्स्मर विस्मयाः ॥ १६७ ॥

जगन्मान्या माता भवति तव पद्माऽथ च पिता
जगत्त्राता भ्राता विधिरपि जगत्सर्जनचणः ।
त्वमेवास्मिन् वंशे स्मर कथमभूः स्त्रीव्यसनदः
कलङ्कोऽयं लोके जनयति ह्रियं ते न च कथम् ॥ १६८ ॥

रे रे मन्मथ पथ्यमाकलय नश्चित्ते विषादो वस-
त्यस्माच्चप्रकटो भवास्य हि दशा व्यर्थं क्षणाद्ध्रसे ।
अस्मद्द्रोहकृते न ते हितमिदं वाच्यं तथाप्यापदि
बोध्यः शत्रुरपीति योजयति नः सन्मार्गशैली श्रुतिः ॥ १६९ ॥

त्रिलोचनविलोचनेन च यदा प्रदग्धस्तदा
विधाय करुणां पुनस्त्वमसि काभिरुज्जीवितः ।
बलं कतमसाश्रितो जयसि वा जगत्तत्स्मर
स्मर त्वमसि बुद्धिमान् किमिति जाल्मवच्चेष्टसे ॥ १७० ॥

---

१. चक्रशङ्खकरः शत्रुभयकरश्च । २. शिवः खेदश्च ।

किं ते कृतं क्षितितप इति : १०.३०.१०.

सकृदपि पदलाभो दुर्लभोऽस्माकमद्या-
ऽजनि जगति धरित्रि प्राप्त एवासकृत्ते।
तदिह वद यथार्थं किं तपोऽकारि पूर्वं
सुफलमिदमयत्नाल्लब्धमासीद् यतस्ते ॥ १७१ ॥

अपि धरित्रि पवित्रपदाङ्किता
त्वमसि तच्चरया स दयानिधिः।
चरति कुत्र सखा मम तद्वद
प्रियतमो यतमौनरतिर्यतः ॥ १७२ ॥

त्वमसि विष्णुपदोल्लसिताधरे
विधुरपीति युवां समशोभिनौ।
तदधुनेन्दुरिवार्जय पूर्णतां
रुचिरकृष्णपदाङ्कनिदर्शनात् ॥ १७३ ॥

अप्येणपत्नीति : १०.३०.११.

स्वैरालापोऽपि महतां नानृतं स्पृशति क्वचित्।
या गोप्युक्तिः सदारेशप्रश्ना सा फलतः सती ॥ १७४ ॥

रे शम्बरा जगति निस्त्रपतापदानि
युष्मादृशानि न हि कुत्रचिदीक्षितानि।
यत्प्रत्युतारिधिषणामपहाय कामं
वृद्धिं दृशा नयत सम्प्रति शम्बरारिम् ॥ १७५ ॥

उदासीनं मार्गं सखि समभिवीक्ष्यैव किमिह
व्रजस्यत्यावेशादतनुतरखेदाकुलगतिः ।
स्पृहा ते यद्यस्ति प्रियतमपदालोकनविधौ
ततो मार्गे दृष्टिं प्रदिश सुतमालाधिकरुचौ ॥ १७६ ॥

---

१. चन्द्रोऽपि। २. मृगाः। ३. मृगसमूहे वर्त्मनि च। ४. सुतानां माला शोभनतमालांश्च।

पृच्छेतमा लता इति : १०.३०.१३.

अयं क्ष्माभूः सुरतोपशोभित-
स्तत्पृच्छतैनं परमेशवर्तनम् ।
यद्वा तदीक्षोत्पुलका वदिष्यति
प्रकाममेषा सुरतैव सम्प्रति ॥ १७७ ॥

परोपकाराय नियोजितस्व-
सर्वस्वभावा तरुजातिरेव ।
इत्थं मुहुः श्रीशमुखेन युष्मद्-
यशः श्रुतं तत्किमिहेदगेव ॥ १७८ ॥

वृक्षा वा धरणीवेयमेणी वा सुलतादयः ।
न केऽपि कथयन्त्यस्मानीशवार्तामिहाद्भुतम् ॥ १७९ ॥

इत्युन्मत्तेति : १०.३०.१४.

इत्थं भेदोपासनान्ता विधाय
तत्तादात्म्योपस्तिविन्यस्तचित्ताः ।
चक्रुः क्रीडां तादृशीमीशरूपां
यत्तद्युक्तं द्वे अपीशाप्तिहेतू ॥ १८० ॥

कस्याश्चिदिति : १०.३०.१५.

सर्वा यद्यपि तुल्यकृष्णहृदयास्तुल्याधिकृत्यन्विता-
स्तुल्येशाप्तिनिदानपुण्यनिचयास्तुल्योज्झितान्यक्रियाः ।
ऐशं रूपमवाप काप्यतितरां तत्रासुरं चापरा
तन्मन्ये विधिरेप मुञ्चति जनं नो नर्मकर्मण्यपि ॥१८१॥

तत्तादात्म्यविभावनां निजमनस्याधाय नर्मण्यपि
यः स्वैरं विहरत्यसौ प्रभुकृपापात्रं न चित्रन्त्विदम् ।
आश्चर्यं भृशमेतदेव यदसौ यं संस्पृशेत् पापिनं
सोऽपि श्रीशकृपापदं भवति तन्मानं च दैत्याः स्त्रियः ॥१८२॥

---

१. क्षमास्थानं वृक्षश्च । २. सुरता शोभनलता च ।

येन केन प्रकारेण यो वा को वेशरञ्जनम्।
करोत्यस्मिन् हरिप्रीतिर्न तद्धेतुः सुरोऽसुरः ॥१८३॥
व्यवहारकृदन्तरङ्गवृत्तेर्भुविभाव्याऽनवधानता यदन्तः।
तदुपासनमङ्गपूर्णमेतत् स्फुटमज्ञातसखीस्थिता स्थितास्ताः ॥१८४॥
तादात्म्यमेव भगवन्नवलम्ब्य कार्यो-
पास्तिस्तवैष नियमो न यतोऽवलास्ताः।
यं कामपि प्रतिकृतिं प्रसभं प्रगृह्य
चक्रुस्त्वदीक्षणकृते विविधं विहारम् ॥१८५॥

उन्निदधेऽम्बरमिति : १०.३०,२०.

निश्चलोऽयमिति वेदवादिना-
ऽस्तु तद्धृदयगोचरो रवः।
अञ्चलं त्वहमवैमि निश्चित-
मित्यदर्शि परया तदञ्चलम् ॥१८६॥
दध्रे गिरिं स सबलोऽप्यम्बरपतिताम्बुजातपातभिया।
अबलाप्यहं तु कलयाम्यम्बरमिह सखि शयाम्बुजातेन ॥१८७॥
अरिदरधरा च सगदा हस्तोदयपङ्कजातकलितशया।
अहमस्मि च तद्रूपा तन्मां सुरतोत्सवप्रदां भजत ॥१८८॥

एवं कृष्णमिति : १०.३०.२४.

प्राग्वासना बलवती न च याऽस्तमेति
निर्मूलमन्यविविधोल्लसितात्मवादैः।
स्पष्टं रमेशपदशोधनजाततृष्णा
आसन् पुनर्यदवलाधृतकृष्णरूपाः ॥१८९॥
अयि विचित्रतरप्रसरः शरन्नवनवाभ्युदयो मदनोदये।
यदिह भान्ति रजोरसराजिताः सुमनसो विमदोत्सवदा अपि ॥१९०॥

---

१. अग्रम् अमिति च्छेदश्च, अं विष्णुम्। २.वस्त्राञ्चलम्। ३.वस्त्रमाकाशं च। ४. चक्रशंखौ शत्रुभयं च। ५. गदया सहिता सरोगा च। ६. हस्तः शय्या च। ७. सुरता सुरत च।

सामोदमागमपुषं स्वपुरो वसन्तं
कान्तं नितान्तसुमनोभवपल्लवाङ्ग्यम् ।
द्रक्ष्याम्यहं सखि लताधिकशोभमानं
त्वं माधवं लषसि किं न हि माधवं तम् ॥१९१॥
नैपल्लतापि किल यान् भजतेऽधुना तैः
किं पल्लवैरसि विमोहयितुं प्रवृत्तः ।
अस्मद्विमोहकुशलः स हि पल्लवाग्र्यो
योऽस्मिन् भवेद् बहुलतोत्सववृद्धिकारी ॥१९२॥
अपर्णो विप्रवासो यः स सुखो प्रभुभक्तिभृत् ।
विभाति तादृगेवासौ तद् गच्छ सखि तत्पुरः ॥१९३॥
आगच्छताशु सख्योऽयं सुपर्णो भात्यदूरगः ।
प्रायस्तत्र भवेच्छ्रीशो नो चेत्पृच्छाम तत्स्थितिम् ॥१९४॥
योऽपारि[2]भद्रस्तत एव भूयाद्
रिपोरनिष्टं सुहृदः समिष्टम् ।
अयं तथा नेति किमस्य पार्श्वे
गतेन सख्योऽग्रत एव यात ॥१९५॥
लतैकरसिकः सखा सखि भवेल्लतोपान्तिके
तदेहि न हि वा भवेदिह स पु[3]ष्पिणी सास्ति यत् ।
अलं वितथशङ्कया सखि ततो भवेदेव स
सदाग[4]मनमञ्जुला भवति पाल्ल[5]वी यत्स्थितिः ॥१९६॥
लावण्यमेव सखि तादृशमैन्दिरेशं
यद्वीक्षणं मनसिजोदयकारि भूरि ।
नास्मासु चित्रमिह व ललतास्वसूषु
पुष्पोदयोऽजनि यतः कलितोज्ज्वलश्रीः ॥१९७॥
यस्मान्निखिललतासु त्वमेव सर्वा[6]नुभूतिरसि लतिके ।

१. वृक्षो गरुडश्च । २. अपगतारिभद्रः पारिभद्रो नेति च । ३. रजस्वला पुष्पवती च । ४. वायुः सदेति चच्छेदश्च । ५. पल्लवः किसलयो जारश्च तस्येयं सा । ६. वनौषधिविशेषः सर्वा अनुभूतयो यस्याः ।

तन्नो विरहजदुःखं सत्यं वेत्सीति कथय विभुपदवीम् ॥१९८॥

अयि श्यामे[1] त्वमप्यत्र गो[2]पीशब्दावलम्बिनी।
कुतो जातासि यद्योगात् प्रियस्याप्रियतां गता ॥१९९॥

एकसुतप्रसवा स्त्री सुन्दर्यपि गलितयौवना भवति।
सखि बहु[3]सुता यदेषा म्लानमुखी भाति तत्तिरस्कारात् ॥२००॥

यद्गर्भसंस्कारवशाद् विलग्नं
काठि[4]न्यमद्याप्युपलभ्यतेऽस्मिन्।
तन्नामभाजस्तव रेणु[5]कायाः
सिद्धं कठोरत्वमिति ब्रजामः ॥ २०१ ॥

रे वक्रतां त्यज ऋजुर्भव मा[6]र्ग गर्वं
नाखर्वमावह यदस्मि स कृष्ण[7]सारः।
दीनानुकम्पिनि हरौ[8]वुदिते सुलक्ष्यो
भूयो भविष्यसि ततो भविता हितं ते ॥ २०२ ॥

पश्याद्भुतां स्थितिममुष्य हि वर्त्मनस्त्व-
मापातदृक्कवलितं यदि सेन्दुकान्तम्।
तद्भिन्नदृष्टिकलितं तु स कृष्णवर्त्म[9]
त्येतद्विभाति सखि संश्रितकृष्णपादम् ॥ २०३ ॥

सदागमदृशां यावद्वस्तुध्याताच्युतात्मनाम्।
न दुर्लभं सतामस्मिन् श्रीशपादाब्जदर्शनम् ॥ २०४ ॥

सन्मार्गोऽसावमार्गोऽसावित्यलं प्राग्व्यवस्थया।
यस्य श्रीशपदप्राप्तिस्तमेव बहु मन्महे ॥ २०५ ॥

क्षमं सखि स पावको[10]ऽयमपि कृष्णवर्त्माभिधः
प्रकाशयति यत्सुदृग्जनदृशां निरीक्ष्यं पदम्।

---

१. वनौषधिविशेषः षोडशवर्षा स्त्री च। २. वनौषधि० गोपस्त्री च। ३. वनौषधिवि० बहवः सुता यस्याः सा। ४. भार्गवकृतक्षत्रियनाशरूपम्। ५. परशुराममातुः सुगन्धिद्रव्यविशेषश्च। ६. मृगसमूहः मार्गश्च। ७. हरिणः कृष्णसारः श्रेष्ठश्च। ८. सिंहे विष्णौ च। ९. कृष्णसहितं वर्त्म साग्निकं च। १०. पावित्र्यकारी अग्निश्च।

तमोऽपहतिमातनोत्यपि परं स तापप्रदः
सदा भवति सङ्गमे पुनरयं त्वलं शीतलः ॥ २०६ ॥

पदानीति : १०.३०.२५.

सख्यः पश्यत पश्यताद्भुतमिदं यत्कृष्णवर्त्मन्यपि
सच्छोभान्वितलक्ष्मणान्वयि पदाम्भोजं स्फुटं राजते ।
किं चाकाशसरोजमित्यपि वचोऽलीकं कथं वर्णितं
प्राज्ञैर्यत्स्फुटमत्र साब्जममलं विष्णोः पदं दृश्यते ॥२०७॥

यत्सर्वतोमुखलसत्स्थिति शोभमानं
दान्तं नितान्तममलप्रतिमं सदीड्यम् ।
लेखाभिरञ्जितमनन्तसुखाभिधेयं
विष्णोः पदं तदिह सादरमर्थयामः ॥ २०८ ॥

तैस्तैः पदैरिति : १०.३०.२६.

योऽन्तर्बहिर्विधृतपूर्णपरेशभावो
विष्वग्भवे विचिनुतेऽत्र चरन् परेशम् ।
मायाविलासविशदीकृतनैजवृत्ते-
र्मयीशितुः स पददृग् भवतीत्यबोधि ॥ २०९ ॥

स्त्रीपुंभिदाव्यतिकरः सखि यत्र भाति
ह्यर्धाङ्गनाङ्कललिताचरणप्रचारः ।
तादृक् पदस्य मदनादरताऽस्ति चित्रम्
वामाश्रिते किमथवा पुरुषे विचित्रम् ॥ २१० ॥

न स्नेहो न मनाक् त्रपा न च कृपा नाकृत्रिमं वर्तनं
भीतिर्वा न जनापवादवचसः किन्तु स्वमात्रार्थधीः ।
ईदृग् लोकगतिः कलौ किल भवेदित्याश्रुतं द्वापरे-
ऽत्रैवादर्शयनयां कथं भृशमसौ सख्यो मम द्वापरः ॥२११॥

---

१. सारसस्त्री वज्रादिचिह्ननेन च । २. आकाशं श्रीकृष्णस्य पदं च ।
३. चिह्नपङ्क्तयः देवाश्च । ४. मयि अनादरः मदने आदरश्च । ५. संशयः ।

अनयाराधित इति १०.३०.२८.

यन्नो विहाय भगवत्पदसक्तचित्ता
नीतो वशं प्रभुरनेकविधार्जवेन।
तत्प्रीतिकृत्स समभूदिति साधु किन्तु
नाराधनं सखि विभाति न यानुगं तत् ॥ २१२ ॥

आराधनं सखि सदायफलं तदेव
संजायतेऽच्युतपदस्य यदेव लोके।
अन्याविरोधि सखि यः प्रकृते प्रकार-
स्तन्निर्मितः स न शुभावह एव वाच्यः ॥ २१३ ॥

कृताऽस्मद्वञ्चनो योऽयं प्रकारो दृश्यतेऽत्र हि।
न तत्र हेतुः सा किन्तु स्पष्ट एवानयः सखि ॥ २१४ ॥

समानासु सतीष्वस्मास्वेषा वैषम्यधीः कुतः।
जाता तस्य यतो ह्येषा रहस्थविरहस्थता ॥ २१५ ॥

धन्या अमी इति : १०.३०.२९.

गोविन्दादपि सख्यो गोविन्दाङ्घ्र्यब्ज रेणवो धन्याः।
येऽस्मत्तापनिवृत्त्यै स्थिता न तद्वत्पलायनं चक्रुः ॥ २१६ ॥

तस्या इति : १०.३०.३०.

सत्सङ्गोऽपि विशुद्धश्चेदेव तोषाय जायते।
सस्त्रीपदेशपादेक्षा-क्षोभकृत्तास्वभूयतः ॥ २१७ ॥

स्वत्यागतोऽपि बहुदुःखकरः सपत्न्यां
प्रेमा प्रियस्य भवतीति निसर्गसिद्धा।
स्त्रीणां स्थितिर्जगति ता अपि तत्कृतोप-
चाराङ्कितावनिदृशोऽतनुतापमापुः ॥ २१८ ॥

त्यक्त्वाऽऽत्मजातमनुगच्छति यो रमेशं
स्वाध्वग्रगः स इति भुव्यविवादसिद्धे।

१. दायसहितं सदेति च्छेदः अयफलं च।

तां तादृशीमपि तु ता विनिनिन्दुरेतद्
बीजं सपत्नदृगशेषगुणापिधाना ॥ २१९ ॥
केकां[1] वदन्ति जलदाधिकदीप्तिभाज-
स्तेतां रहस्थितिवशेन मुकुन्दपादाः ।
सा केति याऽऽत्महितमात्ररतिः किलास्मां-
स्तक्त्या ययावदयवत् सदयं प्रलोभ्य ॥ २२० ॥
धन्येयमद्य सुलता[2] भुवने यदस्यां
भूयोऽनुरक्तहृदयोऽजनि माधवो[3]ऽपि ।
यद्वा समानगुणवत्यपि वस्तुजाते
कस्मिंश्चिदेव रुचिरित्यनुभूतिसिद्धम् ॥ २२१ ॥

न लक्ष्यन्ते इति : १०.३०.३१.

प्रभुसदयतेयमियती यदसह्यमभूत्तदङ्घ्रितृणदुःखम् ।
पश्यादयतामपि सखि सहेत याऽस्मद्वियोगतापमपि ॥ २२२ ॥

अत्रेति : १०.३०.३२.

यस्मिन्ननन्यमतयः खलु योगशक्त्या
संयोजयन्ति सुमनांस्यवनौ मुनीन्द्राः ।
स श्रीश एव सुमनःप्रचयं यदस्यां
न्याधादतः स्फुटतया खलु धन्यताऽस्या ॥ २२३ ॥

केशप्रसाधनमिति : १०.३०.३३.

यस्य प्रसाधनकृतेऽवसरप्रतीक्षाः
केशा[4] भवन्ति नितरामवशो मुरारिः ।
केशप्रसाधनकृतेऽभ्युदिताभिलापः
पश्यन्ति न स्वमहिमानमलं सकामाः ॥ २२४ ॥
यत्किञ्चिदत्र सुकृतं कृतमस्ति सख्य-
स्तस्मादभूत् प्रभुपदप्रतिमेक्षणं नः ।

---

१. मयूर वाच पदद्वयं च । २. सुरता शोभनलता च । ३. कृष्णो वसन्तश्च । ४. ब्रह्मकामशंकराः ।

एतत्त्वगण्यमिह पुण्यमभूदितस्त-
न्न स्यात् कथं प्रियसुखावहसङ्गलाभः ॥ २२५ ॥

यां गोपीमिति : १०.३०.३५.

दीनो यथा परायत्ताचारः स्त्रीवशगः पुमान् ।
तथा प्रदर्शयन् सर्वास्त्यक्त्वैकामभजत् प्रभुः ॥ २२६ ॥

ततोगत्वेति : १०.३०.३७.

न सौकुमार्यं मृदुभाषणं वा
स्वभावसिद्धं भुवि कामिनीनाम् ।
वशीकृते पुंस्यपि तु प्रलोभ-
विधिर्दुरात्मत्त्वमगूढमेतत् ॥ २२७ ॥

जगत्प्रियोप्यप्रियोऽभूच्छ्रीशस्तस्या यतः स्फुटम् ।
तत्संनिकर्षमाहात्म्यं वक्तुमीशान शेषधीः ॥ २२८ ॥

प्रिये त्वद्गिरा मन्मनस्तत्र यातं
सखी स्कन्ध[2] एषोऽनुयातीह यत्नात् ।
त्वया स्थेयमत्रासि चेत्तादृशीत्य-
ब्रवीत् सत्यमीशोऽन्यथा[3]धीः परं सा ॥ २२९ ॥

एवं कलापगमवेक्ष्य[1] स मन्तुमस्मिन्
राजा कलापजनशासनमातनोति ।
नेशस्तथापि तु पृथक् समवेक्ष्य मन्तुं
यत्तां जहौ न च पुरा हृदि मानहीनाम् ॥ २३० ॥

देहान्तर्लसिता अनन्तवितताने‌कासिका नाडिका-
स्तास्वेकैव तु गच्छति प्रभुपदं योगात्सुधाधारिणी ।
तस्यां चेदपि संगतः स्मयलवस्तत्कालमन्तर्हितः
स्यादेवेश इति स्फुटं सममवत्तदगोपिकाचारतः ॥ २३१ ॥

यदर्थमुज्झिताः सख्यो यत्प्रीत्या सस्मयाऽभवत् ।
तस्मिन्नन्तर्हिते युक्ता तनुतापानुतापिता ॥ २३२ ॥

---

१. समूहः । २. स्कन्धे । ३. अन्यथा धीर्यस्याः । ४. समूहगतम् ।

हा नाथेति : १०.३०.३९.

श्रीकृष्णाच्युत माधवाचल धरानन्तत्रिलोकी प्रभो
गोविन्देश मुकुन्द सुन्दरतनो वन्दारुरक्षागुरो।
ध्यान्तध्वंसक दैत्यमर्दक सदासत्सङ्गसंरक्षक
त्राहि त्राह्यतिदीनगामिव सखे मां त्वत्पदैकाश्रयाम् ॥ २३३ ॥

कस्यापि कोऽपि भवति व्रजलोकवासी
संरक्षको बत महत्स्वपि संकटेषु।
त्यक्तस्वजातिजनमित्रसखीजनाया-
स्त्राताऽधुना मम विभो त्वमिहैक एव ॥ २३४ ॥

शुद्धत्वं चरणसरोरुहे सदैव
मालिन्यं तव च शिरोरुहे दयाब्धे।
सम्प्रेक्ष्याप्यहरहरीश मुग्धचित्ता
सम्मोहात्कथमहमैच्छमंसवासम् ॥ २३५ ॥

त्वं ममासि सकला सकलास्ये त्वां विना न रमणी चतुरापि।
मन्मुदेऽस्त्यसकृदेवमुदीर्यानार्यवत्कथमिहार्थे करोषि ॥२३६॥

एकाकिनीं समपहाय सहायहीना-
मेनां वने त्रिभुवनेडितनीतिनेता।
अन्यत्र यामि कथयामि न वैभवेश
सत्यं कथं मनसि यातमिदं ससत्यम् ॥ २३७ ॥

मानो मया यदि कृतो बहुधाऽपमाने
वैमानिकादिमगुरो विहितस्त्वयापि।
जातं समानमधुना मधुना शनास्मि-
स्तत् किं नवं विरहवैभवमातनोषि ॥ २३८ ॥

सर्वे जना भुवि भवन्त्यपराधिनस्त्वं
तेषां क्षमाकर इति प्रथितं पृथिव्याम्।

१. चन्द्रानने। २. सशपथम्। ३. देवाः।

तत्प्रार्थयामि भगवन्नपराधिकत्वं
मत्त्यागतो न नवमर्जय लोकगर्ह्यम् ॥ २३९ ॥

गुर्वङ्गनेयमिति मामवगत्य मोहात्
किं रे करैः स्पृशसि चन्द्र निरस्तलज्जम् ।
तारा न काममहमच्युतपादसक्ता
सा राधिकेत्यलमलं किल साहसेन ॥ २४० ॥

वृत्त्यैव लक्ष्यं कुरुते पिता ते
यं श्रीशमस्मिन् स्मर तद्भवस्य ।
वीरस्य तेऽसौ न हि बाणतोऽपि
लक्ष्योभवत्यत्र न किं त्रपा ते ॥ २४१ ॥

शचीशवद्रतीशोऽपि करोति शरवर्षणम् ।
तद्गोत्राणार्थमचलौ कराभ्यां धारय प्रभो ॥ २४२ ॥

सद्भर्तृदर्शनचणागममोदमान-
स्तल्लङ्घनं न सहसा प्रभुरेष कुर्यात् ।
एवं विचिन्त्य सुरतोत्सवदानदक्षं
सालं द्रुमं द्रुतमगादनुनीतकृष्णा ॥ २४३ ॥

सन्मार्ग एव भवति प्रभुपादपद्म-
लाभो भुवीत्यखिलविद्वदुदीरितां गाम् ।
स्मृत्वा विशुद्धतरबुद्धिरगाढगात्रा-
प्येणौघसन्निधिमवाप जवादशङ्कम् ॥ २४४ ॥

मार्गं दृष्ट्वा कृष्णसारप्रधानं तत्रासक्ता सर्वमेवापहाय ।
त्यक्त्वा शङ्कामेहि तत्त्वं मदीयोपान्ते क्षेत्रज्ञोऽसि मुग्धैवमूचे ॥२४५॥

सुखं वा दुःखं वा सततमनुभोक्तव्यमखिलैः
सहैव प्राप्तं चेत् पृथगपि कदाचिद्विधिवशात् ।

---

१. अपराधिकभावम् अपगता राधिका यस्मात्तद्भावं च । २. कृष्णो बृहस्पतिश्च । ३. बलाधिका सेति च्छेदश्च । ४. मनः कामस्य मनसिजत्वात् । ५. उदकं बाणाश्च । ६. मृगसमूहं पंथानं च ।

न गर्वांशः कार्यः क्वचिदपि तदा चेत्स विहितो
जने हास्याय स्यादुभयमिह मानं तदवला ॥२४६॥

अन्विच्छन्त्य इति : १०.३०.४१.

अनन्यभावेन परात्मचिन्तनं
करोति यस्तस्य निसर्गवैरिणः ।
प्रयान्ति मित्रत्वमलं हि गोपिका-
स्तदोज्झितेर्ष्याः किल तां समाभजन् ॥ २४७ ॥

क्वचित्केनचित्स्नेहिनापि स्वमन्तुं
कृतं चित्त आधाय तस्य प्रतीपे ।
विधौ मन्तुना तेन चासौ न दण्ड्यो
वदेत्तत्प्रियं किंत्विति स्पष्टमस्मिन् ॥ २४८ ॥

तया कथितमिति : १०.३०.४२.

स्वांसं[1] प्रदर्श्य सखि मां वत पूतनारि-
र्नारीविमोहचतुरश्चतुराननेशः ।
चित्रं चरित्रमतनोदतनुप्रमुग्धं
चेतोऽप्यगं[2]सङ्गमकरोन्मम किं ब्रवीमि ॥ २४९ ॥

साधनानि किल सन्ति लसन्ति
भूरिशो जगति रोषहराणि ।
तत्र मुख्यमृजु सद्वचनं यत्
ताः स्त्रियस्तदरुषो हि तदाऽऽसन् ॥ २५० ॥

प्रायोऽस्मदीयमिह मानमवेक्ष्य कान्तो
यातो भवेदिति पुरैव हि विस्मयास्ताः ।
तस्यास्तदुक्तिमवकर्ण्य तु निश्चितार्था
जाताः क्षमं परमविस्मयमापुरन्तः ॥ २५१ ॥

---

१. स्वस्यांसस्तं स्वामिति च्छेदश्च । २. ए भगवति संगो यस्य तथाविधम् ।

तस्या वचस्तदखिलं तदुपेक्षितायाः
श्रुत्वा विगर्वमवगत्य तदीशकृत्यम्।
उत्कण्ठिताः पुनरधोक्षजचक्षुषस्ताः
प्राग्वत्तरून् बहुविधान्युगपत्समूचुः ॥ २५२ ॥

हे चाम्पेय कपित्थ हे कदलि हे वन्धूक हे कुन्द हे
हे श्रीवृक्ष शिरीष हे तिलक हे तापिच्छकास्मत्प्रियः।
अस्मत्सौष्ठववर्णने प्रभुरसौ सस्मार वः सर्वतो
युष्मासु स्मृतिमस्य नैव कुरुते हा कोपि धिग्धिक्ततः ॥२५३॥

इति विक्लवया गिराऽर्थितेऽपि
न ददत्युत्तरमत्र केऽपि नोऽर्हम्।
बहुधा वनजन्मकर्मभिर्वा
ह्यवलाध्वा विदितो न काममेभिः ॥ २५४ ॥

व्रजत झटिति सख्यो देशतोऽस्मादखर्वो
यदिह किल पलाशो दृश्यते रक्तवक्त्रः।
प्रियजनपरिहीनं दीनमेनं निरीक्ष्य
जनमयमनुपेक्षः स्यात् स्वकृत्ये कदाचित् ॥ २५५ ॥

प्रीतिरस्ति यदि तेऽर्जुननाम्नि
भूरुहैकमिदमाकलयाद्य ।
नास्मदर्थितपदोचितदाने-
ऽपार्थतां परिचिनुष्व निजाङ्गे ॥ २५६ ॥

ऐश्वर्यं लभते पुमानिह निजप्रारब्धतः सर्वतः
सम्बन्धो न हि तत्र कारणमहो यः पुत्रपित्रात्मकः।
वाल्मीकिर्यदगाधरामचरितं प्रोवाच भाव्यर्थकं
पृष्टं वृत्तमपि प्रवक्ति न विभोर्वल्मीक एष स्फुटम् ॥ २५७ ॥

भूदार दारयसि किं भुवमस्मदिष्ट-
प्राणप्रियामकृतमन्तुलवां बलेन।

---

१. वृक्षविशेषः राक्षसश्च। २. पार्थभिन्नताम् अपगतार्थत्वं च।

यद्वा किमस्त्यनुचितं प्रियविप्रयुक्ते
कान्ताजनेऽल्पविहितो यदसत्प्रकारः ॥ २५८ ॥

रे रे खञ्जन मञ्जुलैरलमलं कुञ्जे प्रियारञ्जनै-
स्तद्बोध्येन धरागतेन निधिनाऽप्यास्ते न कार्यं हि नः ।
चातुर्यं तव वच्मि दर्शयसि सच्छङ्खं सुखर्वाकृति
पद्मेशं निधिमच्छकुन्दरदनं नालं मुकुन्दं यदि ॥ २५९ ॥

त्वं मेघहृष्टः स च मेघरूप-
स्त्वं नीलकण्ठः स च तत्प्रियोऽस्ति ।
भुजङ्गभुक् त्वं स भुजङ्गवृत्तिः
सम्बन्धतोऽस्माद् वद चेत् प्रवेत्सि ॥ २६० ॥

नेत्रं तदेव कृति येन हरिर्व्यलोकि
मायूरबर्हगतनेत्रशतैः फलं किम् ।
प्राचीनवाक्परिचयादिति निश्चिनोमि
दृष्टो मयूर भवता न सखा ममेति ॥ २६१ ॥

न यद्यपि बहिर्दृशा भवति गोचरो गोपति-
र्दृशा त्विममवाह्यया सखि विलोकयामोऽधुना ।
कया ननु दिशेति चेद्द्विजसमीप एवास्थितः
शुकः प्रकटयत्ययं स हरितंत्त्वमात्मस्थितम् ॥ २६२ ॥

आगामिप्रियसङ्गमसूचक एको हि नाम काकोऽसौ ।
नास्ति निशायामधुना काको यत्रोपकारकृद् भविता ॥ २६३ ॥

रात्रे त्वमत्र वृद्धा स्वप्रियसङ्गमवियोगसुखदुःखे ।
जानासि भूरि तन्नो वियोगदुःखं कथं न खण्डयसि ॥ २६४ ॥

त्वमसि पलितदेहो रात्रिरप्यत्र वृद्धा
तदपि निजकरैस्तां रञ्जयस्यस्तशङ्कम् ।
ननु वयमति मुग्धाः सुन्दरोऽसौ मुकुन्द-
स्तदिह हससि किं रे चन्द्रिकाव्याजतोऽस्मान् ॥ २६५ ॥

---

१. शंखादयो निधिभेदाः, पक्षे स्पष्टम् । २. हरेस्तत्त्वं हरितभावश्च ।

स्वाङ्के निवेश्य कुलभूषणमिन्द्रकान्तं
कृष्णं नु तस्य सविधे सखि भामपि द्राक् ।
आकर्षति स्वककरैरधिवासनार्थं
संसारसौख्यमुपभोक्तुमना मृगाङ्कः ॥ २६६ ॥

रे चन्द्र पुत्रमिममात्मकरैः सुगाढ-
मालिङ्ग्य धारयसि किं सततं निजाङ्के ।
अस्मासु योजय ततो ह्यचिरादनेक-
नप्तृप्रणप्तृपरिरम्भणसौख्यभाक् स्याः ॥ २६७ ॥

नीलाम्बरं निजकरैर्विशदं करोषि
निर्णेक्तृकर्मणि भवानतिलब्धवर्णः ।
पीताम्बरं यदि ददासि समुज्ज्वलं तद्
भूयः स्तवाय तव सोम भवामि दक्षा ॥ २६८ ॥

त्वं सर्वज्ञशिरोमणिस्त्वमपि सच्छ्रुत्युल्लसद्वर्तनं
नाम्नाप्यैक्यमकैतवा च युवयोरेकान्तमैत्री सदा ।
एवं सत्युभयोर्न कोऽपि कथयत्यानन्दहेतुं ततः
किं सम्पादितमब्जं लौकिकपदप्रौढ्या किमास्ते सुखम् ॥ २६९ ॥

अतिशिथिलगतानां निर्झरास्मत्पदानां
प्रभुपदमनुगन्तुं नैषदप्यस्ति शक्तिः ।
तदिह भव सहायोऽन्वेषणे तार्क्ष्यकेतो-
र्यदसि किल वनेऽस्मिंस्त्वं सदैव प्रवाहः ॥ २७० ॥

उर्वीधरोऽयमखिलोन्नति - भागनेक
भ्राजत्फलागमलसद्धृदयो यदास्ते ।
गत्वा तदस्य पुरतः परिपृच्छतैनं
कृष्णागमं त्वमिह वेत्सि न वेति सख्यः ॥ २७१ ॥

---

१. वस्त्रम् आकाशं च । २. पीतवस्त्रं कृष्णं च । ३. शिवः सर्वज्ञश्च । ४. वेदः कर्णश्च । ५. कुमुद चन्द्रेति च सम्बोधनम् । ६. निर्झरः प्रकृष्ट-वाहनश्च ।

जानामि सत्यमचल त्वयि शक्तिरस्ति
ज्ञातुं रमेशमनिशं हि गुहाश्रितोऽसि।
तत्र स्थितश्च हरिरित्यपि वेदवाद-
स्तत्किं प्रतारयसि दर्शय शर्महेतुम् ॥ २७२ ॥

मदुन्नतितिरस्कृतिर्निजकुचैः कृताऽऽभिर्मुहु-
रिदं मनसि संसरन्न कुरु मौनसन्धारणम्।
कृतो यदधुना क्षमाधर तवेह पादार्थ[1]य-
स्त्वलं हि शरणप्रदः स इति सर्वसत्पद्धतिः ॥ २७३ ॥

नानाप[2]त्रलसत्स्थितिः प्रविलसद्बाणा[4]सनस्यन्दनः
सद्वंशप्रभवोऽनवद्यविभवो भूभृद्वरः सन्नपि।
अस्मच्चित्तधनं गिरे यदधुना हृत्वा गतं मोपकं
त्वं सङ्गोप्य निजाश्रितं प्रकुरुषे तत्ते न दोषाय किम् ॥ २७४ ॥

धर्माश्रितः स भुवि यश्च सुप[5]र्वतत्त्व-
ज्ञातेति धर्मधिषणाः प्रवदन्ति सन्तः।
तत्पर्वत त्वमसि नित्यसुपर्वतत्त्व-
पर्याप्तिभूरिति वद प्रभुलाभधर्मम् ॥ २७५ ॥

अस्मद्वितीर्णमधुगन्ध - चतुर्विधान्न-
रा[6]द्यादनातिशय पुष्टशरीरकोऽपि।
इष्टार्पणादुपकरोति न भूभृदेष
युक्तं जडेऽतिकठिने विफलं हि दानम् ॥ २७६ ॥

गोवर्धनोऽसि गिरिराज यथार्थनामा
त्वं सर्वदेति विदितं तव पूर्ववृत्तात्।
ग्लानिं गवामतनुजामवलोक्य सम्प्र-
त्याप्तः पदं तव वियोगभयादवैताः ॥ २७७ ॥

---

१. शान्तिः पृथ्वी च। २. चरणाः प्रत्यन्तपर्वतश्च। ३. वृक्षा वाहनानि च। ४. बाणादयो वृक्षविशेषा धनुश्च। ५. देवतत्त्वं पर्वतभावश्च। ६. अतिशयितादनात्।

स एवायं कुञ्जो ललितपुलिना सैव यमुना
तदेवेदं वृन्दावनमपि स एवायमचलः ।
परोक्षे लक्ष्मीशेऽजनि तदखिलं विप्रियमतो
मनःप्रीतौ हेतुर्भवति भुवि नो वस्तुमहिमा ॥ २७८ ॥

श्रीमानेष जयोऽर्जुनश्च सुरभिः शक्रस्तथा मन्मथो
जीवोऽर्को वरुणः शिवाग्निवृषभा धर्मः कुबेरोऽप्यसौ ।
इन्द्राणी च तपस्विनी च परमाऽपर्णा सुपद्माऽप्यहो
नैतेष्वन्यतमोऽपि वेत्ति भगवत्पादाब्जमित्यद्भुतम् ॥ २७९ ॥

अनया तु भवेद् दृष्टो गायत्र्या सत्यमेव सः ।
परन्तु सख्यः किं कार्यं दर्शनार्हा न योषिताम् ॥ २८० ॥

प्रागाशाऽऽसीद्भूयसी दक्षिणस्त्वं
प्रायः स्या इत्यद्य यत्पश्चिमोऽसि ।
तत्ते वाच्यं किं प्रभो ब्रूहि किञ्चिद्
गोपीचित्तं तूत्तराशावलम्बि ॥ २८१ ॥

ततोऽविशन् इति : १०.३०.४३.

योग्यागमा अपि हि यं न विदुः परेशं
गायत्र्यपीति किमु तत्र वृथा प्रयासः ।
इत्यन्तरे चिरमवेक्ष्य तदा रमण्यः
सद्योगिवृत्तय इवाशु निवृत्तिमापुः ॥ २८२ ॥

यावद् द्वैतप्रकारः प्रसरति परितो वृत्तयस्तावदेव
श्रान्ता धावन्ति यत्नात् कथमपि पुनरावृत्तिमेवाप्नुवन्ति ।
अप्राप्यं ज्योतिषां यद्विलसति तमसां यच्च तेजः परस्ताद्
गत्वा ताश्चन्द्रिकान्तं क्षममिदमभजन् यत्पुनस्तन्निवृत्तिम् ॥ २८३ ॥

---

१. जयादयो वृक्षविशेषाः पक्षे प्रसिद्धाः । २. महामन्त्रो वृक्षविशेषश्च । ३. दक्षिणादिग्भवः सरलश्च । ४. उत्तरदिक् प्रतिवाक्यं च । ५. योगिनश्च आगमाश्च योग्यवृक्षाश्च ।

राससौख्यं तु राकायां तासामासीदितीरिते ।
आप्रभातविधूल्लासादन्यथोक्तिर्न युज्यते ॥ २८४ ॥ [ युग्मम् ]

जगद्व्यापापि यं द्रष्टुं नालमीशेह चन्द्रिका ।
तत्र का वयमल्पज्ञा अल्पगा इत्यनग्रगाः ॥ २८५ ॥

अप्राप्येशं निवृत्ताभिस्ताभिर्विश्रान्तवृत्तिभिः ।
स्फुटीकृता व्रजस्त्रीभिर्यतो वाच इति श्रुतिः ॥ २८६ ॥

यो योगिवृत्तेरपि नापरोक्षो
यो वा श्रुतेरश्रुततात्त्विकश्रीः ।
तस्यापरोक्षोद्यमिनां जनानां
सिद्धः श्रमो गोकुलभावभाजाम् ॥ २८७ ॥

न हि यावदसौ समीक्षितो निजहृत्संस्थित इत्यहं जनैः ।
भ्रमणाच्छ्रम एव केवलो भवितैषा भुवि तावदन्वहम् ॥ २८८ ॥

तन्मनस्का इति : १०.३०.४४.

जगत्यस्मिन् यस्यास्त्यभिरुचिरहो साहसविधौ
प्रसिद्धं तत्कर्माखिलमपि विभो साहसमयम् ।
वनेऽस्माकं त्यागं निशि विदधतस्ते यदुपते
प्रसादोऽप्यस्मासु स्फुट इह जगद्विस्मयकरः ॥ २८९ ॥

असीमं स्वप्रेम प्रसृतमयि नाथ त्वयि कृतं
तथाऽऽभिः सर्वस्वार्पणमपि मनोभावसहितम् ।
निरीक्ष्येषन्मानोन्नतिमतनुजामप्यदयवत्
तदैवान्तर्भूतः किमिदमुचितं ते कृतविदः ॥ २९० ॥

प्रभो यत्त्वत्कृत्यं तदिह मधुरं तावकदृशा
न जाने किं ब्रूयात् कथमिति च पृष्टो यदि परः ।
क्वचागोऽणुर्गोपीजनविरचितो मानसहितः
क्व तत्त्यागः सह्याचल इव दृढस्तत्प्रतिकृतिः ॥ २९१ ॥

न यागैर्वा योगैर्व्रतजपतपः - साधनचयै-
स्तथाऽहं सन्तुष्टोऽध्यवनि लघु दानैरिह यथा।
प्रतिज्ञावागेषा कथमवितथा स्याद् यदुपते
त्यजस्येवं रुष्टस्त्वलमतनुदात्रीर्यदबलाः ॥ २९२ ॥

त्यक्त्वाऽन्यसाधनानीश गायामस्त्वद्यशो भृशम्।
यथा शं दर्शय श्रीश काननं वा स्वकाननम् ॥ २९३ ॥

मानस्थितिर्भृशमितोऽप्यवधार्य ते चे-
न्मानस्थितिर्व्रजजने भवितेत्यवेहि।
गां नः स्थिता अवसि माधव सर्वदेति
गानस्थितास्तदधुनाऽप्यव तावकीनाः ॥ २९४ ॥

पुनः पुलिनमिति १०.३०.४५.

कृत्वागमेक्षणमुखाखिलसत्प्रयत्नां
स्तास्तद्विशुद्धपुलिने निखिला युवत्यः।
ऐशं यशो विशदमेव तदाऽन्वगायन्
श्रीशाप्तये तदधिकं सकलात्स्फुटं तत् ॥ २९५ ॥

एवं प्रतीकसमुपासन - वासितात्मा
योगी निजान्तरवधारित - चित्स्वरूपः।
योग्यागमाद्यनभिलक्षितमात्मरूपं
गायेदनन्यगतिराश्रयदं जनस्य ॥ २९६ ॥

मद्धश्यगीताभिनिविष्टधीर्यो
मत्प्राप्तिरस्याशिवति माधवाशयम्।
ता बोधयन्त्यः पुलिने चरन्त्यः
श्रीशाप्तये गातुमुपाक्रमंस्तदा ॥ २९७ ॥

---

१. निषेधार्थकम्। २. गाः नः इति च्छेदः। ३. अवयवाः। ४. गीतं गीता च।

गीतेन मोहितधियो वयमस्य लब्धा
इत्यन्तराहितदृशो व्रजयोषितस्ताः ।
तं प्राप्तुमप्यपरयत्न - विकुण्ठभावाः
साध्वारभन्त नुतितोऽद्भुतगीतमेव ॥ २९८ ॥

प्रत्येकस्मिन्नशक्तेऽपि सङ्घे शक्तिः फलप्रदा ।
युक्तं जगुस्तुल्यचित्ताः सर्वाः श्रीशेक्षणोत्सुकाः ॥ २९९ ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने त्रिंशोऽध्यायः ।। ३० ।।

## ॥ अथ एकत्रिंशोऽध्यायः ॥

सन्मनोऽलिव्रजोद्गीतमिन्दिरानन्दमन्दिरम् ।
गङ्गोत्तुङ्गरसं वन्दे श्रीगोविन्दपदाम्बुजम् ॥ १ ॥

आलक्ष्याखिलसृष्टिसर्जकतया सच्चिद्विलासं परं
गायन्ति श्रुतयोऽखिलाश्रयतया वाङ्मानसागोचरम् ।
सच्छब्दा गुणवृत्तयोऽप्यनिशमित्युक्तं हि वेदस्तुतौ
प्राज्ञैस्तद्वदिहापि सूक्ष्ममतिभिर्ज्ञेयं सुगीतेङ्गितम् ॥ २ ॥

निखिलागममूलदृष्टपादं
सकलांशान्वयभूषितं ह्यदृश्यम् ।
सगुणं भगवत्स्वरूपमेवं
मनसाऽलोचि तदेति भाति ताभिः ॥ ३ ॥

देहादिसङ्गो भगवद्विराजित-
श्चिदिन्दिरोल्लासविलासभूरलम् ।
अतोऽत्र योगादचिरेण दृश्यतां
प्रभुर्व्रजत्येवमसूभिरीरितम् ॥ ४ ॥

आद्यन्तयोश्चरणयोरभिरूढमर्थं
कृत्वा मनस्यतितरां विगताभ्यसूयैः ।
आलोच्यमेतदविगीतमनर्घ्यगीतं
प्रादर्शि किञ्चिदुपयोग्यवधानवुद्धैः ॥ ५ ॥

जयति ते इति : १०.३१.१.

व्रजो जयति जन्मना जगदधीशितुः श्रीरपि
वसत्यनिशमत्र तज्जगति धन्यभाग्या इमाः ।
प्रतिक्षणमिदं मुदा सदय यैः स्तुतं तान् वुधान्
प्रवर्तयितुमीहसे कथमिहान्यथा वर्णने ॥ ६ ॥

---

१. वेदा वृक्षाश्च । २. चन्द्रः सम्पूर्णः ।

यत्र त्वं व्रजसि स्त्रिया कृतधिया गन्तव्यमस्मिन् स्थले
गन्तव्यं पुनरन्यतश्च भवतेत्येषः स्वभावो हि ते।
ज्ञातो यत्किल गोकुले तव रमा ज्ञात्वाऽऽगताऽवस्थिति-
मत्र त्वं च निगूहसे तदबलास्वस्मासु को विस्मयः ॥ ७ ॥

योगो येनाकारि भूमौ न तस्य
पारोक्ष्यं ते वागियं किञ्चिदर्थी।
यत्संयोगासक्तचित्ता अपीश
त्वां पश्यामोऽद्यापि नाद्यानवद्यम् ॥ ८ ॥

यत्त्वद्व्यक्तिरिहेश सर्वसुखदा तस्मादितो न व्रज
स्यान्मा मानवतीति यामि यदि तत्साऽस्मासु शश्वत् स्थिता।
सिद्धास्तद्भुवि तावका वयमपि प्राणप्रियस्त्वं च न-
स्तद् दृश्यत्वविलम्बनेऽणुमपि सद्धेतुं न जानीमहे ॥ ९ ॥

मानापराधमवगत्य मनः कृतं नो
यत्त्यागदण्डनमनल्पमकल्पि युक्तम्।
निर्मन्तुकाङ्क्षिसुखविच्युतिकृत् कुतोऽ सौ-
त्येकापराधफलमन्यगमित्यधर्मः ॥ १० ॥

अनन्यगतिका वयं तव पदारविन्दादृते
वने गतजने मनोज[3]निपुलिन्दसन्दानिताः[4]।
कृतं क्वचिदपीश तन्मनसि माऽऽनयाऽऽगोऽधुना
विधाय करुणां सखे लघु भवेह दृग्गोचरः ॥ ११ ॥

व्रजोत्कर्षार्थमीश त्वमस्मिन् क्रीडसि सर्वदा।
तदलं पृथगुक्त्याऽस्मद्गोकुलानन्ददो भव ॥ १२ ॥

शरदुदाशय इति : १०.३१.२.

सखे स्मितमुखेन ते व्यरचि पूतनानाशनं
दृशाऽब्जसदृशाऽधुना यदिह नः समारभ्यते।

---

१. समागमः सम्यग् योगश्च। २. लक्ष्मीः। ३. कामः ४. बद्धाः।

स्पशा[1]च्चरितगोऽनयो भवति तत्प्रभोः संशयः
कृतं ह्यवयवैरिहावयविनो भवेदत्र कः ॥ १३ ॥

यन्नस्त्वत्पदवारिजा[2]तवसती - र्मीनैकतुल्यस्थिती-
राकृष्याकुलयस्यनङ्गसरसस्तीरे स्वदृग्जाल[3]कैः ।
तन्नाथोडुप[4]वंशविश्रुतयशोराशेर्न युक्तं वदेत्
को नामात्र सुधीवर[5]स्य भवतो मीनैकवृत्तेरहो ॥ १४ ॥

सन्त्यक्ष्यामि न वः कदापि बहुशो दत्त्वेति विश्रम्भकं
चास्मन्मानसवृत्तयो बत निजायत्तीकृताः श्रीमता ।
कुर्याः सम्प्रति वञ्चनां निजतिरोधानेन चेत्तन्न किं
ज्ञातं गर्हित एव यत्त्रिभुवने विश्रम्भघाती नरः ॥ १५ ॥

जितेन्द्रिय इति प्रथां जगति कर्तुमेवात्मनो
यतस्व कथमप्यहो परमपास्य नः सङ्गमम् ।
परन्त्वदमतेहि ते न हि कदापि लुप्ता भवेत्
प्रथेति गणि[6]काविहार्यथ भुजङ्गवृत्तिः प्रभो ॥ १६ ॥

स्वायुत्पादकभूमिकामपि कुधीर्जाल्मोऽप्यसौ देवकीं
स्त्रीत्वान्नैव जघान यात्वनुसृतः कंसः स्वसारं सखे ।
हन्तुं नः कथमुद्यतोऽसि युगपत् त्वत्सारभूताः स्त्रिय-
स्तत् सत्यं वद विश्वनाथ स भवान् देवः स दैत्यः कुतः ॥ १७ ॥

दैत्या मया युगपदेव हताः सहस्र-
सङ्ख्याधिका अपि हता न तथा स्त्रियोऽस्मिन् ।
एकां बकीं हतवतस्तव ताटकां च
प्रायो दुराशय इहाच्युत भाति कृत्ये ॥१८॥

भवन्ति तव पार्षदा वरदयादयः सुव्रता-
स्तथैव भुवि मामका अपि सुभक्तिभावादयः ।

---

१. सेवकः । २. कमलम् उदकं च । ३. समूहः बन्धनसाधनं च । ४. नौका चन्द्रश्च । ५. विद्वद्वरः जालिकश्च । ६. एतन्नाम्नी पुराणप्रसिद्धा वेश्या च । ७. राक्षसः । ८. भगिनीं स्वबलं च ।

अकैतवतया सदा स्फुरति मित्रतैषामहो
कुतो हि पुनरीदृशी परिणताऽऽवयोस्तद्वद ॥ १९ ॥
गवामतनुहुंकृतैर्मृदुरवैः पिकानामपि
श्रुतो भवति गोपतेस्तदुपकण्ठगामी सदा ।
इति व्रजजनार्भकैस्तव गतिर्व्यवर्णि प्रभो
न धावसि कुतोऽधुना वरद गोपिकारावतः ॥ २० ॥
मुधा किमु पलायसे किमिति वा पिधत्से निजं
न संभवति विच्युतिः कथमपीह नौ सङ्गतेः ।
वयं प्रकृतयो भवानधिपनन्दसूनुर्यत-
स्ततो हि विधिचोदितः सततमावयोः सङ्गमः ॥ २१ ॥
भवत्यविकलस्थितेस्त्रिभुवनेश लज्जाकर-
स्तवस्तवनगर्हितो यदि च वल्लवीसङ्गमः ।
किमर्थमभवस्तदा सरसपल्लवोत्तंसकः
कुतो वनपरिभ्रमे बहुलतानुरागो धृतः ॥ २२ ॥
मौनं समाश्रयत वः करवाण्यभीष्ट-
मित्थं प्रतार्य शठ दुग्धमपाहरस्त्वम् ।
नैतावता बत जितं भवता यतोऽस्ति
स्वोऽपि प्रसङ्ग इति तत्र हि दर्शयामः ॥ २३ ॥
एतादृक् तव संविधेयमिह चेदासीत् पुरस्तत्कुतो
नोक्तं किं वितथं प्रतार्य वचसा मोहं सखे प्रापिताः ।
आस्तां तत्कृतमस्ति साधु निखिलं स्पष्टं त्विदं प्रोच्यताम्
यः स्यादाशय ईश ते सुशरणास्तत्रानुमन्यामहे ॥ २४ ॥
सद्वाचोऽकितवा दयार्द्रहृदया यूयं न चेत्थं मिथः
स्त्रीपुंसैर्विहितासु वादततिषु त्वद्वञ्चनावेक्षिकाः ।
कामं नाम भवाम भाविनि जने दृष्टान्तभूताः परं
तच्छ्रीशाफलवञ्चनाविधिरयं स्वैरं समारभ्यताम् ॥ २५ ॥

१. गावश्च पिकाश्च तेषां गोपस्त्रीणां च आरावः शब्दः । २. रतं लताश्च ।

व्यापादं यदि वाञ्छसीह भगवंस्तत्तस्य पात्राण्यलं
कंसो मल्लशलादयोऽसुरवरा दैत्यास्तथा दानवाः ।
दीनासु क्रियते किमर्थमबलास्वस्मासु तद्योजनं
दीनद्रोहविचिन्तनं न हि बुधैः सद्धर्म उट्टङ्कितः ॥ २६ ॥
विश्वातिशायि चरितं तव विश्वनाथ
विश्वेऽपि शश्वदिति यत्प्रवदन्ति सन्तः ।
तत्स्याद् ध्रुवं चरितमीदृशमेव यन्नो
दीना विहाय गहने विहितं स्फुटार्थम् ॥ २७ ॥
यो मुष्णाति परश्रियं स हि परान् पुष्णाति तृष्णाकुलान्
कृष्णैतच्छशभृद्गृहोऽभिवचनं प्रायः प्रसिद्धं भुवि ।
अस्मादेव विपुलकर्माश भवतः शुश्रूषणं स्वीकृतं
तन्मूल्यार्पणसाध्वसाच्च सहसा घाते प्रवृत्तो भव ॥ २८ ॥
यद्यद्वा मयि वर्तते तदखिलं लोकोत्तरं वस्त्विति
प्रख्यातिस्पृहयालुना यदि निजोरुन्यस्तसर्वात्मना ।
हिंसायां निजहिंस्रतातिविशदीभावाय बुद्धिर्धृता
तन्नास्ति त्वयि हिंस्रतैव भगवन् षाड्गुण्यभाजि प्रभो ॥ २९ ॥
प्रभ्रपन्ते सन्तः पुरुषहृदयं लोहमयमि-
त्यलं योषादृष्टिर्भजति पदवीं चुम्बकमणेः ।
स्वरं श्रुत्वाप्यार्तं सदय न समायासि तदिदं
भवेच्छास्त्रं प्रायो नरि जगति दुष्प्राप्ययुवतौ ॥ ३० ॥
प्रारब्धादघराशिदुःखविवशा सर्वे नरास्त्वं यत-
स्तद्दुःखप्रदकर्मणा न कलितः श्रीमानतश्चित्सुखः ।
सत्येवं हि मुधाऽस्मदार्तिकरणात्तत्किं चिनोषि प्रभो
पङ्कालेपनमार्जनादिह वरं यत्कर्दमास्पर्शनम् ॥ ३१ ॥
पञ्चबाणभिद्योर्मनोभवप्राणयोरयमुपस्थितो रणः ।
शौरिणाऽन्यतरपक्षगेन तद्द्वाव्यमीश भविता सुरक्षणम् ॥ ३२ ॥

१. पंच बाणाः भेदाश्च ययोः । २. मदनः । ३. प्राणरक्षणं शोभनं रक्षणं च ।

इन्द्रियाणि समनांसि हृतानि
जालकेन तव दृष्टिगुणानाम् ।
वीक्ष्य धीरपि सुसंभ्रमदीना
भ्राम्यतीह विहिताश्रयहीना ॥ ३३ ॥

शरदुदाशयजातसरोजको-
दरगतामपि मां हरतस्तव ।
न हि हरे वनजातविहारिणी
हरणमद्भुत - मित्यवगम्यते ॥ ३४ ॥

विषजलाप्ययादिति : १०.३१.३.

कल्पानलानिलजलप्रदवृष्टिजालात्
काकोलकाबिलजलाल्लघु पालिताः प्राक् ।
घोरामरारिनिकरादपि तच्छरण्यो-
पेक्षापदं तव कथं वयमद्य जाताः ॥ ३५ ॥

क्रुद्धेन्द्रारब्धवृष्टिप्रगलदधिकसत्कार्य - धैर्यान्तराणां
वीक्ष्यास्माकं मुखानि द्रुततरमभवद्यन्मनस्ते दयार्द्रम् ।
जातं तद्वज्रसारं कथय कथमहो साम्प्रतं साश्रुनेत्रा
क्रन्दन्तीरट्टहासं सदय न सहसाऽऽयासि शृण्वन्नपि त्वम् ॥ ३६ ॥

युष्मत्पापात्सन्निधिं नैव यामी-
त्येवं वाचो भान्ति ते भ्रान्तिमूलाः ।
यत्प्रागुक्तं गोपबालैरशेषैः
कृष्णेनाद्यैवाघकालो व्यनाशि ॥ ३७ ॥

श्रुत्वाऽस्मत्स्वरमार्तमेपि न दयामालम्ब्य नाथेदृशं
क्रौर्यं त्वय्यधुना नवीनमिह तत्कस्मात्समासादितम् ।
ज्ञातं वा तव पादकुट्टनगलद्गर्वस्तदा कालिय-
स्तत्सर्वस्वमिवोपदां प्रविशदां त्वत्प्रीतयेऽकल्पयत् ॥ ३८ ॥

---

१. लक्ष्मीम् । २. पापम् अघासुरश्च ।

अधःस्थितेनाल्पतराद्रिधारणं
कृतं करेणेति न किञ्चिदद्भुतम्।
कुरूर्ध्वगाभ्यामचलद्वयोद्धृतिं
प्रभो कराभ्यां सबलो मतस्तदा ॥ ३९ ॥

न नाशिताः स्युर्यदि पूतनादयो
न वारितं स्याद्यदि वेन्द्रवर्षणम्।
कुतोऽर्थनायाः प्रसरस्तदा त्वयं
त्रातं तदानीं किमुपेक्षसेऽधुना ॥ ४० ॥

निस्तन्द्रं शरणागताऽवनपरः कारुण्यवारांनिधि-
र्भक्तानामभयप्रदो वरदराडित्थं जनैर्गीयसे।
तत्प्रायः प्रतियातमर्थत इतस्तोषप्रदस्तावकं
सत्यं सम्प्रति चेत्तदस्ति विशदं सत्यावलम्बं कुरु ॥ ४१ ॥

भोक्तव्या विरहव्यथेति भवती भाले लिपिर्वेधसी
तत्राहं करवाणि किं यदुवरेत्येवं त्वदुक्तेस्त्वितः।
भूयस्त्वद्वरदाऽभयप्रदकरैः संलालितेऽस्मल्लस-
द्धम्मिल्ले सुमनःसमाश्रितपदे का नाम संभावना ॥ ४२ ॥

पृथ्वीतो जलतोऽग्नितश्च मरुतश्चाकाशतश्चापि ते
तत्तत्क्लेशद - तत्प्रसङ्गपतिताः शश्वद्वयं रक्षिताः।
एवं भौतिकसंभवादपि भयात् त्रातुस्तवाहं प्रभो
प्राप्तं त्राणमिहाप्यनङ्गशिखितो भूतात्मकादद्भुतात् ॥ ४३ ॥

परप्रहित - दुर्दैत्यदूरीकरण - कौतुकी।
दूरीकर्तुं निजारब्धं विरहं किं विलम्बसे ॥ ४४ ॥

न खलु गोपिकेति : १०.३१.४

यत्कार्यमस्ति किल यस्य तदेव तेन
कार्यं सदैव न कदापि हि तद्विरोधि।

---

१. पुष्पाणि देवाश्च। २. कामाग्निः।

अस्मज्जनावनकृते भवतोऽवतार-
स्तत्तद्विरोधि वनमाश्रयसे कथं वा ॥ ४५ ॥

यदा भवति दुर्जनोन्मददशा-पिशाच्युद्भवो
यदा च सदवस्थितिर्भवति कुञ्चिता तद्भयात् ।
तदाऽवतरणं महामनु[1]-मयाभिधानस्य ते
श्रुतं तदिह पाहि नः स्मरदुरन्त-रक्षोभयात् ॥ ४६॥

अनाथजन-रक्षणं जगति भाव्यमेतद्धिया
चतुर्मुखमुखैर्मखांशनवरै[2] - स्त्वमभ्यर्थितः ।
करिष्यसि पुरः कथं सदय तद्वचः सार्थकं
यदद्य परिदृश्यते प्रथमपीठिकैषेदृशी ॥ ४७ ॥

अलं मौनेनालं वनतरु-तिरोधानविधिना
मृषा क्रोधेनालं कपटरचनाचार-चरितैः ।
अलं त्वौदासीन्यैरल-मलघुमानै रलमलं
विलम्बैर्यत् स्त्रीणावन-विहितसन्धस्त्वमभवो ॥ ४८॥

नित्याम्भोधि - निषेवणोदित - महाशैत्योपशान्त्यै यदि
प्रेप्सुर्दावपदस्थितिं तदिह किं तार्णेन तेनाग्निना ।
एह्यस्मत्सविधे दिशामविरहोद्दीप्ताग्निभाजौ कुचा-
वेतौ पर्णतृणाग्निसेवनविधि - श्रीस्यस्य यच्छ्रूयते ॥ ४९ ॥

धातृप्रार्थित - विश्वरक्षणकृते प्राप्तोदयस्त्वं कुले
वृष्णीनामसि नासि गोपशिशुको विश्वेशसाधारणः ।
तत्कुर्वन्निह धातुरर्थितमहो सत्यं पुराऽङ्गीकृतं
चित्तं त्वद्विरहद्विपत्कलुषितं नाह्यस्मदीयं द्रुतम् ॥ ५० ॥

स्मरारिस्मृतिः स्यात् स्मरार्तिव्यपाये
समर्थेति वागर्थतोऽभ्यर्थिताऽपि ।
स्वकान्तैकपूज्याङ्घ्रि[3]पद्मस्य वासं
तवालोक्य चित्ते पदं नैव धत्ते ॥ ५१ ॥

---

१. मन्त्रमयम् । २. देवाः । ३. ब्रह्मा ।

अस्मद्गतस्त्वमिति माधव वास्तवाज्ञः
स्वैरं जनो जगति जल्पतु जारबुद्धिः।
देवद्विजात - गुरुसन्निधि - शालिनीहं
जातोऽस्ति ते सुभग सांप्तपदीनयोगः ॥ ५२ ॥

क्वचित्पत्रं पुष्पं क्वचिदपि फलं क्वापि सलिलं
यदा लब्धं तस्माद् बहुतरमगास्तोषमनघ।
यदस्माभिः सम्प्रत्यतुलरुचि सर्वस्वमपि ते
प्रदत्तं तत्कस्मान्न बत सविधं धावसि सखे ॥ ५३ ॥

किं वा[1]ऽऽगो गणयन् दयानिधिरयं तत्याज वः सुन्दरी
रात्रावेवमदम्भशालिहृदयैः पृष्टेऽथ तत्रोत्तरम्।
किं वा देयमिदं मनागपि विभो चिह्नो न तस्मात्कृपां
कृत्वाऽऽगत्य सकृद्धदान्तरगतं पश्चात् स्वतन्त्रो ह्यसि ॥ ५४ ॥

जडाधिपतिरप्यसौ निजपदाम्बुजाताश्रया
इमा इति जडात्मनामभितयोपितानामपि।
करोति न तिरस्कृतिं त्वमिह सुज्ञवर्योऽपि सन्
करोषि तदिदं श्रुतेः पदमुतोपहासस्य भोः ॥ ५५ ॥

विलोकय दयानिधे यदयमिन्दुरानन्दय-
त्यमन्दमिह तारकाः पदजुषः स ते पूर्वजः।
तदस्मदवनं प्रभो कुरु न वा न तत्रार्थ्यसे
व्रतं नु वह वंशजं सदय तारकानन्दकम् ॥ ५६ ॥

वयं कीदृशोऽयं च कीदृक्स्वरूप
इति ज्ञानशून्याः कथं साहसोत्काः।
इति श्रीश वाच्यं न यत्त्वं परात्मा
वयं सुख्यभूतास्तवेत्येव विद्मः ॥ ५७ ॥

१. गोकुले। २. सख्यं विवाहश्च। ३. अपराधम्। ४. समुद्रः। ५. नदीनाम्। ६. नक्षत्रानन्दकं तारकं तदानन्दकं च। ७. मान्याः श्रुतिरूपाश्च।

तदावतारस्य विभो प्रधानं हेतुं च कार्यं परितो यथार्थम् ।
वयं विभाव्यैव मुहुर्मुहुस्त्वां सम्प्रार्थयामस्त्वमवेति दीनाः ॥ ५८ ॥
इदमस्मद्वचः सत्यमकैतवमिति प्रभो ।
बहिष्ठस्य पुरोवाच्यमसि त्वं त्वन्तरात्मदृक् ॥ ५९ ॥

'वरचिताभयमिति : १०.३१.५.

भवामयभयापहा भुवि भवन्ति ये जातुचि-
न्न ते सदय साधवो विषयभोगसौख्यप्रदाः ।
इदं तव कराब्जमस्त्वभयदानदक्षं ततः
सुपूज्यमिह धेहि नः शिरसि सर्वशोभास्पदम् ॥ ६० ॥
संसारोरगभीजुषा - मभयदो हस्तो मुखाब्जंस्तथा
तापघ्नः पदमिष्टदं सदमृताधारोऽधरो जीवनम् ।
अस्माभिर्यदिदं श्रुतं तदधुना वृष्णीश वीरार्तिहन्
व्यक्तीकृत्य पुषाण नस्त्वमसि यज्जीवातुरूपः सताम् ॥ ६१ ॥
यदाचरणमीर्ष्यया तदवलासु सापत्नकं
तनोति च ततो वयं नहि हरे रमेर्ष्याजुषः ।
यदत्र समपेक्ष्यते हृदि विनिश्चयाधायकं
कराब्जमिह धेहि नः शिरसि साऽस्ति तद्वासिनी ॥ ६२ ॥
यदि स्यात् पद्मायाः इव निरुपमं रूपमिह च-
स्तदा मद्भोगस्यायतनमुचितं यूयमिति चेत् ।
तदस्माकं विष्णो शिरसि निजहस्ताब्जमधुना
निधेहि त्वं यत्तत् सुरतरुवदस्तीष्टफलदम् ॥ ६३ ॥
मीनस्येवाम्बुजस्यापि नाजले स्थितिरुज्ज्वला ।
अतः कराब्जमेतत्ते शुद्धास्मत्के[2] निधेहि भोः ॥ ६४ ॥

व्रजजनार्तिहन्निति : १०.३१.६.

स्मितं रुचिरमीश ते निजमदापनोदक्षमं
भवत्यतितरामिति प्रभुवरापहाय स्मयम् ।

---

१. चन्द्रः । २. शीर्षे जले च ।

अधारि लघु किंकरीपदमनल्पसेवास्पदं
कुतः पुनरितोऽपि तत्प्रकटने विलम्बः सखे ॥ ६५ ॥
अनेन किमु तेऽन्वय - प्रथमपूजितेनेन्दुना
प्रभो भवति यः सदा स्मरतमो - निमज्जद्वपुः ।
अतो जगति दुर्धरं तिमिरमेतदन्तः स्थितं
विनाशय सदाशयस्व मुखचन्द्रसन्दर्शनात् ॥ ६६ ॥
अस्माभिर्विरहव्रतं व्यरचि यत्तस्याधुनोद्यापनं
कार्यं चारु तदर्थमागमयुतो द्राग्ब्राह्मणोऽपेक्ष्यते ।
तत्त्वं सच्छ्रुतिकं मुखं तव सखे सद्ब्राह्मणं दर्शय
तस्मै स्वामृतमुत्प्रवालनिहितं प्रीत्यार्पयामोऽधुना ॥ ६७ ॥
नभोगरूपं नयनं त्वदीयं त्वद्वाहनं चापि नभोगशालिः ।
नभोगजाते रतिरस्ति चातो नभोगभास्या अपि नो गृहाण ॥ ६८ ॥
रदनप्रकाशि वदनं स्मितपूर्वं सदने प्रदर्श्य मदने कृतबुद्धिः ।
अधुना कुतो हि मधुनाशनकान्ते विरहोदयोऽजनि रहोधिविहारे ॥ ६९ ॥
लोके यथाऽऽर्जवविधिः स्वहितार्थकारी
तादृक् परो न कतमोऽप्युचितोऽस्त्युपायः ।
जानन्त्य एव वयमित्थमहो वहाम-
स्त्वत्किंकरीपदमिहेति न शिष्टमस्मात् ॥ ७० ॥
दास्यो वयं सदा दास्यमनालस्येन कुर्महे ।
वेतनं नान्यदिच्छामस्त्वन्मुखाब्जनिरीक्षणात् ॥ ७१ ॥
वृन्दावनमिदं नाम स्वकमित्यावयोर्मतम् ।
तत्त्वं दर्शय पश्यामो वयं चापि स्वकाननम् ॥ ७२ ॥

प्रणतदेहिनामिति : १०.३१.७.

आभिः साकमनेकदैत्यविर्गम - व्यापार - दीक्षागुरुः
स्त्रीभिः सङ्गरमाचरेयमधुना भूमौ कथं क्लीपदम् ।

---

१. वेदाः कर्णौ च । २. सूर्यः । ३. पक्षी । ४. देवजातेः । ५. चन्द्रवद् भा यस्य तादृगाननं यासां ताः । ६. अभूरिति शेषः । ७. स्वकं च तदाननं च । ८. नाशः ।

शङ्केथा न कदाचिदेवमनिशं सज्जो यदस्मत्पुर-
स्त्रैलोक्योद्भटधूर्जटिप्रतिभटो जागर्ति वीरः स्मरः ॥ ७३ ॥

करैस्त्वमनिशं निजै - र्दितिज - निर्दयोन्मर्दने
जनार्दन - सुदर्शनादिक - मुरीकरोष्यायुधम् ।
परन्तु न ततो मनोजनिजयो[1]ऽजनीह प्रभो
मनागपि यशोनिधे वद तदत्र किं योजितम् ॥ ७४ ॥

यदाश्रित्य दुर्गं भवत्युन्नतोऽरिः
पदं तत्र शूरैर्विधेयं पुरेति ।
अनुस्मृत्य नीतिं स्तनाद्रौ पदं स्वं
कुरु प्राक्ततोऽर्थात्स्मरो निर्जितः स्यात् ॥ ७५ ॥

रोमाञ्चोत्कटकण्टकेऽतिकठिने कार्ण्याश्रितास्ये कुचे
निःसारे कथमर्पयामि पदमित्येवं न सन्दिह्यताम् ।
तीक्ष्णोर्ध्वाग्रतृणाहितं फणिफणोन्मर्दक्षमं पङ्कहृत्
सश्रीकं सुरसं पुरैव तदभूदस्मत्सुभाग्याद्धरे ॥ ७६ ॥

शिवपदार्पणतः[2] स्तनभूभृतो भुवि भजेयुरलं शिवरूपताम् ।
नखरचन्द्रकलाञ्चितमौलयः स्मरजयोऽर्थत एव ततो भवेत् ॥ ७७ ॥

शिवदृगुज्वलिताग्निभूतिभूतः प्रसृतोऽसौ निखिलान्तरे रजोभिः ।
प्रसृतं तदिदं स्तनेऽपि माभूत् कृपया योजय तत्पदाम्बुजातम् ॥७८॥

उन्मत्तचित्तज - महाकरिराडखर्व-
भूभृन्निभै - र्दृढकुचाभिध - गण्डभागैः ।
अस्मान् मुधाऽर्दयति तत्पदगाङ्कुशेन
दुर्दान्तमेनमधुना - ऽऽकलयानुपेक्षम् ॥ ७९ ॥

त्वमेकस्मिन् शेषे भुवि पुनरयं कञ्चुकियुगे
त्वमन्तर्युक्तानां वससि निखिलानां पुनरयम् ।

---

१. कामजयः । २. शिवेति पदम्, शिवं च तत्पदं च । ३. कमलम्, उदक-समूहं च । ४. कामः । ५. सर्पः स्तनश्च । ६. योगिनाम् । ७. युक्तवियुक्तानाम् ।

त्वदाधिक्यादेवं स्मयनयमपूर्वं वहति तत्
स्वपादप्रक्षेपैः कुरु गतमदं कालियमिव ॥ ८० ॥
अस्मन्मनःसु वसतीति पदाम्बुजं ते
जानन्नपि स्मयभरा-न्नमनाद्यकुर्वन् ।
उन्मत्तवृत्तिरभयं पुनरत्र शेते
तच्छिक्षयैनमधुना स्मरमङ्घ्रिपातैः ॥ ८१ ॥
निरीक्ष्य दुर्गाणि तदन्तरस्थो
धनुर्गुण - न्यस्त - समस्तबाणः ।
प्रहर्तुमिच्छत्यबला - स्तदेनं
बहिर्विनिःसार्य कामभिल्लम् ॥ ८२ ॥
स्मरः स्मृतिसमुद्भवो भवति भुव्यनङ्गो भवा-
ञ्छ्रुतिस्थितपदोऽखिलाङ्गकलितश्च तन्निश्चिनु ।
न तेन सह सङ्गरे तव पराभवः सर्वथा
स्मृतेरधिबला श्रुतिः स्फुटमिहास्तिमानं यतः ॥ ८३ ॥
अयि भोस्तव विक्रमस्य शैली त्रिजगद्वीरविलक्षणा विभाति ।
शिवदुर्धरवैरिजातहन्ता शिवजय्यस्मरसङ्गराद् बिभेषि ॥ ८४ ॥
स्मरो दुर्धरो धीरवीरो जगत्या-
मिति स्वान्तरे श्रीहरे चेद् बिभेषि ।
तदस्मत्स्तनौ तत्पदे भूरि मृद्गन्
स्वहस्तेन सौहार्दभावं चिनुष्व ॥ ८५ ॥
वीरं स्मरं जगति सर्वजना वदन्ति
तत्त्वं तु सूक्ष्ममिदमत्र विभो वदामः ।
अस्मद्बलात् सकलमेव बलं किलास्य
तास्तेऽनुगास्तदधुना न जयेऽस्य यत्नः ॥ ८६ ॥
त्वं सर्वदा शरधिशाल्यसि शार्ङ्गधन्वा
कामस्तु कौसुमधनु-र्लघुपञ्चबाणः ।

---

१. इषुधिः समुद्रश्च ।

तत्किं बिभेषि किमु वा द्रवसीह दूरं
त्वां वीक्ष्य हन्त शरणार्थमुपैष्यतीश ॥ ८७ ॥

यो ह्यस्मद्बलमाकलय्य विपुलं लोकानजैषीत् स्फुटं
कष्टं सोऽप्यधुना स्मरः स्मयमयोऽस्मत्पीडनायोद्यतः ।
हा कालस्य गतिर्विचित्रचरिताऽऽस्तामेतदार्तावलं
स्मर्तव्यो हरिरित्यहो यदुपते ब्रूमस्तदाख्यावलिम् ॥ ८८ ॥

रक्षोराजहृतां स्त्रियं पुनरहो मोक्तुं स सीतापते-
रायासो हि महानभूत् कपिगणे साह्यप्रदे सत्यपि ।
नीतासु स्मररक्षसाऽऽत्मवशतामस्मास्वकस्मात् प्रभो
यत्नस्ते नितरां विधेय इति भोः प्रागेव नः पालय ॥ ८९ ॥

चन्द्रः सूर्यवदाचरत्यविनयाद् वातोऽप्ययं वह्निव-
न्नीरं नीरजयुक्तमप्यतितरां काकोलवद् वर्तते ।
एवं त्वत्सुतसम्मतौ कृतधियः सर्वेऽपि निःशृङ्खला-
स्तत्प्रौढोऽस्ति भवागतो निजसुतं शंसेतरान् साधुवत् ॥ ९० ॥

विभो वृक्ष-पक्ष्यादयो लक्षशोऽपि
वसन्तीह ते सन्ति सर्वे सपत्राः ।
विपत्त्रो भवानेक एवात्र लोके
विपद्भ्यस्ततः पाहि कामोद्भवाभ्यः ॥ ९१ ॥

इयं राका रात्रिर्वनततिरियं भानुतनुभू-
रियं ज्योत्स्ना चेयं पवनसरणिश्चापि सुभगा ।
स्त्रियः सत्योऽप्येताः स्वजनमतिमुन्मुच्य तु तुद-
न्त्यदो वाच्यं कस्याग्रत इति भवानेव शरणम् ॥ ९२ ॥

पुत्रश्चेदपथानुवर्तनमति - स्तच्छिक्षणीयो जवात्
पित्राऽनुक्तिमता स्वयं हितदृशा तन्मातृसद्द्वारतः ।
तत्त्वं श्रीश निजाङ्घ्रिमर्पय कुचेष्वस्माकमस्मिन् सदा
श्रीरास्ते विपथस्थितं च तमसौ कुर्यात्सदध्वाश्रितम् ॥ ९३ ॥

१. रावणः । २. कामः । ३. विगतपत्रः विपद्रक्षकश्च । ४. कामम् ।

पापात् पुरातनकृतात्फलमीदृशं चेत्
पापापहं तव पदं हृदये वहामः ।
यत्त्वत्पदप्रणतिर - प्यग्निलाघ - हन्त्री
कुर्मः सहस्रमिह ता अपि तत्प्रसीद ॥ ९४ ॥

त्वत्पदध्यानमात्रेण वुधा हृद्ग्रन्थिमोचकाः ।
तदद्धा त्वत्पदं शक्तं हृच्छयच्छेदने न किम् ॥ ९५ ॥

अप्रार्थितेनापि पदं हि येन
न्यस्तं त्वयेशाहिशिरस्यनर्घ्यम् ।
तत्प्रार्थनां नः किल कुर्वतीनां
हृद्यर्पणं तस्य तवेड्यमेव ॥ ९६ ॥

मधुरया गिरेति : १०.३१.८.

या वाणी श्रुतिरूपिणी तव विभो विद्वन्मनोहारिणी
सत्प्रामाण्यनिरूपिणी शिव-सुर-ब्रह्मादिकोद्धारिणी ।
तामस्मद् - दुरदृष्टमेत - दनृतां कर्तुं कथं चेष्टते
त्वं वा श्रीश निजे वचस्यपि कथं मालिन्यमाकाङ्क्षसि ॥ ९७ ॥

अनेकजनसन्निधौ यदुदितं वचः सन्मतं
तदीयसमनुष्ठितौ भवति योऽसमर्थः सखे ।
करोति निजगोपनं सकुचधीः खेसूचीक्षणो
भवत्युचितमेव तत् त्वयि परं न वीरोऽसि यत् ॥ ९८ ॥

सहसे न कदापि दास्यभाजां
विषमेष्वार्तिमनाथदीनबन्धो ।
श्रुतिविश्रुत एष डिण्डिमस्ते
कथमीशार्हति मान्द्यमद्य यातुम् ॥ ९९ ॥

यास्ते भवन्ति गुणवर्णन - लब्धवर्णा
आकर्णनेऽपि किल याः सततं सुवर्णाः ।

---

१. कामः । २. आकाशदत्तदृष्टिः । ३. संकटसमयेषु, विषमेषुः कामस्तदार्ति च । ४. विचक्षणाः । ५. शोभनाक्षराः ।

कृत्वा निजोदितविधिं प्रकृते यथार्थं[1]
क्षिप्रं नयाच्युत विधात्रीं ततां श्रुतीस्ताः ॥ १०० ॥
सर्वोऽपि स्मृतिनिचयस्त्वदीयवा[2]क्य-
प्रामाण्यं यदुवर वर्तते[3] गृहीत्वा ।
न त्यक्ष्याम्यलमिति वाग् यदप्रमाणं
प्रामाण्यं श्रुतिनिचये न दुर्घटं किम् ॥ १०१ ॥
वाण्यामेकोऽनुष्ठितावन्य एव
वैधो मार्गो यस्य तद्वाचि का वा ।
श्रद्धे त्यद्बोद्धोपितेऽनादरः स्याद्
वेदेष्वेवं मा कृथास्तत्तदीदृक् ॥ १०२ ॥
यच्चावादीः पूर्वमस्मत्समीपे
तत्ते सर्वं सत्यमेवापलब्धम् ।
अस्यामेवानुष्ठितौ दिष्टयोगात्
स्पष्टं दृष्टं चेष्टितं त्वय्यपूर्वम् ॥ १०३ ॥
या महामोहविध्वंसकारिणी गी[4]स्तवावनौ ।
तया मोहोऽयमस्माकमिति चिन्नीयते मनः ॥ १०४ ॥
त्वद्वाच्यनन्यमतिविश्वसनास्त्वदुक्तं
कुर्वन्ति ये विधिमहर्दिवमच्युतेष्टम् ।
तेषां न मोहतिमिरावृतिरित्यवेक्ष्य
तादृक् स्थिता वयमितस्तु भवान् प्रमाणम् ॥ १०५ ॥
भवेन्मदधरामृतं सुलभमस्य योऽत्राजरैः[5]
सुवर्ण[6]गिरिसंस्थितो भवति सत्सुधर्मा[7]श्रितः ।
यदेवमिह तादृशस्थितिजुषो न किं वा वयं
पदे तव धृतासुभिः कुत इदं पुनर्नाप्यते ॥ १०६ ॥

---

१. सत्यताम् । २. श्रुतिस्वरूपम् । ३. प्रमाणत्वेन प्रचरतीत्यर्थः । ४. श्रुतिरूपा वाणी । ५. देवः तरुणश्च । ६. मेरौ शोभनाक्षरवाण्यां च । ७. देवसभा सरेत्स्विति च्छेदश्च ।

आप्यायनसमं नान्यत्तनुपुष्टिकरं जने ।
निजाधरामृतरसेनाप्यायय तदीश नः ॥ १०७ ॥

तव कथामृतमिति : १०.३१.९.

कथामृतमिदं तव श्रुतिसुखावहं दुर्वहा-
धितापहृदलं भवेदिति विचिन्त्य पीतं बहु ।
अनङ्ग इह चित्तजो मनसि साङ्ग एवाभवत्
ततस्त्वतनुतां पुनर्नय समागमानन्दतः ॥ १०८ ॥

शब्दो रसत्वमनपेतसुखं समेत्य
श्रोतॄन् करोति सरसांस्तव कीर्तिरूपः ।
अद्धा त्वमीश सरसोऽपि रसप्रदाने
जातोऽलसस्तदुचितं कृपणत्वमाढ्ये ॥ १०९ ॥

यशस्त्वदीयं विगतोपमं सदा
विभाति देवाप्रमितप्रभावतः ।
तदद्य सम्पाद्य जगत्यवद्यतां
न वै कलङ्किप्रतिभं कुरु प्रभो ॥ ११० ॥

तव कथा प्रथा नाथ कीदृशी
चरितमीदृशं त्वद्य ते कथम् ।
तदिदमाचर त्वं न सर्वथा
श्रुतिदृशा सदैवासि सत्कथः ॥ १११ ॥

अमृताधिकशक्तिमत् त्वदीयं
भुवि सत्यं हितकृत् कथामृतं हि ।
प्रथितं सुखशालिजीवनं[1] तद्
भवतीदं तु सुतप्तजीवनं यत् ॥ ११२ ॥

चन्द्रादप्यधिकं सुशीतलमघप्राग्भारसंहारकं
श्रीव्यासप्रमुखा यशस्तु कवयः संवर्णयन्त्यादरात् ।

१. सुखशोभिनो देवाश्च ।

आचारस्तु तवेदृशोऽयमबलास्वप्येवमाभाति तत्
तेषामिष्टमकल्प्यनल्पमिह ते तस्मात्तथाऽवर्णयन् ॥ ११३ ॥

त्रितापपापापह - मीप्सितार्थदं
यशस्त्वदीयं भुवि भूरिमङ्गलम् ।
मुहुः कवीन्द्रैरितमित्यमूरपि
रमेश गायन्ति विचिन्त्य हृद्यताम् ॥ ११४ ।

ये त्वत्कथामृतरसं मनुजा भजन्ति
तेऽन्येष्टदाननिपुणाः प्रभवन्त्यवन्याम् ।
एवं प्रथा तु विशदा बत तं पिबन्ती-
रस्मान् प्रभो त्यजसि किं न च वञ्चनेयम् ॥ ११५ ॥

प्रहसितमिति : १०.३१.१०.

अदृष्टत्वद्रूपानपि सुकृतिनस्तान् मनुमहे
विभो त्वं यद्ध्याने भवसि हृदयानन्दजनकः ।
अलं त्वां पश्यन्त्योऽप्यकृतसुकृता एव वयमि-
त्यहो यद्ध्यानेऽपि प्रभवसि न यासां सुखकरः ॥ ११६ ॥

तत्ते प्रेमनिरीक्षणं प्रहसितं वक्त्राब्जमत्यादराद्
दृष्ट्वा सायमनन्त तस्य मननान्नेयो वियोगः सुखम् ।
आसीदेवमखेदकारि मननं तत्सम्प्रति श्रीपते
सङ्केतेप्सितवासनस्य मनसः क्षोभाय सञ्जायते ॥ ११७ ॥

सङ्केतं वितथं विधाय भवता यद्ध्यानसौख्यादपि
निश्यानीय वनं सुघोरमजनं प्रच्याविताः सम्प्रति ।
कस्ते मन्तुरकारि वैरमथवा सम्पाद्यमापादितं
यस्मादेवमिदं ब्रवीहि शपथस्त्वत्पूर्वजस्यास्ति ते ॥ ११८ ॥

स्वप्रेय-सुत-बान्धवाऽऽप्तजनसंव्याप्तालयेभ्यो जवा-
दानीता विजने वने निशि सखे यद् भ्रंशयित्वा त्वया ।
तस्यैतत् परिकल्पितं किमु फलं स्वापह्नुतिः श्रीपते
मन्त्वंशोऽपि तवात्र नास्ति कुतुकिन्मूर्खावतंसा वयम् ॥ ११९ ॥

अस्मद्दुःखनिदानमत्र हि भवानेवं भ्रमित्वा मुधा
मुग्धाभिर्बहुनिन्दितोऽसि वचनैरुच्चावचैरच्युत ।
तत् क्षन्तव्यमहो न चाणुरपि ते मन्तू रहः संविदो[1]
याः पूर्वा हृदयस्पृशः समभवंस्ताः क्षोभयन्त्येव नः ॥ १२० ॥

यत्तत्प्रेमनिरीक्षणं विहरणं यच्च स्मितं तान्यलं
वृत्तिभ्यः प्रवितीर्य चोरवदरं चित्ते प्रविश्य स्वयम् ।
मोहं मन्त्रबलात् प्रसार्य तरसा याभिर्विवेको हृत-
स्तत्किं वाच्यमितः परं त्वमसि रे तासां गुरुः संविदाम् ॥ १२१ ॥

वंशाद्यं पुरुषं विमोचयति यो दुःखात् स एवावनौ
धन्यो मान्यतमाग्रणीरिति जनास्तत्रायतन्तेऽखिलाः ।
त्वं सर्वेश्वरतां भजन्नपि दयावानप्यलं ज्ञानवान्
वंशादेर्मनसस्तु खेदमहरन् दत्से कथं प्रत्युत ॥ १२२ ॥

यत्संविद्भिरनर्थवाग्भिरफलं क्षोभं मनः प्रापितं
नास्माभिस्तु नरोत्तमोऽपि हि भवान्नेतुं क्षणं शक्यते ।
तद्वर्ण्यं कथमत्र किं वयममूर्खाः सुचार्व्यश्च ताः
किं वालिङ्गमवाच्यमीश यदिदं चित्तं भवान् पुंवरः ॥ १२३ ॥

साजात्यमाश्रित्य मनोऽस्मदीयं
श्रयत्यहो त्वत्स्मितवीक्षणादि ।
जीर्णास्तवेमाः शठ - वाक्प्रगल्भा-
रहःकथास्ताः किमु भेदयन्ति ॥ १२४ ॥

विरहदो भवान्नो तथा यथा रहसि संविदः क्षोभयन्ति नः ।
स्फुटमिदं वियोग्यात्मनां विधोरधिकतापदा चन्द्रिकास्तुतिः ॥ १२५ ॥

याः स्पृष्ट्वा सममावयोः सुहृदयं ते सौरते सङ्गमे
जाताः पूर्वमबाधयोगघटकाः प्रायो रहः संविदः ।
हित्वा त्वामनृतोक्तयो यदधुना नः क्षोभयन्तीह ता
युक्तं दीनजने भवत्यतिबलोऽशक्तोऽपि लोके न कः ॥१२६॥

---

१. संभाषणानि । २. चन्द्रजनकत्वात् मनसस्तथात्वम् ।

स्मितं प्रियनिरीक्षणं विहरणं तथाऽन्यान्यपि
विचित्रचरितानि ते शुभकराणि योगात्तव ।
इमा जगति तावका अपि रहःकृताः संविदः
कुतो हृदयभेदिकाः समभवन् कृतघ्ना इव ॥ १२७ ॥

एकाऽपीश सुखाय या[1] निगदिता वेदैर्विभो भूरिश-
स्ताः सम्प्रत्यखिला अपि प्रमिलिता भाग्येन योग्येन नः ।
क्षुद्रेऽप्यत्र सुखे विकुण्ठगतयः खेदप्रदाः प्रत्युत
तद्ब्रूमो वयमीश किं नु सुचिरं पश्यत्व मेवान्ततः ॥ १२८ ॥

सदा सन्निहितः श्रीशः स्वीयानामिति संविदः ।
अस्मन्मनः क्षोभयन्ति त्वदागमन-वाञ्छया ॥ १२९ ॥

चलसीति : १०.३१.११.

या गावः परितस्तवातिकुतुकाद्धावन्त्युपान्ते भृशं
लीलालोलतमे नताः करयुगेनाऽऽह्लादयस्यन्वहम् ।
आभिर्गोभिरकार्यवं[2] किमु विभो ब्रूह्यस्मदीयाभिरि-
त्येतद्यत्समुपागता बत तिरोधत्सेऽभिवीक्ष्यैव ताः ॥ १३० ॥

नलिनाधिकमञ्जु ते पदं भगवन् प्रत्यहमेव वीक्षितम् ।
सकुशं वनमद्य सञ्चरत्यनुचिन्त्यैति मनोऽतिकश्मलम्[3] ॥ १३१ ॥

अनेकनतिसंस्तवे विरचितेऽप्यलं ते पदे
सतां सुखपदे दया न समुदेति यत् सम्प्रति ।
तदद्य विदितं प्रभो निखिलमस्य बीजं जने
चिरं खलसमागमो भवति निर्दयत्वप्रसूः ॥ १३२ ॥

दीर्घभावमधिगम्य[4] शिलादौ
जाग्रति प्रभुपदे वनसीम्नि ।
दीनरक्षण - सुलक्षणशीलं
तद्गतं गतमिदं न वदामः ॥ १३३ ॥

---

१. संवित् । २. इन्द्रियैः वाग्भिर्वा । ३. मूर्च्छाम् । ४. दीर्घत्वं दीर्घसत्तां च ।

आवयोर्विरहयोग ईदृशो जातमेतदनुसङ्गतं द्वयम् ।
त्वत्पदाब्जमिह कण्टकावृतं मानसं कलिलताग्वितं च नः ॥ १३४ ॥

जातं पदं मम तृणाङ्कुरराजिरक्तं
जाता वने सुखजुषो नितरां भवत्यः ।
नैवं वदेश परिपश्य मनोऽपि यन्नो
जातं सखे तदतनूग्रशरानुरक्तम् ॥ १३५ ॥

विदर्भभूभृद्रमणीभुवा पुरः
समागमस्ते भवितैव सर्वदा ।
सदर्भभूभृद्रमणीभुवाऽधुना
प्राप्तं प्रसङ्गं समलङ्करोपि हि ॥ १३६ ॥

दृष्ट्वाऽरिं सतृणास्यमाक्षिपति न क्रुद्धोऽपि वीराग्रणीः,
शौरे शूरजनप्रचारसरणिस्त्वेवंविधा दृश्यते ।
पादाब्जं तव गोत्रमूलपुरुषद्वेषीति तत्सम्प्रति
प्राप्तं त्वां शरणं तृणाहितमुखं तन्मा पुनः खेदय ॥१३७॥

गावस्ताः समदन्ति कोमलतृणं याः स्युर्महत्यो वने
याः स्वल्पामदुपाङ्घ्रिमात्रगतयः संग्राह्यमेतत्कृते ।
इत्यालोच्य विभो त्वया यदि तृणं स्वीये पदे सञ्चितं
ताभ्यो दर्शय तर्हि मंक्षु सुखतो निःसारयिष्यन्ति तत् ॥१३८॥

त्वत्प्राणप्रियवल्लभाऽपि भगवन् पद्मा न यत्र स्थिति-
मक्षुण्णां लभते क्व तत्र गणनाऽस्माकं परासामपि ।
तच्छ्रीमत्पदमद्य ते तृणशलाकाभिः समासादितं
दिष्टे स्वेष्टतमे ससिष्टमकृतोद्योगं हि सिद्ध्यत्यलम् ॥१३९॥

सखे पदमखेदकं सुखकरं परेषामपि
प्रसङ्गवशतोऽभवत्तृणमुखं मुहुर्दीनवत् ।

---

१. कामबाणाः तृणविशेषश्च । २. विगतदर्भः देशविशेषश्च । ३. राजा पर्वतश्च । ४. रविमण्याः । ५. पर्वतसुन्दरभूम्या । ६. चन्द्रः ।

किमन्यसुखदुःखयोः कथनतो वयं तादृशो
न हेतुरपरो मनाक् कुटिलकालचेष्टाबलात् ॥१४०॥
प्रसङ्गवशतोऽभवत्तृणमुखं पदं ते वयं
श्रिताद्रिगहना मिथो बत पराभवाशङ्कया ।
तदद्य निजकौशलाद्धटकभावमाश्रित्य नः
पदस्य च कृपानिधे कुरु समञ्जसं सङ्गमम् ॥१४१॥
कलाधिपतिना[1] श्रितं पदमिदं यदूनां पते
समोदमिह दुर्मुखैः कठिनैःकण्टकै[2]रावृतम् ।
विभाव्य भजति प्रभो कलिलभावमस्मन्मनः
क्षमं हि पितृखेदकृत् सुतपदावमानोदयः ॥१४२॥
सुरेन्द्रमुकुटोल्लसद्-विविधहीरमृद्धङ्कुर-
प्रभाकिरणसङ्गमादपि यदा स रक्तान्तरम् ।
तदद्य पदमीश ते भवति नैव रक्तं तृणै-
रपीत्यजनि निर्णयो मृदुदृढत्वयोरार्थिकः ॥ १४३ ॥
पदं नलिनसुन्दरं सरसमानसे यन्मृदु-
स्थिति भ्रमति तद्वने सतृणजालमालाकुले ।
गतं यदपि नो मनाक् किमपि नाच्युतास्मन्मन-
स्तथापि खलु खिद्यतेऽनुचितमेतदित्याकुलम् ॥१४४॥
आमोद[3]गर्भमतिमञ्जुरसान्वितं ते
पादाब्जमस्ति जगदीश जगत्प्रसिद्धम् ।
तस्मादयं यदुवरा[4]लिगणोऽपि यात-
स्तं वर्जयस्यतनुरागमितीश चित्रम् ॥ १४५ ॥
तृणार्दितं ते पदमीश जातं
मनो मुधा खेदमुपैति यद्वा ।
परार्ति-दूरीकरणा-ऽसमर्थो
दयार्द्रधीः खेदभुगित्यगूढम् ॥ १४६ ॥

---

१. चन्द्रेण । २. क्षुद्रशत्रुभिः कण्टकैश्च । ३. गन्धो हर्षश्च । ४. भ्रमर-गणाः सखीगणाश्च ।

तृणावर्तोद्गतभ्रान्तिरनुभूता त्वया पुरा ।
भूयोऽपि सा तवास्तेति खिद्यतेऽस्मन्मनः प्रभो ॥१४७॥

क्षीराम्भोधिनिवास्यपि प्रतिदिनं त्वं यद्रसे सस्पृहो
यच्छ्रीमत्पदपद्मशोभमतुलो यस्मिन् रसोऽप्युज्ज्वलः ।
तन्नः कामदं मानसं स्मृतिजनुर्हंसं पदं ते नलौ-
क्रान्तं वीक्ष्य सखे मुहुः कलिलतां संप्राप्तमित्यद्भुतम् ॥१४८॥

काठिन्यं स्वकरे रमाऽपि परमा साशङ्कमाना सती
प्रादायामलकोमलोत्पलदलं संसेवते यच्छनैः ।
तच्छ्रीमत्पदमद्य ते भुवि कथं निम्नोन्नतायां भवे-
न्निक्षेपार्हमितीश नः प्रतिपदं चित्तं सचिन्तं भृशम् ॥१४९॥

क्षुद्रैरेभिरनाथवन्मम पदं क्षुण्णं तृणाग्रैरिति
मा खिद्या न जहीहि धैर्यमवशान्मा सत्रपो वा भव ।
यत्तद्दण्डनशक्तिशालि भगवन्नास्ते प्रदाात्मकं
चेतोऽस्माकमतस्तु तत्कलिलतां गच्छत्यरं स्वीकुरु ॥१५०॥

क्षुद्रैर्महानपि पराभवितामनेकै-
रेकोऽत्र नीयत इति श्रुतमद्य दृष्टम् ।
यच्छ्रीपदं लघुतृणैरपि वीरवर्य
ग्रस्तं मनः कथमिदं त्विति चिन्तनैर्नः ॥१५१॥

अस्मत्पदं यदि सखेदमभूत् तृणाग्रैः
कस्मात्तु तत्र भवती मनसो विमोहः ।
मैवं कदापि वद माधव यत्पदं ते-
नैतत्तत्रास्त्यपि तु नो मनसः पदं तत् ॥१५२॥

सम्राजपूजितमिदं पदनीरजं ते
यत्कण्टकाग्र्यचयसङ्ग्रह - मातनोति

१. दैत्यः, तृणानामावर्तश्च । २. सम्बुद्धिः । ३. सरोवरं मनश्च ।
४. तृणाम् । ५. दाता लवित्रं च । ६. क्षुद्रशत्रवः कण्टकाश्च ।

आश्चर्यमेतदतुलं प्रसमीक्ष्य कस्य
न स्यादहो कलिलता हृदि किं पुनर्नः ॥१५३॥
सूर्याहतं तव पदाम्बुजमेतदीश
यत्सर्वतोमुखगतीति तृणाग्रशालि ।
विष्ण्वाश्रितं सदपि सद्रवभावमेति
चित्रं मनोऽपि तमुपैत्यधुनाऽतिचित्रम् ॥१५४॥
अतीन्द्रियमसङ्ख्यनामयमचञ्चलं त्वत्पदं
वदन्ति विबुधास्तथैव शृणुमस्त्र विष्णो वयम् ।
पदे जगति तादृशेऽप्युदितमद्य तर्कासहं
शिलोपमतृणाङ्कुरार्दनमिति स्म भो विस्मयः ॥१५५॥
बुध-गुरु-कवि-सूर्याद्याश्रितं मङ्गलाढ्यं
वरनखरसुधांशुप्रोल्लसत्-प्रान्तभागम्
वरदपदमिदं ते यद्ग्रहाढ्यं विचित्र-
मभवदशनिभं तत् तार्णपूर्णप्रचारे ॥१५६॥
लेखाश्रितं पदमिदं तव यत्तृणाग्र-
प्रक्षेपदुःखभरवाहि भवेत् स्वतो हि ।
तर्ह्यच्युताखिल-सुपर्वसुखावहस्ते
जातोऽवतार इति वागनृता न किं स्यात् ॥१५७॥
निष्किञ्चना अपि वयं भुवि ते पदाब्जे
तार्णाग्रदुःखमपि जातमलं न सोढुम् ।
सर्वेश्वरः स्वजनरक्षणदीक्षितोऽस्मत्-
पीडां कथं विषहसे बत किं वदामः ॥१५८॥
कण्टकग्रस्तमपि ते यत्पदं नहि खिद्यते ।
तद्धेतुस्तव सान्निध्यमिति नस्तदिदं प्रभो ॥१५९॥

१. सूरिः सूर्यश्च । २. उदकं सर्वत्र गतिमच्च । ३. विष्णुः, चन्द्रश्च । ४. पलायनं रसः दया सच्छदश्च । ५. अतीक्ष्णाः नखाश्च । ६. आकाशः, चरणाश्च । ७. वज्राभं शनिभं नति च । ८. सामुद्रिकोक्ताः देवाश्च ।

दिनपरिक्षय इति : १०.३१.१२

महानरिरयं मनोजनिरिहेति तत्सङ्ग्रहः
कृतः कुत इति प्रभो वदसि चेत् स्मर स्वां कृतिम्।
यतो दिनपरिक्षये स्वयमलङ्कृतो गोगणै-
रुपेत्य मुखतोऽददाः सपदि कामदानं बलात्॥१६०॥

त्वन्नीलकुन्तलरजः - कलिताऽऽस्यवीक्षा-
प्रादुर्भवत् स्मरविलासि मनोऽस्मदीयम्।
तद्युक्तमेव भगवन् यदिहाबलानां
चेतः सुतोदयकृते हि रजश्चिनोति ॥१६१॥

यन्नो मनो हि मदनोदयशाल्यभूत्तत्
त्वास्तां विविच्य नहि पश्यसि किं निजास्यम्।
यत् सद्द्विजात्मकलितं रजसेति युक्तं
सर्वो जनोऽपि निजदोषनिरीक्षणेऽज्ञः ॥१६२॥

शैवालजालकलितं जलजं कलेशो-
लीलाविलासि विपुलामल - धूलिमालम्।
तत् सर्वदाल्यंतनुलोलुपतर्द्धिकृत्स्या-
देवेति नाद्भुतमिदं वदनाम्बुजे ते ॥१६३॥

अत्यल्पनील - चल कुन्तल - मौलिदेशं
क्षोणीपरिभ्रमण - लग्नपरागजालम्।
दृष्ट्वा मुखेन्दुमिह ते मनसोऽनुरागो
युक्तो हि यत्पितृमुदे स्वसुतास्यवीक्षा ॥१६४॥

दृष्ट्वा त्वदीयमुखचन्द्रमतन्द्रशोभ-
मस्मन्मनः स्मृतनिजात्मज - चन्द्ररूपम्।
उत्कण्ठितं भवति युक्तमिदं हि लोके
सादृश्यधीर्जनयति स्वगतार्थबुद्धिम् ॥१६५॥

मुखेन्दुरयमीश ते भवति सिद्धचन्द्राधिको
यतः स[3] तमसांशतो वृततनुस्तदा निष्प्रभः।

१. चन्द्रः। २. भ्रमराः सख्यश्च। ३. राहुणा।

अयं पुनरनेकशोऽप्यधिवृतोऽपि नीलालकै-
स्तमोभिरविलुतभस्तदिह नो मनो मोदते ॥१६६॥
कृष्णालकाव ल - समावृतमाननं स्वं
कृत्वा व्यदर्शि भवता यदहःसमाप्तौ।
जातेऽन्धकारसमये भविताऽखिलेष्ट-
मेतादृगर्थविदुपैति मनः प्रमोदम् ॥१६७॥
दिनावसाने मुखपङ्कजं तव
विलोक्य नीलालक - षट्पदाश्रितम्।
यदस्मदक्षि - भ्रमरद्वयं पपौ
तदीययोगेन समोदमन्तरम् ॥१६८॥
नीलालकालिमय - मञ्जुलकम्बलस्य
कृत्वाऽन्तरे निजमुखं गुरुलोकभीत्या।
स्पृष्ट्वा च नः स्तनयुगं नयनेन हस्ते-
नादर्श्यदेव मदनो न तदाऽर्पितः किम् ॥१६९॥
कृत्वा खेटकमण्डलं घनकचप्राचुर्यरूपं पुर-
स्तीक्ष्णाग्रेण निजाक्षिलक्षित - कटाक्षाख्यासिनेश त्वया।
वीर्यं स्वं बहु सन्दिदर्शयिषुणा दीनेऽपि सस्त्रीजने
रक्षेमाः स्मर किं मुधा स्वपिषि किं नोक्त्वा स उत्थापितः॥ १७०॥
सायं नीलविशालकेशमयसद्रोलम्बमौर्वीयुते
वक्रभ्रूधनुषि स्वनेत्रकमलं संयोज्य बाणं त्वया।
तद्रूपेण तदायुधानि दधता संलक्षितोऽसौ मुहुः
त्यक्त्वा शान्तिमनन्तकोपकलितो जातस्तदैव स्मरः ॥१७१॥
अपि भूरितरं रजोऽत्र[1] लीढं मुखमेतत्तव चित्रकार्यकारि।
परमेश यदत्र तद्दृशां नो हृदये सात्त्विक[2]भावमातनोति ॥१७२॥
ये तु त्वन्मुखपद्मसौष्ठववितरोधानोद्यतास्तान् कचान्
मूर्ध्नि त्वं मलिनान् बिभर्षि सुरतामोदप्रदा यादृच ते

१. रजोगुणो धूलिश्च। २. सत्त्वगुणप्रधानः स्तम्भः स्वेद इत्यादि-शृङ्गारोक्तश्च।

तासां नोऽसुलभं पदेक्षणमपि प्रायः प्रयासैरपि
तद्दृष्टं त्वयि राजनीतिरचना - चातुर्यमन्यादृशम् ॥१७३॥
अद्यैवेश निशोदये स्वमुखतो यत्कामदानं कृतं
तच्चेद्वक्ष्यधुना मया न विहितं तन्मौनमेवाश्रयः।
यस्मादत्र न साक्षिणः सुमतयो ये सन्ति तैः किं फलं
त्वत्तुल्याः कुटिला रजोनुगुणिताः केशास्त्वदीया हि ते ॥१७४॥

दाता सुखं प्रतिग्रहीतुमनोऽस्मदीयं
दानं च काम इति साधु परन्तु तस्य।
निष्कामलिङ्गवशतो न तयोः प्रसक्ति-
स्तन्नो दिशासु तत एव च ते कृतार्थे ॥१७५॥
यत्कामदानमिह तन्निशि तन्निशान्ते
निष्कामदानमिति शास्त्रविचक्षणेन।
द्व्यर्थं विभाव्य तदिदं निशि वा निशान्ते
दत्तं तु निर्वहणमस्य विचिन्तनीयम् ॥१७६॥
पुत्रार्पणं निशि विधाय यथा त्वयेश
दूरीकृतो हि मनसो लघु तद्वियोगः।
स्वीयाङ्घ्रि - दर्शन - समर्पणतस्तथैव
दूरीकुरुष्व विरहं स्वमहो दयाब्धे ॥१७७॥

प्रणतकामदमिति : १०. ३१. १३.

प्रणम्रजनकामदं जगति ते पदाम्भोजमि-
त्यलं वदतु सज्जनस्तदितरोऽथवा तादृशम्।
वयं न कथयामहे यदनुभूयतेऽद्यान्यथा
विहाय विनताः सतीस्तृणमुरीकरोत्युन्नतम् ॥१७८॥
सत्यं सन्नतमानसाः कृतधियः सत्यश्च मत्कामुकाः
सत्सर्वं तु परं विधिर्हि बलवानेतादृशो कर्मणे।

---

१. [पांसवो रजोगुणश्च। २. चिकुराः ब्रह्मकामशङ्कराश्च। ३. स्मरदानं-सकामदानं च। ४. प्रातःकाले रात्रिचरमभागे च। ५. अभिसन्धिरहितं स्मराभावविशिष्टं च। ६. कामस्य मनोजत्वात् मनःपुत्रत्वम्।

एवं धूर्तवचः प्रपञ्चरचना - जालैरलं यत्स्फुटं
त्वद्वागुक्तविधेयताऽनलसधीस्त्वामेष शुश्रूषते ॥१७९॥

गो[1]त्रालङ्करणमिदं पदं सदैव
शास्त्रेऽपि स्फुट - मनुभूतमन्वहं च।
तत्कार्यान्तरमपहाय नः स्तनाख्य-
गोत्रालङ्करणमिदं न किं करोषि ॥१८०॥

आपद्ध्येयमितीरितं तव पदं ध्यानं च तत्कीदृशं
चित्ते वा पदचिन्तनं यदथवा चित्तस्य तत्रार्पणम्।
गोविन्दोभयथाप्यनुष्ठितमहो नाद्यापि तद दृश्यते
साऽऽपद्वा कतमाऽऽशुचिन्तनफलेत्येतत्तु तत्त्वं वद ॥१८१॥

ये शंतमं तव पदं निगदन्ति सन्तो
जानन्तु चेतसि त एव तथाभिधार्थम्।
सम्प्रत्युपस्थित - वियोग - भयापनुत्यै
ह्या[2]द्याक्षरार्थमपि यत्र वयं न विद्मः ॥१८२॥

दत्त्वा स्वीयपदाब्जभूतिममलां गङ्गां त्वया शम्भवे
श्रीगोविन्द तदीयतापशमनं निःशेषतामापितम्।
श्रुत्वैतत्स्तनशंभवोऽपि विरहक्ष्वेडार्तिशान्त्यै परं
याचन्ते चरणामृतं यदि न तत्तन्मूलमेवार्पय ॥१८३॥

लोकह्रियाऽतिकृपणोऽपि नरोऽर्थितं द्रा-
गंशेन यच्छति न तद्विफलीकरोति।
प्रार्था[3]र्थिकार्थित - समर्पणलब्धकीर्ते-
स्तत्[4]पाददानमपि किं तव भारभूतम् ॥१८४॥

आगत्य पादं यदि नः स्तनेषु
संस्थापयस्यच्युत तेन भूयात्।
प्रथा पृथिव्यां प्रसृता यथार्था
पयोध[5]रा विष्णु[6]पदाश्रिता इति ॥१८५॥

---

१. पृथ्वी गोसमूहश्च। २. शं कल्याणम्। ३. अर्थिन एवार्थिकाः।
४. चरणः तुर्यांशश्च। ५. स्तना मेघाश्च। ६. विष्णचरणः आकाशश्च।

विरागिणि पदस्थितिर्भवति नान्तरे रागिणी-
त्यदो वद वयं परं मनुमहे सुतथ्यं ततः।
सुरागिणि हृदन्तरे सुरमुनेर्मनाङ् नास्ति मे
पदस्थितिरिति द्रुतं कुरु रमेश दिव्यं पुरा ॥१८६॥

सन्तो निरन्तरमनन्त - निजान्तरङ्गे
शान्ता वहन्ति सदुदन्त-सुखं पदं ते।
ज्ञात्वैवमेव भगवन्नधिकारशून्या
बाह्याङ्ग एव हि वयं तदलं वहामः ॥१८७॥

यद्यर्पयस्यद्य पदं स्तनेषु
स्यादेकमत्राच्युत भूरि चित्रम्।
पत्राश्रिता विष्णुपदालम्बा-
स्तनाद्वयस्तिष्ठति देवराजे ॥१८८॥

सच्चक्र - विस्फारित - मण्डलेषु
स्तनेषु नश्चेत् स्वपदं विधातुम्।
विचारवान् सन्नपि नाथ यत्त्वं
चिरायसे किं न विचित्रमेतत् ॥१८९॥

कुरु स्वकीयं पदमस्मदीये
स्तनेऽधुना कञ्चुकिनीति याच्ञा।
प्रभो नवीना न यदस्ति सिद्ध-
पदं शयालास्तव कञ्चुकिस्थम् ॥१९०॥

त्वत्प्रीतिदायिन इति स्तनकन्दुका भोः
संरक्षिताः स्वहृदयान्तरगूहनेन।
ज्ञात्वा प्रसङ्गमधुनाऽर्पयितुं प्रवृत्ता-
स्त्वं स्वं पदं च कुरु तत्र मनोज्ञरत्यै ॥१९१॥

१. वैराग्यवति। २. विषयाभिलाषिणि। ३. विषयिणि भैरवादि-रागवति च। ४. पत्ररचना पक्षाश्च। ५. पक्षिविशेषः समूहश्च। ६. विवेकः गरुडसञ्चारश्च। ७. शेषः।

करः करेणाकलितोऽच्युतेन
नावां पदेनेति विचिन्त्य तूर्णम्।
गजेन्द्रकुम्भौ स्तनजन्मभाजौ
पदार्पणात् तत्कुरु तौ कृतार्थौ ॥१९२॥

अखेदक - नखेन्दुभि - र्युतमनेक-सूर्याश्रितं
बुधैः कविभिरीडितं गुरुवरैः सदैवार्चितम्।
प्रभो श्रितशनैश्चरै - रज - मनन्त - सन्मङ्गलं
जगत्सु महदद्भुतं पदमिदं सकृद् दर्शय ॥१९३॥

त्रिलोकजनपावनी भवति जाह्नवी यद्रसः
शिरोद्धृतिलसत्प्रभो जगति यत्परागः प्रभो।
यदीयलवसङ्गमो जडगते सुराज्यप्रदः
पदं तदखिलेष्टदं स्तनपदे सकृत् स्थापय ॥१९४॥

इदं तव पदं यदम्बुजमलं ततो नान्तरो-
दकं विकसितं भवेदिति समाचरैवं लघु।
पयोधरभुवि प्रभो सुरसभावभाजि प्रति-
ष्ठितं कुरु ततो द्वयोरपि भवेत्प्रसादोदयः ॥१९५॥

दोषोल्लासिगतेर्निशाचरपतेर्यत्स्वं पदं दुर्लभं
योगीन्द्रैः सुलभीकृतं यदुपते त्वत्पादभक्तिस्पृशाम्।
सम्प्रत्यच्युत यत्करोष्यसुलभं गोपाङ्गनानामिदं
दृष्ट्वा वक्ष्यति किं भवत्पदरतो लोकोऽपि विज्ञो न तत् ॥१९६॥

पदाब्जमत्यन्तमृदु त्वदीय-
मत्यन्तकाठिन्यजुषौ स्तनौ नः।
तद्योजया - ऽन्योन्य - मनन्यदृष्ट्या
येनाशु भूयाद् द्वयमेकरूपम् ॥१९७॥

---

१. शुण्डादण्डः। २. सूरिभिः सूर्यैश्चाश्रितम्। ३. मन्दगतिसमूहः सूर्यपुत्रसमूहश्च। ४. स्तनभूमौ पयोधराया भूस्तस्यां च। ५. शृङ्गारः उदकं च। ६. दोषायां रात्र्यां दोषैश्च उल्लासिनी गतिर्यस्य। ७. चौराः ग्रहनक्षत्राणि च।

अस्माकमस्तु कथमप्यसुखं निशायां
नैतद् विचिन्त्य भगवन् भवदर्थनेयम् ।
किन्तूपकारसरणीमवलोक्य वच्मो
दीनार्तिहन्निति वचः कुरु सत्यमार्षम् ॥१९८॥
यदि प्रणतकामदं यदि च पद्मजाद्यर्चितं
पदं धरणिमण्डनं विपदि चिन्तनीयं यदि ।
जगत्सुभगशङ्करं यदि च सर्वमेतद्ध्रुवं
हृदामयहृतिर्न ते तदिह दुःशका नः प्रभो ॥१९९॥

सुरतवर्धनमिति : १०. ३१. १४.

नानाकुन्दकदम्बवृन्द-विलसत्कन्दे च वृन्दावने
नित्यानन्दजुषा त्वयेश सुलताद्युत्पादिका चातुरी ।
अभ्यस्ता विविधा भवेद्यदिह नस्तां दर्शयात्युज्ज्वलां
तत्पात्राणि वयं यतः सुगणिकास्तल्लतैकप्रियाः ॥२००॥
श्रीकान्तालोकि वृन्दावनमखिलमहो मञ्जुमाकन्दवृन्दं
ज्ञाता नाम्नाऽर्थतश्चाप्यखिलतरुवरास्तत्र तत्र स्थिता ये ।
यः सीतानन्दकर्ता सुरतरुचिर भो माधवज्ञः पदाना-
मस्माकं दर्शयैकं त्वमिह मृदुलतं तं त्वशोकप्रकारम् ॥२०१॥
हृद्ध्माबुदितः स्तनाद्रिनिकटे कामाग्निरुत्कीलक-
स्तच्छान्तिर्न धरामृतैः प्रभवति प्राणेश सिक्तैरपि ।
तत्तच्छान्तिकृतेऽधरामृतमहो याचामहे तन्न चे-
न्माऽऽस्तां तं स्वधरामृतेन तु विभो तूर्णं कुरुष्वाप्लुतम् ॥२०२॥
किं तेन तापदेन यदिदं कृष्णाधरामृतं वहति ।
तद्दिश तदेव मधुरं यत्त्वं कृष्णाधरामृतं वहसि ॥२०३॥
स्वस्थितं यदधरामृतं त्वया वंशजाय भगवन्समर्पितम् ।
योग्यमेव तदिदं तु चित्रकृद् दुर्लभं भृशमरम्भचेतसाम् ॥२०४॥

१. लताविशेषाः गणिकाश्च। २. लता रतं च। ३. वृक्षविशेषः नास्तिशोक-प्रकारो यस्मात्तं स्वात्मानम्। ४. स्वर्गामृतम्। ५. यमुना। ६. संबुद्धिः। ७. कदली।

मृद्वीकाम्रसकृत्फलोत्तम - फलेष्वद्धाऽनुभूतेष्वपि
सन्ध्याते त्वधरामृते रतिकरे नो जायते तत्स्मृतिः ।
सिद्धे त्वेवमशङ्कमेव भगवंस्तत्किं मुधा वञ्चय-
स्यास्तां मय्यधरामृतं किमु ततस्त्वन्यो रसो भुज्यताम् ॥२०५॥

त्यक्त्वोत्तमं मदधरं किमु याचतेदं
निःसारणं मदधरं त्विति वञ्चयान्यान् ।
अस्माकमाशयमिमं शृणु पूर्णकर्ण
यत्रामृतं तदधराभिधमस्मदर्थ्यम् ॥२०६॥

पातव्योऽपि रसो यदन्यपुरुषोच्छिष्टोऽभिजातास्तदा
वीराः सच्चरितोदयव्यसनिनस्तं नाद्रियन्ते मनाक् ।
तत्त्वं वेणुमुखाश्रिताधररसं देहीश नस्तावकं
लोके स्वानुपयोगि वस्तु वितरन्त्यात्मीय - दासीजने ॥२०७॥

श्रुत्वाऽनेकविविक्तरागमधुरं वेणोः स्वरं तत्क्षणे
तन्निक्षिप्तमना जनो भवति यत्तत्साधु नैवं तु नः ।
लिप्सूनामधरामृतं तव विभो स्पष्टं हि भूपाङ्गने
सङ्गीतादि न याचकं वशयति स्वीयार्थकष्टान्तरम् ॥२०८॥

स्त्रीपुंसाधरसंस्थितं यदमृतं निक्षेपरूपं तयो-
रन्योन्यं तत एव निर्भयतया ग्राह्यं शुभाभ्यामपि ।
एवं सत्यधरामृतं त्वयि तदस्माकं प्रसह्य प्रभो
कस्माद्वेणुरसौ धयत्यनुपदं नेयः क्व वाऽयं नयः ॥२०९॥

कृपाघन घनद्युते त्रिभुवने तवानुग्रहः
सतोऽस्ति सुलभोऽसतोऽसुलभ इत्ययं डिण्डिमः ।
विभाति वितथार्थको यदिह नः सतीनां सुदु-
र्लभः ससुलभः सरन्ध्रवपुषो मुरल्या अभूत् ॥२१०॥

आजन्म या मधुर मुख्यरसानुभावि-
न्याजन्म या च विरसा कविवर्जिता च ।

---

१. यत् मत्सकाशाद् अधरम् ओष्ठं निकृष्टं च । २. छिद्रं दूषणं च । ३. भ्रमरो मद्यपश्च । ४. जलपक्षिभिः कविभिश्च वर्जिता ।

तस्यां स्वमुखधररसदानविधिर्मुरल्या-
मस्मासु चैवमिति चित्रतरा रुचिस्ते ॥२११॥

सदीड्यगोपवंशजस्त्वमीश गोपसत्तमा-
त्मजावयं तदावयोरनिन्द्य एव सङ्गमः ।
विहाय चैवमीदृशं कुजन्मवंशजातया
तया स्त्रिया कियान् प्रियार्जितस्त्वया सुखोच्चयः ॥२१२॥

परनराधरसौधरसं धयन्त्यपि न जात्वसि पल्लवसंश्रिता ।
तदिदमद्भुतमेतदलौकिकं मुरलि जारसुखं ससतीव्रतम् ॥२१३॥

वेणो पुमांस्त्वमसि तत्किमु वीरगर्ह्या
पुंवक्त्रचुम्बनविधौ विहिता प्रवृत्तिः ।
तच्चेत् सुखं मनसि कामयसे तदेनं
हित्वैहि नस्तदतुलं वयमर्पयामः ॥२१४॥

अङ्गीकृत्यास्य कृत्यं त्वमिह मुरलिके नष्टभीर्भ्रष्टलज्जा-
ऽनैषीर्नस्तत्समीपं सपदि गुरुजनैरप्यलं रक्ष्यमाणाः ।
तद्वचः सत्यमेकं स्वहितमिति शृणु त्यज्यतामेष पन्था
यद्येतज्ज्ञातमार्तैर्बहु किमु धमनीरूपतामेष्यसि त्वम् ॥२१५॥

कृष्णेनाङ्गीकृताऽहं तदितरजनतः क्वैव मे भीतिरेवं
निश्चित्यान्तः कदापि त्वमिह मुरलिके नैव गर्वं वहस्व ।
पश्य त्वं स्पष्टमेतद् द्वयमपि च पुरा मन्यमानास्तथैव
धूर्तेनात्मैकसौख्ये बत निहितदृशा प्रापिताः कामवस्थाम् ॥२१६॥

न भोगसुखसाधने न खलु पादसंवाहने
न चार्जवदिधावपि क्वचिदिहोपयोगोऽजनि ।
तया तु रमसे सदा व्यरचि भोग्यमस्मास्विदं
तथाचरितभाक्स्वपीत्युचितमेतदीशे पदे ॥२१७॥

भगवन्नधरामृतैकदानेऽप्यतिवेलं कृपणायते मनस्ते ।
मुनयः परमामृतं लभन्ते कथमीश प्रददासि वा न विद्मः ॥२१८॥

---

१. गोपश्रेष्ठकन्याः । २. कोः पृथिव्याः जन्म यस्य तस्माद् वेणोर्जातया, कुत्सितं जन्म यस्मिंस्तद्वंशे जातया च । ३. किसलयो जारश्च ।

अधुना परिगृह्य वोऽधरामृतमग्रे परमामृतं ददे।
यदि तद्वचनेन च क्षमस्तदलं नः परिगृह्यतामिदम् ॥२१९॥

कण्ठ - कम्बु - कुच - चक्रसमूहा
केशपाशवलयान्यपि सन्ति
वीरशब्द इह चेत्त्वयि सत्य-
स्तेषु मा भज पराङ्मुखभावम् ॥२२०॥

कामं विद्रुमपल्लवस्त्वदधरः स्वद्रोः परं पल्लवः
पादौ दृक् च निजाश्रितार्पित - सुखस्वानन्दसंपल्लवाः[1]।
एवं त्वं सुलताढ्यपल्लवमयो[2] यस्मान्न तस्मान्मना-
गस्मास्वीश विपल्लवत्वमधुना[3] युक्तं लतात्मस्विदम्[4] ॥२२१॥

सुरतोत्सवदायि सर्वशोकापहमीड्यं स्वररागपूर्णहृद्भिः।
भृशमन्यरसस्मयापहारि स्फुटमित्यर्थयतेऽधरामृतं नः ॥२२२॥

भवान् दानशूरो वयं चार्थिशूरा
वरं दानमेतल्लसत्स्वामृतं च।
सदर्हः प्रसङ्गोऽपि सम्प्रत्यवास-
स्ततस्तद्दिश स्यात् त्रयाणां प्रतिष्ठा ॥२२३॥

सुरतोऽभ्यर्थना नैव वैफल्यं यात्वितीर्ष्यया।
जडराशिरपि प्रादादमृतं त्वं तु चित्सुखः ॥२२४॥

अटतीति : १. २१. १५.

दिवा भजस्व काननं निशि स्वकाननं सखे
प्रदर्शयेति दर्शिते मुहुर्मुहुर्मनोऽर्थिते।
तथास्त्वितीरितं वचो विधाय चान्यथा स्वगो-
पनाद्वियोगतोऽधुना प्रदर्शितं विकाननम् ॥२२५॥

---

१. सम्यक् पल्लवाः संपदां लवाश्च। २. किसलयमयः जारात्मा च। ३. विगतपल्लवत्वं विपदां लवो यासां तद्भावश्च। ४. वल्लीरूपासु रते आत्मा चित्तं यासां तासु च। ५. देवसमूहः सुरतं च। ६. समुद्रो जडसमूहश्च। ७. स्वमुखम्। ८. स्वान्तर्धानं स्वशब्दगोपनं च। ९. विरहो विशब्दयोगश्च।

यदा त्वमह्नि कानने भ्रमस्यदभ्रसम्भ्रमा-
दतर्क्य - कर्कशाऽर्कतप्त - शर्करापरिश्रिते
अखर्वघर्मघर्मता तदाऽऽस सर्वतोमुखे
सखेऽधुना तु तद्वृथा चरस्यनाथवत् कुतः ॥२२६॥

नित्याह्निकं यदटवीभ्रमण ममातः
का तत्र भीः श्रमविधाविति चिन्तनेन।
मा साहसं कुरु निशि भ्रमणेऽधुनैकः
क्लेशोऽपि न श्रमकरः सह मित्रवर्गैः ॥२२७॥

अविद्यानिशायां भवारण्यभागे
जना मां विहाय भ्रमन्तीति गर्ह्याः।
वदन्नेवमङ्गीकरोषि प्रकारं
तमेवेति चित्रं न किं के चरित्रम् ॥२२८॥

कान्तारतान्तविहतिर्मम चाह्नि सिद्धा
भव्या भविष्यति निशास्वपि युष्मदीच्छा।
एवं प्रतारकवचांसि वितीर्य कर्णा-
भ्यर्णो कथं चरसि पूर्ववदित्यपूर्वम् ॥२२९॥

कान्तारत - श्रमज - खेदमिहाऽपनेतुं
शास्त्रे ततो वनविहारविधिर्निरुक्तः।
त्वं पूर्वमेव चरसीति विचित्रमर्वाग्-
भुक्तेरगस्त्यमुनि - चिन्तनमप्रसिद्धम् ॥२३०॥

कान्तारतोत्सव - मिहेश विहाय मोहात्
कान्तारतोऽधिकसुखाभिरुचिः कथं ते।
शस्ताम्बरं मिलितमप्यपहाय शुष्कां
कस्तारवीं त्वचमनुस्पृहयेन् मनीषी ॥२३१॥

अयं त्रुटिमितो भवत्यलमयं युगात्मेति या
व्यवस्थितिविकल्पना जगति भाति मिथ्यार्थिका।

---

१. कान्तारे तान्ता कान्तेति च्छेदश्च। २. अगस्त्यं जलं च।

न चेत् कथमिहानिरीक्षित - भवन्मुखानामहो
लवोऽपि युगरूपतां भजति नाम नश्चेतसि ॥२३२॥

घस्रेऽजस्रनिषिध्यमानसुरतेऽप्यासीद् वियोगेन मे
कालः स्वल्पतमोऽपि कल्पसदृशस्तासां मदेकात्मनाम् ।
निश्यस्यां रतिरङ्गभाजि तु भवेन्मामन्तरा तत्स्थितिः
कीदृग्वा समयातिलङ्घनमिदं नेषत्कथं चिन्त्यते ॥२३३॥

सूक्ष्मं च पक्ष्म कमलेक्षण ते मुखाब्ज-
वीक्षाविरोधकृदतोऽजनि दुःसहं नः ।
भूयस्त्वया - ऽनुभवतेदृशमर्थजात-
मद्रिद्रुमान्तरमहो क्रियते कथं वा ॥२३४॥

स्रष्टा स यद्यपि तथापि विभाति भूयः
सम्भ्रान्तधीर्भुवि समञ्जसयोजनायाम् ।
पक्ष्माक्षिण ते मुखनिरीक्षणलालसेऽस्मिन्
निष्पक्ष्म नेत्रमकरोद्दिवि देवतानाम् ॥२३५॥

चतुराननोऽपि चतुरागमवेत्ता-
प्यखिलादिमोऽध्यवनि सत्यसमेतः ।
वितथाक्षिपक्ष्मकरणादुपयातां
जडतां निजां न यदपश्यदिहाहो ॥२३६॥

निर्माय पक्ष्मविहितं व्यवधानमक्षिण
धात्रा त्वदास्यकमलस्य निरीक्षणेऽद्य ।
गिर्यादिकल्पितमिदं व्यवधानकृत्ते
युक्तं सुतादधिकता पितरीति सिद्धम् ॥२३७॥

सूक्ष्मं हि पक्ष्म गिरिवृक्षसदृक्षमक्षिण
संलक्ष्यते क्षणविरोधिसुखेक्षणे ते ।
यत्साम्प्रतं तु गिरयस्तरवश्च मूर्ता-
स्तद्वाच्यमच्युत किमुच्चतरत्वमेषाम् ॥२३८॥

अपश्यन्त्यो घस्रे मुखमपि कलां कल्पकलनां
प्रपश्यन्त्यः सायं सुखमनुभवामो निरुपमम्।
विभो भूयोऽप्यसमद्विचरितमिदं सत्परिचितं
मनागस्मिन्काले नहि समुचिता गुप्तवसतिः ॥२३९॥

पशुपालनानलसधीर्वनं प्रभाते प्रयासि पुनरेषि।
हर्तुं व्रजजनविरहं सायमयं ते क्रमोऽद्य कुत्र गतः ॥२४०॥
सर्वदा सदयचेतसो निजेष्वच्युतादयवदद्य वर्तने।
कोऽत्र हेतुरथवास्ति मस्तकाभ्यर्हितः कुटिलकुन्तलाश्रयः ॥२४१॥
कौटिल्यं ते कचेष्वीश मुखे श्रीरनपायिनी।
तत्र त्वन्मनसः केन साकं स्नेहोऽस्ति तद्वद ॥२४२॥
नाना[2]गम्रोल्लसितमेतदतीवरम्य--
मस्माभिरीश सह पश्य च का[3]ननं त्वम्।
स्यात्ते सुखं यदधिकं निगदन्ति सुज्ञाः
पुत्रास्यदर्शनसुखं रमणीयुतस्य ॥२४३॥

पतिसुतान्वयेति : १०. ३१. १६.

इमे पतिसुतादयश्च्युतपदास्त्वमेवाच्युत--
पदोऽसि भुवि सर्वदेत्यनुविभाव्य याता वयम्।
तदद्य कुरु रक्षणं निजपदस्य तन्नस्ततो
भवेदुभयमेकतो यदि तदाशु कुर्यात् कृती ॥२४४॥
नाश्रावि श्वशुरानुशासनवचो नालोचि शालीनता
नैवाऽलक्षि ननान्दुरस्फुटमहो नासेवि भर्तुः पदम्।
एकं त्वत्पदपद्मसङ्गमसुखं[4] ध्यात्वाऽऽगतानां वने
कर्तुं नोचितमच्युतस्य तव नः श्रीशो भयप्रच्युतिम् ॥२४५॥
तीर्त्वा तूर्णमपन्नपामपि नदीं शीलाद्रिमुल्लङ्घ्य चा--
तिक्रम्यात्मगृहादटवीं सुविकटां गुर्वादितर्वाश्रिताम्।

---

१. सूक्ष्मकालविशेषम्। २. वृक्षा वेदाश्च। ३. अरण्यं ब्रह्माननं च।
४. त्वत्पदानुसरणम्।

प्राप्ता वीतभयं पदं तव वयं श्रान्ता निशान्तावधि
तत्किं पश्यसि रक्षमंक्षु सदयां संलक्ष्य दीक्षां निजाम् ॥२४६॥

सूर्याद्यर्चितमार्यसेवितमिदं कार्यं समर्यादमि--
त्यायाताःप्रभुवर्य धैर्यमतुलं धृत्वा निशायामपि।
तत्पर्याप्तमहो न कार्यमिति चेत्कार्यं किमस्मात्परं
धार्यं वा स्वमतानुसार्यभिनवं चेद् ब्रूहि कुर्मस्तराम् ॥२४७॥

ये प्राप्ता विधितो विहाय भुवि तान् प्राप्तास्त्वदीयान्तिकं
जातोऽसावविधिः परन्तु न ततो दोषऽस्ति योषात्वतः।
प्राप्तानां शरणं स्मरार्दितहृदां स्त्रीणां निशि त्यागत--
स्त्वं सुज्ञोऽप्यविधिं श्रितोऽसि भृशमित्यालोकयात्यद्भुतम् ॥२४८॥

आजन्मार्जितकीर्तिरत्नममलं स्याद्येन दूष्यं जने--
तत्कर्माशु बुधेन हेयमिति सद्वृत्तंदमित्यालपन्।
ब्रह्मेन्द्राद्यमराहित - स्वविमलस्तोत्र - प्रशंसापहं
कस्मैतत्तु कथं विशङ्कमधुना त्वं स्वीकरोषि स्वतः ॥२४९॥

न यावत्सान्निध्यं भजति वनिता तावदतुलं
मृषा वीर्यं ब्रूते रतिमतिमतीव स्फुटयति।
प्रपन्ने तद्योगे त्वमिव निजगुप्तौ कृतमति-
स्तदग्रे कर्तव्यं किमु चतुरयाऽपि प्रमदया ॥२५०॥

स्मृत्यालापविलोकनाभिनयसद्भावानुकूल्यादिषु
स्त्रीणां कामिमनोहृतावलमिहैकं किं पुनस्तेऽखिलाः।
तत्सर्वानुभवेऽपि यस्य हृदि नोत्कण्ठोदयस्तस्य ते
वर्ण्यं श्रीश किमन्यदस्ति निगमो ब्रह्मेति वक्ति स्फुटम् ॥२५१॥

मन्मानसे बहु यदस्ति हि तद्वचस्यः
श्रोष्यन्ति चेत् सुभगमेव विधिं वदासि।
वामाशयं हृदि निधाय निशान्त एवं
नाभाषि किं शठ वचस्यपि न प्रमा ते ॥२५२॥

सदयमनुगृहाण श्रीश मा वा निशेयं
कथमपि हि गमिष्यत्येव किं त्वेकमस्मिन्।

निजशरणगतानां वल्लवीनामुपेक्षा
व्यरचि भगवतैवं दुर्यशो नार्जयैतत् ॥ २५३ ॥

अनाथजनपीडनं भुवि न पण्डितैः सर्वथा
विधेय - मघमुद्धवत्य - परिहार्य - मस्माद्यतः ।
सहेतुकमिदं वचस्तव पुरस्तु दोषाकरा-
दिमान्वयजुषो मृषा किल स वंश्यधर्मोऽस्ति यत् ॥२५४॥

अग्राह्यर्चनसौख्यमब्जसदनात् सेवासुखं श्रीकराद्
गोगोपालसमागमाद् भ्रमिसुखं येनेश तत्ते पदम् ।
प्रायो भात्यतिनूतनमस्मदुदितं निन्दासुखं वाञ्छती-
त्याजन्मानुभूतवस्तुनि जनेच्छा कीदृशेऽपि स्फुटा ॥२५५॥

कात्यायनी-व्रतविधिर्यदकारि साङ्ग-
स्तत्स्यात् पुरोऽस्य फलमीडयमिति त्वयोक्तम् ।
दृष्टं फलं तदिदमद्य वयं हि धन्या
धन्यो भवानपि विभोऽस्ति भविष्यवेत्ता ॥२५६॥

यद्व्यासैरित्थमपि त्वमसि सुगतिविस्तत्र वेणोर्निजस्या-
ऽस्माकं वाऽप्यह्वये सा बत निजविहिता ज्ञायते चेन्न चित्रम् ।
बुद्धिश्चिरं च यस्यामनवगतपदे दीव्यतस्तां गतिं चे-
दस्माकं वेत्सि तन्नः कथय निरुपमां त्वद्धियं वर्णयामः ॥२५७॥

जाग्रच्छक्तिभिरुत्कटश्रुतिगतैः स्वोद्गीतमन्त्रैरलं
संमोह्यालयतो निजान्निशि वनं दुर्ग्राह्यमानीय नः ।
यत्त्यागोऽथ च मन्त्रसंवरणमप्येतत्त्वयाऽकार्यहो
तत्का विप्रतिपत्तिरस्ति भवतः सच्छद्मता-निर्णये ॥२५८॥

चेतोवृत्तिजुषः स्त्रियो भुवि न चेत् स्युर्यस्य तेनाऽनिशं
शिक्ष्याः स्वेप्सितवर्त्मना नहि मनाक् त्याज्याः प्रभो कर्हिचित् ।
शिक्षायां क्रमतो भजन्ति सुपथं त्यागे तु पूर्वस्थितिं
तस्माच्छिक्षय सत्पथानुसरणे न त्यागमेवं कुरु ॥२५९॥

यत्सम्प्रत्युपपादितं पतिसुताद्याः[1] सन्ति तस्माद् गलत्-
तारुण्याः खलु यूयमत्र भवतीसङ्गेन किं स्यात्सुखम्।
मैवं कल्पय चिन्तयास्मदुदितं दृष्टाखिलार्थोऽत्रव-
द्वित्वा तत्पुरुषं[2] निजात्मनिहितं मा द्वन्द्वबुद्धिर्भव ॥२६०॥

विरहवितरणेन भीतिदायी भवसि परन्तु वयं न वै विभीमः।
असकृदभिहिता पुरैव शुष्कदरकरता वहुधा विलोकिता च ॥२६१॥

इमाः स्त्रियः किं मम कुर्युरन्तरित्यश्रद्धया भो कुरु नावहेलनम्।
पश्य त्वमस्मत्कुलमुख्यया कृतः कथं भुवीत्यच्युतमाययैकया ॥२६२॥

तापो वियोगजनितोऽलमलम्भि विप्रै[3]-
र्न [4]स्त्रीभिरेवमकथि व्रजगोपबालैः।
सोऽस्मासु सम्प्रति कथं वत दीयते ते
विप्रा वयं मखजुषो नहि किन्तु योषाः ॥२६३॥

नागस्ते यत्पुरैवोक्तं मम यूयमसु[5]प्रियाः।
प्राणप्रिया इति वयं मुधा गर्वेण वञ्चिताः ॥२६४॥

नैतत्पूर्वमश्रृण्म वीरचरितं क्वापीदृशं वञ्चना-
चारं येन मृदूक्तिभाविकधियो योषा वयं वञ्चिताः।
अग्रे चेदपि निग्रहस्तव मतः कार्यो न चानुग्रह-
स्तर्ह्यास्तां भुवने भवाम ननु ते दृष्टान्तभूताः कृतौ ॥२६५॥

वक्रं ते हृदयं सदैव कठिनं युष्माकमेवेति यो
वादोऽवर्तत चावयोरलमसौ जातोऽद्य तन्निर्णयः।
याचामः सरलान्तरा वयममूस्तत्कर्कशोन्मर्दने
श्रीवत्सं भवता तु भूषणपदे वक्रं सदा धार्यते ॥२६६॥

यथाऽस्माभिर्हृत्स्थं निजकठिनभावं स्तनमिषाद्
बहिर्निःसार्येदं व्यरचि नवनीतादपि मृदु।

---

१. पतयश्च सुताद्याश्चेति, पतीनां सुताद्याश्च। २. स चासौ पुरुषस्तम्, समासविशेषं च। ३. यज्ञस्थविप्रैः। ४. यज्ञपत्नीभिः। ५. सुप्रियाः, नेति च।

मिषाच्छ्रीवत्सस्य व्यरचि सरलं ह्यकुटिलतां
बहिः कृत्वा तद्धृदि तदधुना किं त्यजसि नः ॥२६७॥

क्रूरेभ्य एकलघुरप्यनिशं रिपुभ्यः
स्त्रैणीगणं जगति रक्षति कृष्णसारः[1]।
त्वं तादृशोऽपि च महान् हरिणीक्षणानां
त्राणं विहाय विपिने भ्रमसीति चित्रम् ॥२६८॥

रहसि संविदमिति : १०. ३१. १७.

ऐकान्तिकार्थकवचः श्रुति[2]साक्षिजात-
प्रेमश्रिया[3] गवि हिताचरितानुकूलम्।
अस्मन्मनः स्वसदृशं तव धाम वाञ्छ-
त्येतत्तु साधु तदनुभ्रमतीति चित्रम् ॥ २६९ ॥

कान्तं नितान्तमकुतोभयकान्ति शान्तं
यद्धाम सन्ततमनन्त वदन्ति सन्तः।
प्रेयस्तदेतदधुना त्वबलाजनेभ्यो
बिभ्यत् कथं द्रवति भीरुवदद्रिकुञ्जे ॥ २७० ॥

पुंभ्यो बिभेति युवतिर्युवतीजनेभ्यो
न क्वापि पुंवर इतीह जनप्रसिद्धम्।
त्वय्यद्भुतं त्विदमलोकि बलावलिप्ते-
भ्यस्मद्भिया भ्रमसि सम्भ्रमतो ह्यरण्ये ॥ २७१ ॥

देवापगा यदुदिता गरलोपताप-
शान्तिं विधाय शिवमूर्ध्नि वसत्यजस्रम्।
तत्ते पदं विरहतापभयेन लीनं
शक्तौ न हेतुरिह कारणकार्यभावः ॥ २७२ ॥

यः श्रीमत्पदमागतः सुशरणं सोऽनन्यजन्मा[4] स्वयं
शान्तः सङ्गमिनो जनानपि करोत्यारादतापानिति।

---

१. मृगः कृष्णेति च्छेदः, सारो बलवान्। २. श्रवणं वेदश्च। ३. श्रीति श्रियेति च च्छेदः, गवीति च्छेदश्च। ४. मुक्तः।

वागेषा तु मृषैव भाति भगवन् यत्त्वत्पदासक्तिर-
प्युत्तापं मदनस्तनोति सहितास्वस्मास्वनन्योद्भवः ॥ २७३ ॥
सकृदपि पदकञ्जं चिन्तयन्त्यन्तरे ये
तनुरपि नहि तापः शिष्यते तेषु यत्ते ।
प्रतिदिनमखिलाङ्गं वीक्षमाणास्त्वकस्मात्
तदयमतनुतापो वर्धतेऽस्मासु कस्मात् ॥ २७४ ॥
यद्धास मोहतिमिरापहमीरितं स-
द्भेदैस्तदद्य तु तदुद्भवकारि भूरि ।
आस्तां प्रदर्शय मुखेन्दुमपारकान्तिं
स्यात्तेन चित्तमपमोहमितात्मजेक्षम्[1] ॥ २७५ ॥
सुमनोऽभिलषितपूरणकृतेऽवतारस्तवैष भुवि सिद्धः ।
तत्कुरु सदय कृतार्थं मनोऽपि नस्त्वन्मुखेन्दुललिताशम् ॥ २७६ ॥
श्रीश्चेत् प्रियतमायुक्तं सा न्यस्ता वक्षसि त्वया ।
दास्यो वयं तु हृष्यामस्त्वत्पादाब्जेक्षणादपि ॥ २७७ ॥
सुधा[4]सहितमालोक्य धाम त्वन्मुखचन्द्रगम् ।
मनः स्पृहयते युक्तं सुमनःस्पृहमेव तत् ॥ २७८ ॥
व्रजवनौकसामिति : १०. ३१. १८.
निशा[6]धिपत्यन्वयभूषितो भवान्
निशोज्ज्वलालङ्कृतयस्तथा वयम् ।
प्रिय प्रियाश्चेद्वलस्वसे मिथो
महत्सुखं पूर्वजयोर्भविष्यति ॥ २७९ ॥
यदि पुण्यजनेषु[7] नोऽस्ति संख्या न कुतस्तर्हि ददासि दर्शनं नः ।
यदि नैव तदा तु सिद्धमेव सदयास्मास्वन घत्वमुतिप्रियत्वम् ॥२८०॥
न योषाणामासामनधिकृतिभाजामधिकृति-
र्मदीयस्यानन्दानुभववति सार्वाशिकसुखे ।

१. क मः महांश्च । २. इता प्राप्ता आत्मजेक्षा यस्य । ३. देवाः शोभनमनांसि च । ४. शोभनगृहं सुधया महितं च । ५. चन्द्रः । ६. रात्रिः, हरिद्रा च । ७. पुण्याश्च ते जनाश्च, राक्षसाश्च तेषु ।

अयं चेदीशास्ते तव हृदयभावोऽस्तु तदिदं
कृतार्थास्तत्पा[1]दादपि सदय तं दर्शय सखे ॥ २८१ ॥

तृणाघ-बक-पूतना-विषजलादिवृष्ट्यादिका-
नशेषभयदायिनो लघु निवार्य विघ्नोत्करान् ।
निजात्मज इवाञ्जसा सकलमावितं गोकुल-
मिहैव समये कुतः पुनरपा[2]ठि काठिन्यकम् ॥ २८२ ॥

दयाघन बृहद्वने निजजनोऽयमस्मिन् कथं
दवानलशिखाविलो मयि सतीह भूयादिति ।
य एव निगदन् भवानपिबदग्निमत्युल्वणं
न तस्य तव दुःशकं विरहवह्नितो रक्षणम् ॥ २८३ ॥

अस्मच्चित्तं सुष्ठु वा दुष्टवृत्ति प्रेष्ठैतस्मिन् संशयश्चेत् तवास्ति ।
तत्किं तूष्णीं संपिधाने न भूयः पृच्छस्वाऽऽत्तं तद्गतं कामदेवम् ॥ २८४ ॥

सकल-मङ्गल-मङ्गलमङ्ग ते तृणचराऽनुचरानुचरं प्रभो ।
पदसरोजमुरो[3]जनिरोगतावह[4]महो यदहो तदिहास्तु नः ॥ २८५ ॥

तवावतारोऽयमसाधु दुर्धरः सदुत्तरः सज्जनरञ्जितान्तरः ।
निगद्यमानो निरवद्यभाषिभिस्तदद्य हृद्यं सुरवन्द्य पाहि नः ॥ २८६ ॥

वंशोऽयं जगदीश तेऽत्र शृणुमः सर्वांशै[5]राजाञ्चितः
शू[6]रेणोल्लसितो बुधेन कलितो मान्यो वदान्यैरिति ।
आस्तां तच्च यशोद[7]या विलसितः सम्प्रत्यपीति प्रभो
तद्वंश्यस्य तवायशो न लवशोऽप्यास्तामिति ब्रूमहे ॥ २८७ ॥

करालोऽयं कालो निरवधिविशालोऽस्मरशरा-
नलो[8] दीव्यज्ज्वालो हिमकिरणमालो[9]ऽपि सकलः ।
कृपालो त्वं बालोचितरुचिरहेलोऽसि यदि तत्
कथं जीवामोऽरं तदव तवपन्न्यस्तमनसः ॥ २८८ ॥

---

१. चरणात् पूर्वोक्तसुखचतुर्थांशाच्च । २. पठितम् । ३. स्तनाः । ४. तेजः । ५. चन्द्रो नृपश्च । ६. वीरो यादवविशेषश्च । ७. नन्दपत्न्या, यशश्च दया च ताभ्यां च । ८. कामाग्निः । ९. चन्द्रः ।

प्रभो प्रभुत्वं तव चेदनस्तं गतं कथं तर्हि सुसह्यमेतत् ।
निशाचरोऽयं प्रसभं करैः स्वैराकर्षति श्रीधर यत्प्रियास्ते ॥ २८९ ॥

इमा सकामाः परमाभिरामाः प्रिया न सा मापि ममास्ति वामा ।
क्षमानिधे माधव मानधामा त्वमात्मसंमानि कुरु प्रमाणम् ॥२९०॥

पुरुषेण मया परेण कार्योऽत्र परस्त्रीनिचये कथं प्रवेशः ।
यदि चैवमनाथदीनबन्धो करुणां प्रेषय तोषपोषकर्त्रीम् ॥ २९१ ॥

अस्मद्विषादपरिपोषविशेषकर्त्रीं
योषां रुषं स्वहृदये निहितां जहीहि ।
स्त्रीमात्र एव विरतिर्मम सम्प्रतीति
पश्चाद्वदिष्यसि यदि श्रुतिमीश कुर्मः ॥ २९२ ॥

ह्रीमुत्प्रमाक्षान्तिदयारुषश्च समानरूपा अपि सम्प्रतीश ।
अन्त्यैव ते प्रीतिपदं विभाति ययैवमीशोऽपि वशीकृतोऽसि ॥ २९३ ॥

दितिजदनुजवर्गः कृत्स्न एकत्र कोटौ
तव तदपरकोटौ क्रोध एको दयालो ।
स च यदि कृततापो नो पराजीयते तत्
किमु कृतमिति चोक्तौ किं भवेद् दूषणं वा ॥ २९४ ॥

परोपकारनिरता या रुषं हन्ति लीलया ।
कथं जाताऽवीर्यवती दया सा[3]राधिकाप्यहो ॥ २९५ ॥

यावद्वर्ण[4]व्यवस्थाऽत्र श्रुति[5]गैवेति तत्कथम् ।
वाच्यमस्मद्वर्णगतिर्न तेऽभूच्छ्रुतिगा विभो ॥ २९६ ॥

धृत्वा ह्रस्वाकारं[6] वने विहारस्त्वया प्रतिज्ञातः ।
तत्कथमधुना विधृताकाराभिव्यक्तयेऽस्युदासीनः ॥ २९७ ॥

व्रजजनवृजिनापगमस्त्वदभिव्यक्त्यैव सदय भृशमजनि ।
मङ्गलवितरणशालिन् कुरु सम्प्रति हृद्रु[7]जामिहापगमम् ॥ २९८ ॥

---

१. चोरश्चन्द्रश्च । २. प्रेमवाक्यानि । ३. सा राधिका च बलाधिकापि । ४. ब्राह्मणादिः अक्षराणि च । ५. वेदः कर्णश्च । ६. वने, वनशब्दे ह्रस्वाकारनिधाने श्रवनमिति तस्मिन्, बालाकारश्च । ७. हृद्रोगाणाम् ।

यत्ते सुजातेति : १०. ३१. १९.

सद्य[1]स्तनातिकठिनत्वसहं न भूया-
देतत्ततो विरचितो न तथा विहारः।
सद्यस्तनोज्ज्वलतराब्जदलोपमेन
पादेन तेन कथमाक्रमसि ह्यरण्यम् ॥ २९९ ॥

यन्मार्दवातिशयितामवलोक्य पद्मं
त्वत्का[2]मिनितनुजयोः शर[3]णं बभूव।
तत्ते पदाम्बुजमनर्हवनभ्रमेषु
शक्तं भवेत् कथमलं भ्रमतीति चित्तम् ॥ ३०० ॥

भुजङ्गेशोऽप्यङ्गं निजमकृतभङ्गं रचयति
विहङ्गोऽपि स्वाङ्गं मृदुमृदु समुत्तुङ्गसुभगम्।
यदुद्धृत्यैतत्ते पदमिदमरण्ये स्थपुटिते
कथं सञ्चारि स्यादिति सदय खेदो मनसि नः ॥ ३०१ ॥

निःशेष[4]यातरजसि प्रसृतप्रकाशे
चित्तेऽपि संविशति योगविदां शनैर्यत्।
तत्ते पदं शितशिलाशकलप्रकीर्णे
देशे भृशं सरजसि भ्रमतीति चित्रम् ॥ ३०२ ॥

यः शेषे कमलाकुचे च चरणश्चित्तेऽपि वा योगिनां
मन्दं मन्दमुपैति मार्दववशात् तद्दाढ्यमालोचयन्।
तस्याप्तं यदिहाधुना गिरिदरीक्षोणीषु विद्रावणं
तद्धेतुर्ननु गोपिका इति वचःशल्यं मनः कृन्तति ॥ ३०३ ॥

लोके कथञ्चिदपि नाम चरन्तु लोकाः
प्रारब्धकर्मकलिता हि भवन्ति सर्वे।
प्रारब्धकर्मरहितोऽपि विभो त्वमत्र
स्वारब्धकर्मवशतो भ्रमसीति चित्रम् ॥ ३०४ ॥

---

१. तत्कालोद्भवं नूतनमित्यर्थः। २. लक्ष्मी-ब्रह्मणोः। ३. गृहं लक्षणया शरणार्थि च। ४. गतरजोगुणे।

मत्स्या-ऽच्छ-कच्छप-वराह-नृसिंहवेषे-
ष्वप्यस्ति मे वनरतिर्नहि नूतनाऽद्य ।
सत्यं प्रभो वद तथैव निजं व्यलीकं
तत्र स्थितं तमवनानवनप्रकारम् ॥ ३०५ ॥

कामं भ्रमाम्यहमिहाद्रिगुहागमेषु
किं वा मयाऽपकृतमत्र च वोऽपनीतम् ।
नैवं वदांशिकमपीशजगत्यगूढं
सर्वांशतो वयमहो भवदायुषः स्मः ॥ ३०६ ॥

अस्मन्मोहाद्भवन्मोहस्त्वद्भ्रमात् संभ्रमा वयम् ।
इत्यन्योन्यं पश्य पूर्णं यत्त्वमेकायुषो वयम् ॥ ३०७ ॥

न भ्रमोऽस्तु तवापीश न च मोहोऽपि नः क्वचित् ।
नात्रान्यत् साधनं किञ्चिदावयोः सङ्गमं विना ॥ ३०८ ॥

प्रमादादप्रमादाद्वा न न्यस्तं त्वत्पदं स्तने ।
विधाय करुणामीश तत्सुखं दिश सम्प्रति ॥ ३०९ ॥

यत्त्वां कान्तमनङ्गभोगचतुरं भोगोपलब्धीच्छया
वाञ्छामो वयमित्यनच्छचरितादस्माकमाकस्मिकात् ।
जातोऽधर्म इति प्रभो स्वमनसा संचिन्त्य नास्मासुहि
यत्तादृश्यपि नः पदान्यभिलपन्त्यन्तः सुधर्माश्रिताः ॥ ३१० ॥

विना तव पदाश्रयं भुवि न जातु शब्दस्थितिः
प्रभो त्वयमकुण्ठितः श्रुतिषु डिण्डिमः श्रूयते ।
स्फुटास्मदतनूदितं लसति शब्दजातं परं
पदं तु नहि दृश्यते कथय नाथ चैतत्कथम् ॥ ३११ ॥

मत्पादोऽशनिरूप एवमवदस्त्वन्तन्मृषा यत्स्फुटी-
भावं याति न गर्जितार्दनरवे मेघो दयेऽस्मिन् प्रभो ।

---

१. जलम् अरण्यं च । २. देवा मुनयश्च । ३. आकाशः । [४. कामः महच्च । ५. वज्रं शनिर्नेति च । ६. मेघानां उदये, मे अघोदये च ।

किं चास्मत्सविधागतावपि विलम्बान्मन्दभावोऽस्य हि
स्पष्टः स्याद्यदि सत्य एव स तथा दुःखाद्रिभङ्गं कुरु ॥ ३१२ ॥

स्वकीयजनहेलनं न सहतेऽल्पकोऽपि क्वचित्
प्रभुस्त्वमखिलस्य सन् कथमिदं सखे पश्यसि ।
निशाऽसमशरापगा - हिमकरादिभिर्हास्यतां
रसैस्त्वदधिदैवतो भुवमनायि नश्चित्तगः ॥ ३१३ ॥

दयानिधे स्वाश्रयगा कथं वा सद्भक्तता व्यक्ततमा विधेया ।
यदच्युतास्माभिरगायि गीतं शृणोषि तन्नो सदसद्ब्रवीषि ॥ ३१४ ॥

अपां तिरस्कृत्य वचोविरोधिनीं
हठात् पुरस्कृत्य गिरं नटीमिव ।
त्वत्प्रीतये गीतमिदं मनोहरं
सुज्ञोऽसि तन्मानय मानयाश्रुतिम् ॥ ३१५ ॥

आकोटिद्रव्यवित्राणनरचितपणानां पुरस्तान्न कार्यं
मूर्खाणां स्वीयरत्नाधिकसुषमगुणोद्घाटनं बुद्धिमद्भिः ।
दत्वा स्वार्थं रसज्ञान्निजसरसगुणान् श्रावयेदीश तत्ते
प्रीत्यै गीतं त्वमेको यदसि भुवि विभो मुख्यगीतार्थवेत्ता ॥ ३१६ ॥

न हावो न भावो न यत्रानुभावः कथं तद्धि गीतं प्रभो मा वदैवम् ।
यतो वैदिकैर्मन्त्रतः सर्वपूजां चरद्भिर्जने दर्शितो राजमार्गः ॥ ३१७ ॥

गीतं सम्प्रति गोपिकाभिरुचितं गीतं प्रभो चेतसि
मैवं मानय गोपिकाभिरुचितच्छ्रुत्याऽस्य किं मे फलम् ।
यच्चेतो भुवि रागितां जनयति श्रुत्या च यस्यानिशं
श्रोतॄणां भवति प्रसन्नसुरतामोदः सुरागास्पदः ॥ ३१८ ॥

---

१. स्वराशून्यत्वं शनित्वं च । २. कामः । ३. शृङ्गारः । ४. शृङ्गारस्य विष्णुदेवताकत्वात् । ५. गीतायाः गीतस्य चार्थः । ६. गावश्च पिकाश्चेति गोपस्त्रियश्च । ७. कामे चेतोरूपायां भुवीति च । ८. प्रेमवत्ताम् । ९. सुरतं सुरता च । १०. सुरागो मेरुः शोभनो रागश्च ।]

श्रीकान्त शान्तमनसः सततं स्वभावो
भात्येष यत्परिजनार्तिहृतौ प्रवृत्तिः ।
शान्तैकसेवितपदस्य निशान्तभाजः
सायं निशान्तसमये भवतो न कस्मात् ॥ ३१९ ॥

दिवापद्मोल्लासो निशि तु कुमुदाभासनमिति
प्रसिद्ध्याऽहोरात्रे भुवि तव तु सिद्धः सुखरसः ।
रमा भूमिप्रीतिप्रद तदिह याचामह इदं
त्वमस्मद्गीतार्थं झटिति पदरागं वितर नः ॥ ३२० ॥

त्वं ध्यातो भुजगाधिपेन मुनिना वाल्मीकिना कीर्तितो
व्यासेन प्रणुतोऽसि यस्त्वमनिशं गीतो विरञ्च्यात्मजैः ।
किं ध्यानं किमु वर्णनं च किमु वा स्तोत्रं च गीतं च किं
तस्यास्माभिरहो विधेयमधुना श्रीनाथ मुग्धात्मभिः ॥ ३२१ ॥

यच्चिन्तनं साङ्गमबोधि साधुभिः
यत्कीर्तनं वा शरणार्थनादिकम् ।
न ज्ञायते तस्य लवोऽप्यधोक्षज-
स्तव्या प्रभुश्रीरिति कीर्तितोऽस्यलम् ॥ ३२२ ॥

ज्ञान - कर्मेन्द्रिय - प्राण - चित्त - बुद्ध्यहमादिभिः ।
गतीस्त्वमीश येनेमं जीवं रक्षायुरर्पणात् ॥ ३२३ ॥
इत्येवं बोधयन्त्यस्ता गोपिका गोपतिप्रियाः ।
ऊनविंशतिसुश्लोकैरगायन् गीतमुत्तमम् ॥ ३२४ ॥

योगोऽथोपासना धीस्तदनु च भवति ज्ञानवैराग्यलाभो
ज्ञानं त्रैकालिकं चाप्यनुभवति सदेत्यादितस्तच्चरित्रात् ।
युक्तोऽर्थोऽयं निरुक्तो विशदविभुपदप्राप्तिकार्यार्षवाचा
भात्येवं तत्सुधीभिर्विशदमनुपदं दृश्यतामुज्झितेर्ष्यम् ॥ ३२५ ॥

---

१. पद्मा पद्मं च । २. कोः पृथिव्याः मुद्, कुमुदं च ।

विषजलाप्ययेत्यादिभूतगं वृषमयात्मजेत्याद्यनागतम् ।
जयति ते वचो वर्तमानगं न खलु गोपिकेत्यादि सर्वगम् ॥ ३२६ ॥

पृच्छामि त्वामहं श्रीश सत्यमत्रोत्तरं वद ।
मदोद्धताभिर्गोपीभिर्गीतस्त्वं समया न किम् ॥ ३२७ ॥

गोपीगीतं समाकर्ण्य यथा प्रत्यक्षतामगाः ।
तद्गीतमेव मद्गीतं तन्मेऽध्यक्षसुखं दिश ॥ ३२८ ॥

श्रीशकल्पतरु क्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने एकत्रिंशोऽध्यायः ॥ ३१ ॥

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

योगिदृश्यो भक्तवश्यो गोपीगीतः श्रुतिस्तुतः ।
यस्तद्दत्तस्वापरोक्षसुखस्तं श्रीशमाश्रये ॥ १ ॥

प्राप्तत्रिकालस्थितवस्तुबुद्धौ सिद्धे समाधौ सति सत्सुखात्मा ।
प्रादुर्भवत्याशु ततो विकल्पाज्ञानप्रणाशो भवतीत्यबोधि ॥ २ ॥

स्थूलाल्पात्यल्पभेदैरिह हि निगदितोपासनाया भिदा तत्
सञ्जातानन्दभोगाननुभवति जनः स्वाधिकारानुरूपान् ।
योगीवानन्दरूपेत्यनुपदलिखनाद् व्यञ्जितो योगिवर्यै-
र्गूढस्त्वर्थोऽयमत्राच्युतमतिगतिभिः प्रोह्य एवं पुरोऽपि ॥ ३ ॥

शिष्टाऽहङ्कृतिरंशतो भवति सम्पूर्णे समाधावपि
तत्कार्यं त्वखिलं प्रयाति विलयं साक्षात्कृते ब्रह्मणि ।
एवं पूर्णसमाधिबोधनपरो ह्यध्याय एष प्रभा-
त्यध्यायान्तिमपद्यतः स्फुटतरं तज्ज्ञैः स्वदृष्ट्येक्ष्यताम् ॥ ४ ॥

इति गोप्य इति : १०. ३२. १.

गोप्यस्थितिं यदुपतिं प्रसमीक्ष्य हार्दाद्
गोप्यस्थितिं विदधिरेऽपि च ताः स्वकीयाम् ।
गीतोपदेशरसिकत्वमवेक्ष्य किं च
गीतोपदेशमपि यद्विदधुः क्षमं तत् ॥ ५ ॥

आर्तः स्वरः प्रभुदयोदयकृद्यथास्मिं-
स्तुत्यर्चनादिविविधार्जविता न तादृक् ।
स्पष्टं यदत्र नुतिगीतिकृतोऽपि गोपीः
प्रीतो बभूव सदयो रुदतीरवेक्ष्य ॥ ६ ॥

तासामिति : १०. ३२. २.

ज्ञेयमाभिरपृष्ट्वापि मदन्तर्धानकारणम् ।
इति प्रादुर्बभूवेशः स्मयमानमुखाम्बुजः ॥ ७ ॥

---

१. मदेन सन्तोषेण मया च आदृताः ।

गतं वागतं वा न मे व्यापकस्यास्सयाच्च स्याद् व्यक्तताऽव्यक्तता च ।
अभिव्यक्तितः श्रीधरेणेत्यबोधि स्वदृष्ट्या तु युक्तं तथा ता अपश्यन् ॥८॥

विश्वाकारः स्वयं सन्नपि मदनुजनप्रीतयेऽहं तदुक्तै-
र्मत्प्राप्तिप्रेमभावोल्लसितनतिशतस्तोत्रगीतैः प्रसन्नः ।
स्वीकुर्वन् कामरूपं स्वजनवरदयादानदक्षं तदग्रे
व्यक्तः स्यामित्यबोधि श्रितकनकपटः स्रग्धरस्तादृगीशः ॥ ९ ॥

तेषामीशालोकनं जायतेऽलं त्यक्त्वा कार्याण्यत्र ये योगयुक्ताः ।
सं[1]योगैकासक्तसर्वेन्द्रियाणां किं तच्चित्रं योषितामीशलाभः ॥ १० ॥

तं विलोक्येति : १०. ३२. ३.

वस्तु सामान्यमपि चेत्पुनर्लब्धं तदा मुदे ।
भवत्यत्र तु संलब्धस्ताभिरद्धेन्दिराधिपः ॥ ११ ॥

प्रादुर्बभूव भगवान् विपिने तदान्त-
स्तासां सुखं कियदभूत् कियती दया वा ।
तस्यापि चेतसि कियानथ हार्दभाव-
स्तच्चाखिलं बत पुराणगिरोऽप्यतर्क्यम् ॥ १२ ॥

काचित् कराम्बुजमिति : १०. ३२. ४.

यस्त्वं दीनजनानुपालनविधौ नित्योल्लसत्कङ्कण-
स्तस्यास्मिंस्तव हस्त मादृशि जने कस्मादुपेक्षाऽजनि ।
इत्थं प्रष्टुमनाः शशाङ्कवदनैका कापि गोपाङ्गना
सन्ये पूर्णदयावतो भगवतो हस्ताम्बुजं सन्दधे ॥ १३ ॥

अकुतोभयोऽपि भगवा-
निह कस्माद्भयभागभूदिति विचिन्तनलोला ।
न हि तादृशः स खलु किं
त्वयमेवेत्यचिलम्बमस्य करमाजगृहेऽन्या ॥ १४ ॥

अजातशत्रुः श्रीनाथः कस्मादस्मासु वैरधीः ।
हेतुर्वाऽस्त्यरिभाक्सङ्ग इत्यन्याऽरि[2]करं दधौ ॥ १५ ॥

---

१. सम्यक् योगः संयोगश्च । २. शत्रुकरं चक्रविशिष्टं करं च ।

अतिप्रियतमा त्वस्य रमैवेत्यपरा जवात्।
कर्तुं[1] तत्तुल्यमात्मानं तत्कराब्जकराऽभवत् ॥ १६ ॥
प्रसादाभययोर्दक्षः सर्वेष्वप्येष एव यत्।
तदन्यसाधनेनालमिति तत्करमादधौ ॥ १७ ॥
न त्वं कुरु पुनः प्राग्वन्नाहं कुर्यामितः प्रभो।
तत्करं स्वकरे न्याधादिति सच्छपथाय किम् ॥ १८ ॥
विना पाणिग्रहं न स्यामहमस्य कुटुम्बिनी।
इति किं तरसा शीघ्रं जगृहे पाणिना करम् ॥ १९ ॥
अतनु शासनवर्तनलङ्घनं
यदि कृतं महता क्वचिदस्य तत्।
अतनु[2]शासनमेव विधेयमि-
त्यनुविचिन्त्य हि सा कर[3]मग्रहीत् ॥ २० ॥

तद्वाहुमिति :

अतिनिर्दयलोक[4]जन्मभूमिरयमेवावयवो बुधैर्निरुक्तः।
भगवद्भुजमात्मबाहुसात्किं विदधे सा समतां द्वयोर्विचिन्त्य ॥ २१ ॥
रजस्तमः पूर्णभुवो बाहो त्वज्जा इति श्रुतम्।
कथं त्वमसि सत्त्वश्रीरिति तं प्रष्टुमस्पृशत् ॥ २२ ॥
त्वमंस विश्रान्तिनिमित्तमस्या
मदाश्रितायाः प्रथमं पुरस्कृतः।
ततः कुतोऽभूदिदमीदृशं त्विति
प्रष्टुं तदंसोऽसमुपागमत् प्रभोः ॥ २३ ॥
अंसंगतं वरमहारि विहारिणा मे
कृष्णेन पूर्वमिति कापि विलोलबाहुः।
अंसंग[5]तं वरमवेक्ष्य तदाऽतिहर्षा-
दंसंगतं भगवतो ह्यकरोन्निजांसे ॥ २४ ॥

---

१. पद्महस्तेत्यर्थः। २. महच्छासनं शरीरशासनं नेति च। ३. राजग्राह्य-भागं हस्तं च। ४. क्षत्रियाः। ५. अमित्यनेन सङ्गतं वरम् अम्बरम्। ६. अं विष्णुम्।

ताम्बूलचर्वितमिति : १०. ३२. ५.

आदौ विभाति न मनागपि यत्र रागः
संसेवनोत्तर - मपारतरा - ऽनुरागः।
ताम्बूलमीशमिव वीक्ष्य ततस्तदा तत्
सेवात्तधीः किमिति साञ्जलिना दधार ॥ २५ ॥

श्रीनाथाङ्घ्रिसरोजजातरसभाक् स्थाणुः स्वयं चापि यो
जातः स्वर्द्रुसमानकान्तिरखिलप्रेष्ठप्रदः शङ्करः।
ताम्बूलं त्विदमत्र भाति भगवन्मुख्यामृतस्वादभाक्
तत्स्यादेव तथाविधाधिकगुणं बुद्ध्यैवमन्याऽग्रहीत् ॥ २६ ॥

द्विजोच्छिष्टं सदा सेव्यमिति शास्त्रार्थकोविदा।
काप्यसेवत ताम्बूलं भगवन्मुखचर्वितम् ॥ २७ ॥

उद्वेजिताऽहमिह येन पुरा समन्ता-
दुद्वेगँ एष हरिणा विहितः सचूर्णम्।
सर्वांशतोऽजनि भ वेति विलोकनार्थं
ताम्बूलमाशु जगृहे किमु तादृशं सा ॥ २८ ॥

एकाऽहमेव सरसाऽस्य रसस्य भोक्त्री-
त्येष स्मयो मुरलिकाहृदि यः पुराऽऽसीत्।
सोऽद्य त्वया ह्यपहृतो मुखवीटिके तत्-
पूज्या ममेति च करेण दधार काचित् ॥ २९ ॥

सोद्वेगा[3] त्वमिवाहं भुँजङ्गरतिका दलान्विता च तथा।
कस्मादेतद्रसभाक् त्वमहं नेत्याददेऽनुयोक्तुं ताम् ॥ ३० ॥

तदङ्घ्रिकमलमिति :

सन्मानसोत्पलदलादपि कोमलोऽसा-
वासीत्पुरेति कठिने न कुचे कृतो मे।
योग्योऽधुना तु स शिलोपलभूविहारात्
पादः प्रभोरिति कुचे निदधे निजेऽन्या ॥ ३१ ॥

१. रक्तिमा प्रीतिश्च। २. भयं पूगफलं च। ३. सभया सपूगफला च। ४. नागवल्लीदलं जाररतिश्चादरश्च।

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

योगिदृश्यो भक्तवश्यो गोपीगीतः श्रुतिस्तुतः ।
यस्तद्दत्तस्वापरोक्षसुखस्तं श्रीरामाश्रये ॥ १ ॥

प्राप्तत्रिकालस्थितवस्तुबुद्धौ सिद्धे समाधौ सति सत्सुखात्मा ।
प्रादुर्भवत्याशु ततो विकल्पाज्ञानप्रणाशो भवतीत्यबोधि ॥ २ ॥

स्थूलाल्पात्यल्पभेदैरिह हि निगदितोपासनाया भिदा तत्
सञ्जातानन्दभोगाननुभवति जनः स्वाधिकारानुरूपान् ।
योगीवानन्दरूपेत्यनुपदलिखनाद् व्यञ्जितो योगिवर्यै-
र्गूढस्त्वर्थोऽयमत्राच्युतमतिगतिभिः प्रोह्य एवं पुरोऽपि ॥ ३ ॥

शिष्टाऽहङ्कृतिरंशतो भवति सम्पूर्णे समाधावपि
तत्कार्यं त्वखिलं प्रयाति विलयं साक्षात्कृते ब्रह्मणि ।
एवं पूर्णसमाधिबोधनपरो ह्यध्याय एष प्रभा-
त्यध्यायान्तिमपद्यतः स्फुटतरं तज्ज्ञैः स्वदृष्ट्येक्ष्यताम् ॥ ४ ॥

इति गोप्य इति : १०. ३२. १.

गोप्यस्थितिं यदुपतिं प्रसमीक्ष्य हार्दाद्
गोप्यस्थितिं विदधिरेऽपि च ताः स्वकीयाम् ।
गीतोपदेशरसिकत्वमवेक्ष्य किं च
गीतोपदेशमपि यद्विदधुः क्षमं तत् ॥ ५ ॥

आर्तः स्वरः प्रभुदयोदयकृद्यथास्मिं-
स्तुत्यर्चनादिविविधार्जविता न तादृक् ।
स्पष्टं यदत्र नुतिगीतिकृतोऽपि गोपीः
प्रीतो बभूव सदयो रुदतीरवेक्ष्य ॥ ६ ॥

तासामिति : १०. ३२. २.

ज्ञेयमाभिरपृष्ट्वापि मंदन्तर्धानकारणम् ।
इति प्रादुर्बभूवेशः स्मयमानमुखाम्बुजः ॥ ७ ॥

---

१. मदेन सन्तोषेण मया च आदृताः ।

गतं वागतं वा न मे व्यापकस्यास्मयाच्च स्मयाद् व्यक्तताऽव्यक्तता च ।
अभिव्यक्तितः श्रीधरेणेत्यबोधि स्वदृग्व्या तु युक्तं तथा ता अपश्यन् ॥८॥

विश्वाकारः स्वयं सन्नपि मदनुजनप्रीतयेऽहं तदुक्तै-
र्मत्प्राप्तिप्रेमभावोल्लसितनतिशतस्तोत्रगीतैः प्रसन्नः ।
स्वीकुर्वन् कामरूपं स्वजनवरदयादानदक्षं तदग्रे
व्यक्तः स्यामित्यबोधि श्रितकनकपटः स्रग्धरस्तादृगीशः ॥ ९ ॥

तेषामीशालोकनं जायतेऽलं त्यक्त्वा कार्याण्यत्र ये योगयुक्ताः ।
सं[1]योगैकासक्तसर्वेन्द्रियाणां किं तच्चित्रं योषितामीशलाभः ॥ १० ॥

तं विलोक्येति : १०. ३२. ३.

वस्तु सामान्यमपि चेत्पुनर्लब्धं तदा मुदे ।
भवत्यत्र तु संलब्धस्ताभिरद्धेन्दिराधिपः ॥ ११ ॥

प्रादुर्बभूव भगवान् विपिने तदान्त-
स्तासां सुखं कियदभूत् कियती दया वा ।
तस्यापि चेतसि कियानथ हार्दभाव-
स्तच्चाखिलं बत पुराणगिरोऽप्यतर्क्यम् ॥ १२ ॥

काचित् कराम्बुजमिति : १०. ३२. ४.

यस्त्वं दीनजनानुपालनविधौ नित्योल्लसत्कङ्कण-
स्तस्यास्मिंस्तव हस्त मादृशि जने कस्मादुपेक्षाऽजनि ।
इत्थं प्रश्नुमनाः शशाङ्कवदनैका कापि गोपाङ्गना
मन्ये पूर्णदयावतो भगवतो हस्ताम्बुजं सन्दधे ॥ १३ ॥

अकुतोभयोऽपि भगवा-
निह कस्मादरिभागभूदिति विचिन्तनलोला ।
न हि तादृशः स खलु किं
त्वयमेवेत्यविलम्बमस्य करमाजगृहेऽन्या ॥ १४ ॥

अजातशत्रुः श्रीनाथः कस्मादस्मासु वैरधीः ।
हेतुर्वाऽस्त्यरिभाक्सङ्ग इत्यन्याऽरिं[2]करं दधौ ॥ १५ ॥

---

१. सम्यक् योगः संयोगश्च । २. शत्रुकरं चक्रविशिष्टं करं च ।

अतिप्रियतमा त्वस्य रमैवेत्यपरा जवात्।
कर्तुं तत्तुल्यमात्मानं तत्करा[1]ब्जकराऽभवत् ॥ १६ ॥
प्रसादाभययोर्दक्षः सर्वेष्वप्येष एव यत्।
तदन्यसाधनेनालमिति तत्करमादधौ ॥ १७ ॥
न त्वं कुरु पुनः प्राग्वन्नाहं कुर्यामितः प्रभो।
तत्करं स्वकरे न्याधादिति सच्छपथाय किम् ॥ १८ ॥
विना पाणिग्रहं न स्यामहमस्य कुटुम्बिनी।
इति किं तरसा शीघ्रं जगृहे पाणिना करम् ॥ १९ ॥

अतनु शासनवर्तनलङ्घनं
यदि कृतं महता क्वचिदस्य तत्।
अत[2]नुशासनमेव विधेयमि-
त्यनुविचिन्त्य हि सा कर[3]मग्रहीत् ॥ २० ॥

तद्बाहुमिति :

अतिनिर्दयलोक[4]जन्मभूमिरयमेवावयवो बुधैर्निरुक्तः।
भगवद्भुजमात्मबाहुसात्किं विदधे सा समतां द्वयोर्विचिन्त्य ॥ २१ ॥

रजस्तमः पूर्णभुवो बाहो त्वज्जा इति श्रुतम्।
कथं त्वमसि सत्त्वश्रीरिति तं प्रष्टुमस्पृशत् ॥ २२ ॥

त्वमंस विश्रान्तिनिमित्तमस्या
मदाश्रितायाः प्रथमं पुरस्कृतः।
ततः कुतोऽभूदिदमीदृशं त्विति
प्रष्टुं तदंसोऽसमुपागमत् प्रभोः ॥ २३ ॥

अंसंग[5]तं वरमहारि विहारिणा मे
कृष्णेन पूर्वमिति कापि विलोलबाहुः।
अंसंग[6]तं वरमवेक्ष्य तदाऽतिहर्षा-
दंसंगतं भगवतो ह्यकरोन्निजांसे ॥ २४ ॥

---

१. पद्महस्तेत्यर्थः। २. महच्छासनं शरीरशासनं नेति च। ३. राजग्राह्यभागं हस्तं च। ४. क्षत्रियाः। ५. अमित्यनेन सङ्गतं वरम् अम्बरम्। ६. अं विष्णुम्।

ताम्बूलचर्वितमिति : १०. ३२. ५.

आदौ विभाति न मनागपि यत्र रागः
संसेवनोत्तर - मपारतरा - ऽनुरागः ।
ताम्बूलमीदृशमिव वीक्ष्य ततस्तदा तत्
सेवात्तधीः किमिति साञ्जलिना दधार ॥ २५ ॥

श्रीनाथाङ्‌घ्रिसरोजजातरसभाक् स्थाणुः स्वयं चापि यो
जातः स्वर्द्रुसमानकान्तिरखिलप्रेष्टप्रदः शङ्करः ।
ताम्बूलं त्विदमत्र भाति भगवन्मुख्यामृतस्वादभाक्
तत्स्यादेव तथाविधाधिकगुणं बुद्ध्यैवमन्याऽग्रहीत् ॥ २६ ॥

द्विजोच्छिष्टं सदा सेव्यमिति शास्त्रार्थकोविदा ।
काप्यसेवत ताम्बूलं भगवन्मुखचर्वितम् ॥ २७ ॥

उद्वेजिताऽहमिह येन पुरा समन्ता-
दुद्वेगँ एष हरिणा विहितः सचूर्णम् ।
सर्वांशतोऽजनि भ वेति विलोकनार्थं
ताम्बूलमाशु जगृहे किमु तादृशं सा ॥ २८ ॥

एकाऽहमेव सरसाऽस्य रसस्य भोक्त्री-
त्येष स्मयो मुरलिकाहृदि यः पुराऽऽसीत् ।
सोऽद्य त्वया ह्यपहृतो मुखवीटिके तत्-
पूज्या ममेति च करेण दधार काचित् ॥ २९ ॥

सोद्वेगाँ त्वमिवाहं भुँजङ्गरतिका दलान्विता च तथा ।
कस्मादेतद्रसभाक् त्वमहं नेत्याददेऽनुयोक्तुं ताम् ॥ ३० ॥

तदङ्‌घ्रिकमलमिति :

सन्मानसोत्पलदलादपि कोमलोऽसा-
वासीत्पुरेति कठिने न कुचे कृतो मे ।
योग्योऽधुना तु स शिलोपलभूविहारात्
पादः प्रभोरिति कुचे निदधे निजेऽन्या ॥ ३१ ॥

---

१. रक्तिमा प्रीतिश्च । २. भयं पूगफलं च । ३. सभया सपूगफला च ।
४. नागवल्लीदलं जाररतिकादरश्च ।

त्रितापहर्त्रम्बु बभूव यस्मात्
पदाम्बुजातस्य न तस्य विष्णोः ।
सुदुर्घटा मे तनुतापशान्ति-
रिति न्यधात् कापि कुचेऽतितप्ते ॥ ३२ ॥

स्वीये पयोधरघटे ललिताब्जनाभ-
पादाम्बुजातभरणं च चकार काचित् ।
नैतद्विचित्रमिह यत्किल धर्म एव
स्त्रीणामयं जलभृतेः करणं घटेषु ॥ ३३ ॥

सार्वांशिकं यदि मयैव सुखं गृहीत-
मैशाङ्गसङ्गजनितं तदिमाः सपत्न्यः ।
ईर्ष्याजुषः स्युरिति तत्र गतेर्ष्यमन्या
न्यायेन पादसुखमेवमुरीचकार ॥ ३४ ॥

अम्लानभावमिह नैति विनाम्बुजात-
सङ्गं सरोजमिति कापि विचिन्त्य चित्ते ।
सद्यस्तने घनरसे कठिनावनिस्थं
पादाब्जमैशमतनुद्युतये न्यधात् किम् ॥ ३५ ॥

रणरणकरणेऽहमस्मि शक्ता ध्रुवमबलाऽप्यतनुप्रसङ्गरागे ।
सदयहरिविबोधनाय काचिदिति चरणे स्तनभूभृतं न्ययुङ्क्त ॥ ३६ ॥

अस्मिन्नेव सुखं सर्वं यच्छ्रीरेनं न मुञ्चति ।
अतोऽखिलसुखेहाऽन्या पादमस्यादधे हृदि ॥ ३७ ॥

क्षीराब्धिनित्यवसतेः कमलाधिपस्य
नान्यत्र सद्रतिकरो भविता निवासः ।
इत्यङ्गना - चतुरधी - रसवृद्धिभाजः
श्रैशं पदं निजपयोधरयोरकार्षीत् ॥ ३८ ॥

---

१. कमलम्, उदकसमूहश्च । २. तुर्यांशः, चरणश्च । ३. घनः रसो यस्मिन्, उदके च । ४. कामसङ्ग्रामे । ५. पदे चेति च्छेदश्च .

एका भ्रुकुटिमिति : १०.३२.६.

विरहदुःखमभूद् भगवन् यदा स्मरशरैरहमेवमिहार्दिता ।
इति शरप्रहतिं स्वकटाक्षतो यदुवरानुभवार्थमदर्शयत् ॥ ३९ ॥

सजातीयचेतोवशीकारयुक्ति-
र्न यस्यास्ति धिग्जन्म तस्येति काचित् ।
तदा स्वाधरं स्वावशश्रीधराख्या-
धरं वीक्ष्य धिक्त्वेन भूयोऽदशत् किम् ॥ ४० ॥

अपरेति : १०.३२.७.

सामोदघर्मोदमरन्दपूर्णं प्रसन्नशोभं विलसत्परागम् ।
मुखाम्बुजं वीक्ष्य हरेर्मृगाक्ष्याः पपौ सुनेत्रालियुगं क्षमं तत् ॥ ४१ ॥

विनाम्बुजातं नहि मीनवृत्तिरि-
त्यनुस्मृतार्था किल कापि गोपिका ।
मुखाम्बुजाते कमलेडिते हरे-
र्निजाक्षि-मीनौ सहसाऽक्षिपन्मुदा ॥ ४२ ॥

पदाम्बुजाते बहवोऽच्युतस्य लसन्ति यत्सत्पुरुषास्ततो मे ।
स्त्रीत्वादनर्हा विहृतिर्हि तत्रेत्यासीज्जुषाणाऽस्य मुखाम्बुजातम् ॥४३॥

तं काचिदिति : १०.३२.८.

चेतस्तवायमविनीतचरित्रचर्यः
पुत्रो यदेष युवतिष्वपि तीक्ष्णदण्डः ।
इत्थं मनः कथयितुं सुतचेष्टितं किं
तद्बन्ध्यमीशमनयलघु तत्समीपम् ॥ ४४ ॥

यद्यप्यागमनेन ते वयमसूः प्राप्तप्रमोदास्तथा-
प्यर्वाक् त्वत्कृतवञ्चनाविधिमलं दृष्ट्वा मनः शङ्कते ।
सत्यं निष्कपटोऽसि चेदरमितस्तत्तत्समाश्वासये-
त्यक्षिद्वारिपरा मुदा यदुवरं हृन्मन्दिरे प्राहिणोत् ॥ ४५ ॥

यस्याणुमात्रविरहेऽप्यतिदुःखभोक्त्री
जाताऽस्यथाऽहमपि ते सहचारयोगात् ।

अस्त्येष कीदृगिह दर्शय मामितीव
चक्रे तथा निजमनोऽत्यभिलाषपूर्त्यै ॥ ४६ ॥
विरहदुःखमभोजि मया समा-
गमसुखं त्वियमेव भुनक्त्यहो ।
इति न यातु कदापि मनोहृदी-
त्यरमधादमुनाऽस्य तु सङ्गतिम् ॥ ४७ ॥

हंसने[1]त्रात्मनो ह्यस्य हंस[2]मण्डलवर्तिनः ।
विहृतिर्मा[3]नसे युक्तेत्यन्या तत्र न्ययोजयत् ॥ ४८ ॥

अस्या मदीयविरहोद्भवविक्लवत्व-
मासीत् सदेतदथवा वहिरेव दम्भः ।
इत्यैशसंशयमलं व्यपनेतुकामा
काचिद्धृदन्तरगतं भगवन्तमाधात् ॥ ४९ ॥

भूयो हित्वा मामयं नापगच्छेदेवं रोत्स्याम्येनमित्याशयेन ।
नेत्रद्वारान्तः प्रतिष्ठाप्य पक्ष्मद्वारं प्रापानन्दसेका प्रलाप्य ॥ ५० ॥

सुमनोज्ञहृदारामे यदासीन्माधवोदयः ।
युक्तमेव हि तद्योगात्फुल्ला रोमलताङ्कुराः ॥ ५१ ॥

हार्दासने निजानन्दप्रदमाधाय माधवम् ।
आनर्च सुमनो योगात् साऽऽसीद्योगिवदित्यलम् ॥ ५२ ॥

सर्वास्ता इति : १०.३२.९.

सर्वाः स्त्रियोऽप्यच्युतदृष्टयोऽच्युते
तत्कालजामार्तिमशेषतो जहुः ।
साध्वेव तद्यत् क्वचिदप्यवाप्य यं
योगे त्रितापं सुजनो जहाति हि ॥ ५३ ॥

ताभिरिति : १०.३२.१०.

कृष्णेन ताः शुशुभिरे नहि केवलं तु
कृष्णोऽपि ताभिरबलाभिरलं विरेजे ।

---

१. नेत्रं नायकश्च । २. सूर्यः पक्षिविशेषश्च । ३. मनसि सरोवरे च ।

नैतद्विचित्रमिह यन्निशयेन्दुरीशः
शक्त्याम्बुदश्चपलया च विदा नृजन्मा ॥ ५४ ॥

ताः समादायेति : १०.३२.११.

सरसाः कर्तुमन्विच्छंस्तास्तदा युवतीः प्रभुः ।
लसत्पुष्पलतामागात्कालिन्द्यास्तद्युतस्तटीम् ॥ ५५ ॥

शरच्चन्द्रांशु इति : १०.३२.१२.

तापापहृतिरुक्ताऽस्ति पूर्णचन्द्रनिषेवणात् ।
चित्रमत्र त्वतापास्तास्तत्करस्पर्शतोऽभवन् ॥ ५६ ॥

तद्दर्शनेति : १०.३२.१३.

अयं स्वयमकामोऽस्ति नीरजस्थितिसंस्तुतः ।
युक्तं ताभिः कामुकीभिर्योजितः कुङ्कुमासने ॥ ५७ ॥

सौभाग्यमस्मदीयं त्वदेकशरणं त्वदाश्रितं जगति ।
तन्मा जहीहि तमिति प्रबोधयन्त्यस्तथासनं प्रददुः ॥ ५८ ॥

योगोपासनयोः किञ्चिच्छिष्यते रजसः स्थितिः ।
तां बोधयन्त्यश्चक्रुस्ताः सकुङ्कुमसिंहासनम् ॥ ५९ ॥

धन्यं श्रीशकरस्पर्शात् परिधानीयमम्बरम् ।
स्वोत्तरीयं तथेशाङ्घ्रिस्पर्शादस्त्विति तद्दधुः ॥ ६० ॥

तत्रोपविष्ट इति : १०.३२.१४.

भक्तप्रकल्पितरजोगुणराजिभाजि
तिष्ठन् सदा मृदुपदे हृदयाम्बरेऽहम् ।
तद्गोचरस्तदनुचिन्तितकामदाता
स्यामित्यबोधि विभुनाऽऽसनशोभितेन ॥ ६१ ॥

सभाजयित्वेति : १०.३२.१५.

लोके चलप्रकृतिरप्रतिमस्वरूपा-
प्यब्जासनाऽलमनिशं स्ववशीकृता श्रीः ।

---

१. विद्युता । २. ज्ञानेन । ३. पूर्णश्चासौ चन्द्रश्च सः, रसायनविशेषश्च । ४. चन्द्रकरः, रसायनकरश्च । ५. ब्रह्मा लक्ष्मीर्वा, रजःशून्यस्थितिश्च । ६. उत्तरीयासनम् ।

येनास्य तेन हि वशीकृतिरस्मदादे-
दासीजनस्य भुवि चित्रकृदत्र कृष्ण ॥ ६२ ॥
मानं विना न रसपुष्टिरयं तु मानात्
कुप्यत्यतोऽत्र करणीयमहो कथं वा ।
आलोच्य तद्घटित-तन्नुतिमादधुस्ता
लोकेऽनया स्फुटमबोधि विधेयमीदृक् ॥ ६३ ॥
योगीश्वराशेषहृदन्तरज्ञोऽप्यस्माकमार्तिं स्मरजामबाह्याम् ।
न ज्ञातवानत्र भवान् कथं वा ज्ञात्वाऽप्युपेक्षा विहितेति चित्रम् ॥ ६४ ॥
श्रीश त्वत्पदकञ्जयोरतितरां हस्ताब्जयोर्वक्षसो
वक्त्रेन्दोश्च समागमो निरुपमानन्दं प्रदद्यात्प्रभो ।
नैवास्मिन् किल संशयो यदनिशं श्रीशानुभूतं मुहुः
किं च त्वत्प्रपदाग्रसङ्गतिसुखा धन्याऽभवच्छ्रीरपि ॥ ६५ ॥
विप्रयोगस्तव[1] श्रीश सिद्ध एव श्रुतिष्विह ।
कृतः संप्रति यो योगः स सर्वाश्चर्यकार्यभूत् ॥ ६६ ॥
दौर्भाग्यादथवेच्छया तव विभो दुर्भोग्यमार्तं त्वति-
क्रान्तं कान्त कथञ्चिदाचर परं मैवं पुनर्जात्विति ।
स्वच्छन्दं[2] विशदं विधातुमनसस्तं प्रार्थयन्ति स्म ताः
स्वं स्वं वृत्तमिहानुभूतमखिलाः प्रख्यापयन्त्यस्तदा ॥ ६७ ॥
गोपस्येयं कन्यानास्याम्[3] । एवं कार्यं नेत्यालोचि ॥ ६८ ॥
चतुरक्षरपादं कन्यावृत्तमिदमग्रेऽप्येव-
मेकैकाक्षराधिकपादं वृत्तमीक्ष्यम् ।
काममनाथां स्त्रीजनपङ्क्तिं[4]
वीक्ष्य तवासीत् तद्वद चित्ते ॥ ६९ ॥
हरे तापशान्तिं[5] विधातुं न शक्ता ।
तदा सोमराजी तदिन्दोः कथा का ॥ ७० ॥

---

१ वियोगः, ब्राह्मणयोगश्च । २. स्वाभिप्रायम् । ३. वृत्तम् । ४. वृत्तम् । ५. वृत्तम् ।

आसीत् त्वद्रतियोगाच्चिरे मे सल्लेखा।
जीर्णा संप्रति सर्वा तन्मैवं कुरु भूयः ॥ ७१ ॥

तत्काले यच्छोभासौख्यं किं वा कीदृक् स्वामिन् वच्मि।
नो चेदब्दो विद्युन्मालो शोभालोपो लोके स्पष्टः ॥ ७२ ॥

विभो भवत्समागमं विनाऽखिलं ममाप्रियम्।
अभूदिति प्रमाणिकां गिरं ममावधारय ॥ ७३ ॥

दास्यजुषो मे गर्वलवं माधव यत्त्वं वीक्ष्य गतः।
सद्गुणलोपे पूर्णगतिस्तन्मणिसंध्यच्छिद्रसमः ॥ ७४ ॥

यद्यपि कापि दुःस्थितिर्नहि तत्र चित्रमण्वपि।
यदहं त्वयीश सम्भ्रमादभवं भुजङ्गसङ्गता ॥ ७५ ॥

यद्देवीभिः सदय न दृष्टं तत्ते लब्धं भुवि रतिसौख्यम्।
सत्यप्येवं स्मयमगमं यत्तन्मत्तोऽहं नहि तव मन्तुः ॥ ७६ ॥

विश्रम्भेण प्रीतिमादर्श्य पूर्वं पश्चात्त्यागो यत्कृतो वन्यवन्याम्।
एतत्साधु प्रायशः स्यात्तवैव नान्यत्रैवं शालिनी कृष्णनीतिः ॥७७॥

अस्तोकदम्भे तव विप्रलम्भे विश्रान्तिमत्यां मयि सम्भ्रमन्त्याम्।
प्रोत्फुल्लमल्ल्या कलिकायुधाल्या क्रूरेन्द्रवज्राधिकमन्वचेष्टि ॥७८॥

प्रोज्झिताऽहमिह यद्यपि त्वया त्वत्स्मृतिस्तु नहि मां जहौ विभो।
तत्तयैव विरहेऽपि तेऽभवं निर्गतार्तिक-मनोरथोद्धता॥७९॥

उपेन्द्र वज्राधिक-सारशाली ध्रुवं वियोगस्तव तत्प्रसङ्गे।
बभूव दीर्णः खलु धैर्यशैलः सहस्रशैलोन्नतवीर्यभारः ॥८०॥

सजातिवर्गोऽहमिवालिदुःखी विजातिवर्गस्तु न च प्रवक्ति।
वक्तेश भूयादुप जातिभेद-स्तदाशयात् तत्र मयाऽवतस्थे ॥ ८१ ॥

अवरं वरमेव वा कृतं भवता तस्य निरूपणेन किम्।
कुरु नैवमितः परं क्वचिदिति कापीशमुवाच सुन्दरी ॥ ८२ ॥

१. मदपङ्क्तिः, वृत्तं च। २. वृत्तम्। ३ वृत्तम्। ४. वृत्तभेदः। ५. वृत्तं भुजङ्गेति सम्बोधनं च। ६. वृत्तम्। ७. वृत्तम्। ८. वृत्तम्। ९. वृत्तम्। १०. उपेन्द्रेति सम्बोधनं वृत्तं च। ११. वृत्तम्। १२. वृत्तम्।

सरलधीरहं वक्रबुद्धिना निशि वने त्वया कृष्ण मोचिता ।
तदनु दुर्दशा मे तथाऽभवत् कनक[1]मञ्जरीभक्षणे यथा ॥ ८३ ॥

को विहाय निशि निर्दयचेताः कामिनीं स्वयमुपाश्रितपादाम् ।
स्वा[2]गतेति च वदेद् गतलज्जस्त्वां विनेति वद तत्त्वमिह त्वम् ॥ ८४ ॥

पद्मि[3]न्या यन्मधुररसभृतो भोगस्त्यागस्तदनु किल जने ।
सिद्धं त्वेतद् भ्रमर[4]विलसितं तत्ते वाच्यं किमभिनवगिरा ॥ ८५ ॥

यावन्नासीद् भगवन्मञ्जुमूर्[5]तेः प्रत्यक्षं ते विपिने तावदेषा ।
वातो[6]र्मीभिस्तरणीवाब्धिमध्ये जाता भूयस्तरलाङ्गी भ्रमन्ती ॥ ८६ ॥

सत्यनुकू[7]लाऽस्म्यहमपि नित्यं यत्तव कृत्यं मयि रिपुतुल्यम् ।
तद्वद सत्यं सकपटचेतस्तत्प्रतिकूलं व्यरचि कुतस्ते ॥ ८७ ॥

कुलादिमस्तेऽपि जहाति कामिनीमजस्रमेकां प्रतिनक्तमृक्षपः ।
अदोष एवास्मदुपेक्षणे तव त्वदीय-वंश[8]स्थ-चरित्रमीदृशाम् ॥ ८८ ॥

लघु तमालमवेक्ष्य भवानिति भ्रमितया द्रुतमापि तदन्तिकम् ।
त्वमसि नेति विभाव्य विलम्बितं द्रुत[9]विलम्बितवृत्तमभून्मम ॥ ८९ ॥

विरहे यदापि तव नाथ मया किमु तत्स्मरामि च वदामि मुहुः ।
प्रमिता[10]क्षरैरयमिति ते विदिते छलिताक्षरैश्छलयसीह कुतः ॥ ९० ॥

इह निशि माधव पश्य षट्पद-
स्त्यजति पतन्नपि नैव मा[11]लतीम् ।
स्थितचतुरोऽपि भवान्विहाय मां
वदति गतत्रप-मेतदद्भुतम् ॥ ९१ ॥

भवति यथा रविसङ्गमशून्यं
मृदुतर-ताम[12]रसं करुणाब्धे ।
तव विरहेण तथा मम चेतो-
ऽभवदधिकं किमु ते कथयामि ॥ ९२ ॥

---

१. धत्तूरमञ्जरी वृत्तं च । २. वृत्तम् । ३. स्त्रीजातिः । ४. कामुक-विलसितं वृत्तं च । ५. वृत्तम् । ६. वृत्तम् । ७. अश्विन्यादिनक्षत्रम् । ८. वृत्तम् । ९. वृत्तम् । १०. मितभाषिणी वृत्तं च । ११. वृत्तम् । १२. वृत्तम् ।

मृदुतमगात्रे रतिरसपात्रे
सकपटमात्रे त्वयि कृतयात्रे।
इयमपि गोत्रा कुसुमविचित्रा
सदयममात्राऽऽसदवचरित्रा ॥ ९३ ॥

चन्द्राधिकशैत्यां वक्षोमणिमालां
कामानलकीलाप्लुष्टां किल जाताम्।
पश्यन्नपि यत्त्वं पृच्छस्यतिमात्रं
शोभास्पदमेतद् गोविन्द तवैव ॥ ९४ ॥

आसीद्योऽर्वाक् तव विरहात्मादावो
नास्योच्छित्त्यै जलधरमालापीशा।
किं तद्रूपं यदुवर तज्जां पीडां
ब्रूयामेतत् त्वमपि सखे मा पृच्छ ॥ ९५ ॥

त्वदीयां गतिं को वदेदत्र सत्या-
मिति च्छन्नबुद्धे विभाव्यां ततोऽहम्।
भुजङ्गप्रयातं भुजङ्गा विदन्ती-
त्यपृच्छं तदा पल्लवानेव भूयः ॥ ९६ ॥

कृष्णवर्त्म तव नाधिगतमहो
कुञ्जवर्त्मनि लताधिकललिते।
कृष्णवर्त्म-सदृगास यदुपते
चन्द्रवर्त्म किमु वच्मि तदपरम् ॥ ९७ ॥

पीयूषदानोज्ज्वल शीतदीधिते-
र्वंश्येन कार्यं नहि वज्रताडनम्।
तादृङ्मनीषा यदि चेतसि स्थिता
तच्चेन्द्रवंशोद्भवता न किं धृता ॥ ९८ ॥

---

१. पृथ्वी। २. वृत्तम्। ३. वृत्तम्। ४. वृत्तम्। ५. जारगमनं वृत्तं च। ६. जारान् पल्लवविशिष्टवृक्षांश्च। ७. अग्निसदृशम्। ८. चन्द्रमार्गः, वृत्तं च। ९. वृत्तम्।

तवाऽऽस हृदयं यदा[1] पविपदं
समापि तदलं तदाऽऽप विपदम् ।
ततस्तु मनसा मया व्यवसितं
हरेऽस्तु शरणं जलोद्धतगतिः[2] ॥ ९९ ॥

पद्मिन्यस्तव विरहेण दूनचित्ता-
मालोक्य प्रियतम मामसौख्यमापुः ।
कस्माद्वा विधुरमणी स्वभावयोगा-
देकैव प्रकटमभूत् प्रहर्षिणीयम्[3] ॥ १०० ॥

स्थितिस्तु मे कथमपि दैवयोगतः
समागता किमु तव चिन्तयाऽनया ।
पराङ्गना - नयनविडम्बनोत्सुका
हरे तवैव च रुचिरा[4] स्थितिरित्वयम् ॥ १०१ ॥

यदकृत वनभुवि गोपनलीलां तदखिलमभिमतमाकलितं मे ।
अविरतमियमहमस्मि च चण्डी रमयभरद्युतिरिति कार्यमवैमि ॥१०२॥

विकलमविकलं वस्तु वाऽऽस्तां कथं
तव विरहजुषो मे न खेदाय तत् ।
निखिल-सुखकरी चन्द्रिका[6] तापदा
समभवदिति मेऽभूत्तदा विस्मयः ॥ १०३ ॥

कलहं सदा कृतवती सह केला-
वियमेव - मित्यतनुताप - मवाप्य ।
मम मानसं सुकलहंस तदानीं
कलहंसताऽनुगुणमेव चचार ॥ १०४ ॥

मदधीन एव भगवानिति स्मयात्
कलिताऽस्मि पूर्वमिह मादलिद्रया ।
विरहो न चैष करुणैव केवला
यदहं ततो झटिति सुप्रबोधिता ॥ १०५ ॥

---

१. पविवत् पदं व्यवसायो यस्य तत्कठिनमित्यर्थः । २. वृत्तम् । ३. वृत्तम् । ४. वृत्तभेदः । ५. वृत्तम् । ६. वृत्तम् । ७. वृत्तम् । ८. वृत्तम् ।

अयि नाथ नाथ कथनेन किं वृथा
विरहे तवापि हृदयेऽनया व्यथा।
कचिदप्यरेरपि हरे न सास्त्विति
तमुवाच कापि किल मञ्जुभाषिणी ॥ १०६ ॥

किमु सदय वदामि तामवस्थां
नियतिवशादिह या मयाऽऽपि देव।
विपिनभुवि लता हि पुष्पिताग्रा-
दवकलिता यदि तत्कथं वद स्यात् ॥ १०७ ॥

मेघश्यामे त्वय्यपिधानं किल याते
संभ्रान्तायां चेतसि चेतोजनिना च।
आसीदस्मिन्नाथ नवावस्थितिसूची
भूयो भूयो मत्तमयूराभिध एषः ॥ १०८ ॥

कुञ्जः प्रचण्डतरुमण्डलमण्डितोऽपि
दृष्टः पुरा तवबियोग-दवाग्निदग्धः।
पश्यामि संप्रति तु भव्यमतो ह्यसङ्गः
सङ्गो वसन्ततिलकस्य तवात्र हेतुः ॥ १०९ ॥

कुत्राक्रामि श्रीश किमु कृतं चेतः सौख्यं
कस्मादासीत् कैतवजलधे नाहं वच्मि।
मद्वृत्ते चेत्ते किल हृदयं प्राप्ताशङ्कं
साक्षीभूता कीर्तयतुतरां वासन्तीयम् ॥ ११० ॥

सकल - सुरवराश्चर्यकृच्छोभमानं
मधुरतर - वने नाटकं दर्शयिष्ये।
इति यदभिहितं तद्विधातुं यथार्थं
किमिह विरहतोऽकारि नान्दीमुखीयम् ॥ १११ ॥

---

१. प्राप्ता। २. वृत्तम्। ३. वृत्तम्। ४. तिरोधानम्। ५. वृत्तम्। ६. वसन्तस्य तिलकः शोभाप्रद इत्यर्थं, वृत्तं च। ७. लताविशेषो वृत्तं च। ८. नान्दीमुखसम्बन्धि मङ्गलपाठरूपं कर्म, वृत्तं च।

विषमविरहदुःखक्लान्तचित्ता यदाऽह-
मभवमतनुपीडाभाजनं पूतनारे ।
तदनु च गतिरत्र स्यात्कथं तन्न जाने
भुवि यदि न दया ते मालिनी[1] लग्नकः स्यात् ॥ ११२ ॥

पद्मनेत्र यत्त्वयाऽत्र[2] पत्रिपात्रतामिहानायि
विप्रलम्भकस्य शम्बरासु[3]रद्विषः ।
एकतस्तदेतदुत्तमं बभूव भो विभो
मुक्तबाण ऐक्षतैष रिक्तमात्मतूर्णकम्[4] ॥ ११३ ॥

कल्पवृक्ष - कामधेनु- कौस्तुभादिकामितार्थ-
पूरकाद्य हृद्यकर्तिशालि पादपद्मयुग्म ।
त्वां श्रितोऽपि दुःखभागभूदयं जनो न किं हि
चित्र[5]मत्र विष्टपे पतत्रिराजकेतनाङ्क ॥ ११४ ॥

धम्मिलस्थः कुसुमनिचयो माला गलगता
पत्रन्यासोऽप्यभिनव-सुमालङ्कार - रचना ।
विभ्रष्टाऽभूत्तव हि विरहे किं वच्मि तदिदं
नाम्नैवाऽऽसं मद[6]नललिता तत्कालमवशा ॥ ११५ ॥

यज्जङ्घालान्यहमिह विभो महाविरहाचल-
भाराक्रान्ता पदमपि न चाभवं चलितुं क्षमा ।
श्रीनाथाम्भोधरतनुरुचे कृपाजलधे मम
तत्किं वृत्तं विरहविहितं मुधा परिपृच्छसि ॥ ११६ ॥

आनन्दानां त्वमसि महतां भाजनं घोषभाजां
नन्दादीनामिति यदुपते भावि भव्यं विभाव्य ।
स्फूर्जद्दावाग्न्यधिक-विरहावस्थितिः स्वस्थ यामे
मन्द्राक्रान्ता कथमपि कृता धैर्यपीयूषवृष्ट्या ॥ ११७ ॥

---

१ मालाकारस्त्री वृत्तं च । २. बाणाः । ३. कामस्य । ४. तूणीरं वृत्तं च । ५. वृतम् ६. वृतम् । ७. वृतम् । ८. वृतम् ।

हरेरियमतिप्रिया भवति मद्धृतिं कुर्वतः
सुदीनजनशेखरायितपदेति मत्वाऽथवा।
त्वदीक्षणकृते मुहुर्भ्रमितचेतसे शोभिता-
न्यदर्शयदियं च मे तव पदानि [1]पृथ्वी सखे ॥ ११८ ॥

ससितमसितं निम्नानिम्नं ह्यकण्टकिकण्टकि
सजलमजलं साश्मानाश्मस्थलं न विलोकितम्।
तव पदयुगावेक्षोत्कण्ठा-ससंभ्रमया मया
मुहुरिह कृतं देवेशैकं तदा [2]हरिणीप्लुतम् ॥ ११९ ॥

सदैव त्वद्वासोऽचनिभृति वरीवर्ति भगव-
न्निति प्राग्भ्योऽश्रावि प्रकटमनुभूतं गिरिमखे।
हरेऽन्यत्संत्यज्य स्थलमखिलमस्मिन् शिख[3]रिणी-
स्थलं भ्रान्तं क्लेशः स तु सदयवाचामविषयः ॥ १२० ॥

श्रीमन्नाथासीद्विरहविकलावस्थितौ दुर्धरायां
मय्यर्वागर्थी स्मृतिरविकला सोत्त[4]राशाभिलाषा।
केव्यहो भूमिः कुसु[5]मितलतावेल्लितामण्डपाली
तावद्दृष्टाऽथो त्वयि कृतमतिर्नैव जानामि किञ्चित् ॥ १२१ ॥

प्राप्तायां भगवंस्त्वदङ्घ्रिविरहक्लेशं भ्रमन्त्यां मयि
किं किं वाचरितं न चेष्टितमतिक्रूरं मनोजन्मना।
वक्तुं तन्निखिलं तु नास्मि कुशला जानीहि तद्यन्मृगी-
बाले नायककृष्णसाररहिते शार्दू[6]लविक्रीडितम् ॥ १२२ ॥

विधायाप्तोन्मुक्तां पतिसुतसदनेभ्योऽपि विभ्रंशिताशा-
मटव्यां निश्चयस्यां भयकृतिपशुभिः क्रूरशब्दप्रचारैः।
यदानीयाकार्षीर्विरहदवशिखा स्पर्शसौख्यानुभूतां
ततः शोभाँकीर्तिः [7]किमु तवमिलिता कृष्ण तन्नैव जाने ॥ १२३ ॥

---

१. वृत्तम्। २. वृत्तं हरिणीव गमनं च। ३. पर्वते वृत्तं च। ४. सेति च्छेदः उत्तराशाप्रयुक्तोऽभिलाषो यस्याः सेत्युत्तरान्वयि। ५. वृतम्। ६. वृत्तं व्याघ्रक्रीडितं च। ७. वृत्तम्।

श्रीकान्तानन्तकान्ते तवपदविरहक्लेशवार्धावगाधे
दुर्लङ्ध्येऽनेकचञ्चन्मनसि जलहरीराशिदुर्लक्ष्यमध्ये ।
मग्नाया मे न कश्चित्समभवदवनौ त्राणकर्ता तदानी-
मासीदेकं तु मूर्तेस्तव कुशलकरं चिन्तनं स्रग्धरायाः॥ १२४ ॥

दुःसहदुःखदनायककेलिवियोग-महामदिराविवशा
माधव यद्यपि शून्यमना अहमासमिहेतरकृत्यपदे ।
केशव-माधव-वामन सज्जनवाञ्छितभव्यददेहधृते
सुन्दरगात्रचरित्र तथापि तवास मुखे मम नाम सखे॥ १२५ ॥

यस्याः प्रसादयोगात्त्वदङ्घ्रियोगो ममास सुलभतरोर्वाक् ।
त्वद्विरहदुःखहत्यै तामेवास्तुवमहं तदागीत्यार्याम् ॥ १२६ ॥

अलमीशभिन्नवृत्तोत्कीर्तनतस्तत्त्वतस्तदाऽस्माभिः ।
समलङ्कृतः ससमयस्त्वत्पदपद्मप्रसादगीत्यैवं ॥ १२७ ॥

[ एतदन्तवृत्तलक्षणनामानि छन्दोमञ्जर्यां द्रष्टव्यानि । ]

जगन्नायकस्त्वं वयं गोपिकाः
स्स्ततः कान्तता चावयोरेकरूपा ।
अमन्तुर्यदस्मत्परित्याग आरात्
कृतस्तत्र वैरूप्यमालोकितं किम् ॥ १२८ ॥

वयं श्यामाः श्यामस्त्वमपि गजराजेडितगति-
र्वयं भूयः पद्मोल्लसितचरणस्त्वं वयमपि ।
सुकेशाँस्तुल्यस्त्वं वयमपि किमालोकितमहो
तदस्माकं त्यागे सदय वद बीजं यदि भवेत् ॥ १२९ ॥

नवीर्नवाहाऽसि च वीनवाहः
प्रवासिनी त्वं त्वसि विप्रवासी ।
रात्रिस्थिताऽरात्रिचरस्तुतोऽहं
वैरूप्यमेतद्धृदि वाऽऽगतं ते ॥ १३० ॥

---

१. वृत्तम् । २. वृत्तम् । ३. आर्याभेदः गीत्येतिच्छेदः, आर्यां कात्यायनीम् । ४. आर्याभेदः गायनेन च । ५. सुन्दरता ककारान्तता च । ६. कृष्णाः षोडशवार्षिक्यश्च । ७. ब्रह्मशिवौ शोभनकेशाश्च । ८. बाहुः । ९. गरुडः ।

विवाहितस्त्वं च विवाहिताऽहं
विशेषकेभ्योऽसि तथाविधाऽहम् ।
त्वं मीनभूपश्च समीनकेतु
रहं ततः साध्विदमस्ति साम्यम् ॥ १३१ ॥

हृत्वा पयोधरघटं सदने प्रयासि
धृत्वा पयोधरघटं विपिनेऽपि यातः ।
मन्ये पयोधरघटाधिक-शोभमान-
सर्वाङ्गतस्त्वमधुना बहुधा कृतार्थः ॥ १३२ ॥

कुञ्जः पुञ्जस्तरूणामपि च मनसिजः कञ्जमञ्जो द्विजाश्चा-
प्येतेषामन्त्यजानामुचितमकरुणं यद्भवां क्लेशदत्वम् ।
कान्तः शान्तश्च दान्तस्त्वमसि निखिलगोपालकः श्रीश शश्व-
च्छ्रीमद्गोविन्द तासां समुचितमवनं किं तवोपेक्षणं वा ॥ १३३ ॥

विलोक्य दुःखं दृषदः स्फुटन्ति नः
कथं दयाब्धे न दया तवोदिता ।
न दुःखमेवाकलितं त्वयाऽथवा
ध्रुवं हि सर्वं सहता विलासिना ॥ १३४ ॥

हंसस्त्वमित्यभिहितं मुनिभिर्महद्भि-
स्तन्मानसे विहरणं तव जन्मसिद्धम् ।
कृष्णस्वरूपभृदपत्रपयेति विद्मो
नेहागतोऽसि बत नः शुभमानसेषु ॥ १३५ ॥

विप्रप्रियाऽरतिपरेण पुरा मुरारे-
ऽकारि त्वया समुचितः सहि विप्रलम्भः ।
प्राप्ता सुविप्रसवभाक्ष्वपि चासुदेय-
इत्याशयो यदि तवेश तदर्ह एव ॥ १३६ ॥

---

१. गरुडशेषब्रह्मस्तुतः तिलकैर्नेड्या च । २. मेघसमूहः । ३. नीचानाम्, अन्त्यः जकारो येषां तेषाञ्च । ४. ककारादिवर्णास्तत्तन्नाम्नां गोपालकादीनामन्ते यस्य सः । ५. प्रसवाभावः, विप्राणां सवश्च ।

यास्त्वामनन्यशरणाः शरणं प्रयाता
याश्च त्वयापि भणिताः प्रकटं मदीयाः ।
त्यागस्ततो बत कृतः किमवैक्षि नाथ
श्रेयः स्वकीयमथवा गतिरत्र तासाम् ॥ १३७ ॥

अहं हरि[1]रिति स्मयो मनसि चेदखर्वस्तव
प्रभो स्फुटमलङ्कुरु द्विषदनेक[2]पानां कुले ।
असह्यविरहानलोज्ज्वलशिखाकलापाकुले
प्रदर्शयसि किं वृथा नरहरे मृगीणां गणे ॥ १३८ ॥

विनोदोऽपि श्रीमन्नहि निरवधिः क्वापि गदितो
यतः क्लेशोऽन्यस्योद्भवति नितरां दुर्वहतरः ।
त्वयोपक्रान्तोऽयं स तु मृदुविसान्तर्विलसितै-
र्गुणैर्द्रेमू[3]लाकलन - सुपलेवाऽशनिहतिः ॥ १३९ ॥

विधाय निजगोपनं निजपदाब्जभाजो निजा
अनायिषत दुर्धरां विपदमिन्दिराधीश यत् ।
न भाति सहि धर्म इत्यखिलशिष्टविद्वन्मतो
भवेद्यदि विशारदं सपदि तत्प्रमाणं भण ॥ १४० ॥

सु[4]धाऽल्पकणमेलनं यदि भवेन्निशांशेऽपि तत्
प्रसिद्धमवनौ ततो भवति रक्तिमेति स्फुटम् ।
सुधाकरसमागमोऽजनि बृहन्निशायामिह
भवत्यतनुरक्तिमा न कथमीश तद्दृश्यताम् ॥ १४१ ॥

नखमुखेन्दुमुखप्रसृतं सती[5] द्वयमभूत्सरसं तव गोपते ।
स्फुटतमा प्रथमा तु जगत्त्रये तदपरामधुना श्रुतिगां कुरु ॥ १४२ ॥

अथो सुगीतं हरि[6]र्णान्तरङ्गभू
प्रोत्साहि चाकर्ण्य गुहागतेन हि ।

१. सिंहो विष्णुश्च । २. गजानां राज्ञां च । ३. चूर्णम् । ४. हरिद्रा ।
५. भागीरथी वेदवाणी च । ६. हरिणा हरिणाश्चेति ।

पञ्चाननाग्र्येण सतीव्रतापितः
स्वकाननादप्युदपादि सद्रवः ॥ १४३ ॥

आकर्ण्यासां भिन्नभिन्नोक्तिवृत्तं
विज्ञायापि स्वैकपादाब्जसक्तिम् ।
नित्यानन्दोऽप्यच्युतस्तत्सुखार्थं
पूर्वं वाचाश्लेषमङ्गीचकार ॥ १४४ ॥

अधिकवितततया गिरा वद त्वं तदधिकवीक्षितया दृशानुपश्य ।
समधिकविनयाथवा भवास्मिन्नधिकविभाववशोऽस्मि सर्वदैव ॥१४५॥

शुभदयादृशा वरदया गिरा
विमदया धिया बहुदयाभया ।
सुखदया श्रिया चापि संश्रित-
मदय इत्ययं वदसि मां कथम् ॥ १४६ ॥

मिष्टान्नमप्यविरतं यदनादरस्तत्
सञ्जायते नियतमित्यबले मयैतत् ।
तक्रं ह्यकल्पि विरहात्मकमन्तरे तत्
स्वादार्थमित्युपकृतिज्ञमवेहि मां त्वम् ॥ १४७ ॥

सर्वस्वं यददायि वादकुशले मह्यं त्वया तन्मया
चेन्नादायि मुदा तदा न भविता मत्तः कृतघ्नः परः ।
मत्सर्वस्वगतो मदीयविरहोऽपीत्यर्पितो गर्वत-
स्तत् किं गर्हयसे कृतघ्न इति मां मुग्धे कृतज्ञं सदा ॥ १४८ ॥

उन्मार्ष्टुं मणिदर्पणादि मलिनं भस्मादिकं लाप्यते
लोकैरेवमहो मयाऽत्र विरहात्मा भूतिरेषाऽर्पिता ।
युष्मन्मानससन्मणिस्थित-महामानैक-मालिन्यवि-
ध्वस्त्यै दीप्तिकरीत्यलं हितकरं मां प्रत्युपात्तोक्तिभिः ॥ १४९ ॥

१. सिंहः शङ्करस्य । २. सतीनां व्रतं तेन आपितः सः, तीव्रतापित इति च च्छेदः । ३. स्वस्य काननं स्वमुखं च । ४. आश्लेषं श्लेषालङ्कारं च । ५. अधिकं वितता, अधीतिच्छेदश्च, एवमग्रेऽपि ।

श्रीमत्सरस्थितिरियं त्वयि भासमाना
युक्ता मदाश्रयतयेति सुतन्वि मन्ये ।
कामं समुज्ज्वल-गुणान्वयशोभमान-
मुक्तौघभूषणतयाऽपि च पद्मनेत्रे ॥ १५० ॥

खगाधिपतिकेतनोऽनिशमहं वियुक्तोऽस्म्यत-
स्त्वयापि समया मया जगति साम्यमेतद्धिया ।
क्षणं किल वियोजिता सुतनु तद्विमुक्ताऽमुने-
त्यलं तवधियाऽनया वितथया रुषाऽपि प्रिये ॥ १५१ ॥

सङ्गो मदीयः सचराचरेऽस्मि-
न्नस्त्येव नित्यं हि मनोज्ञरूपः ।
असङ्गभावोऽपि हि सौत्यनङ्ग-
भावं ततोऽदर्शुभयं मया ते ॥ १५२ ॥

योगो मदीयः सकलेषु भूतेष्वास्ते प्रिये तन्मयि सर्वयुक्ते ।
यत्त्वं वियोगं स्वमनोनिविष्ट-मारोपयस्यत्र तु किं वदामि ॥ १५३ ॥

विप्रलभ्य इति मां निगमोऽपि स्तौति नित्यमविवादपदज्ञः ।
विप्रलभ्य इति मां यदवादीस्तच्च दूषणमलं किल भूषा ॥ १५४ ॥

आलस्येशदयामनामयभयां दीनावनेनाऽधुना
शुद्धं तद्धि यशश्चिनुष्व भविता यद्गीयमानं जनैः ।
इत्युक्तोऽपि मुहुस्त्वया प्रियतमे नैवागमं यत्तदा
तद्बीज तु यशोदयाश्रिततया स्याद्विद्धि ईदृग्रसे ॥ १५५ ॥

गुर्वादिसर्वाप्तजनाश्रिते गृहे
युक्ता प्रिये तद्भयतो रहःस्थितिः ।
तर्वादिचार्वायत - पर्वतालये
ऽनन्योदयेऽसौ विरहस्थितिः कृता ॥ १५६ ॥

१. श्रीविषये मत्सरः श्रीमान् सरोहारश्च । २. मदस्य मम चाश्रयः । ३. वियोगं प्रापिता, विना गरुडेन योजिता च । ४. वञ्चितः ब्राह्मणलब्धश्च । ५. विगतरहाः विरहश्च ।

अपहृतमबलायास्तेऽम्बरं यत्तटिन्यां
तदुपजनित-रोषध्वस्तये मुग्धबुद्धे।
तदधिकपटदाने सादरस्तूर्णमासं
तदधिकपटवाचा किं वृथा मां दुनोषि ॥ १५७ ॥

अमायां नैवास्मत्कुलगुरुरभिस्थास्यति विधुः
कथङ्कारं स्थेयं कुलतिलकभूतेन हि तथा।
ततो मायावासः श्रुतिगुणनुतो मे ह्यभिमतः
कुतोऽतस्त्वं मायाश्रित इति वृथा भ्रान्तिरिह ते ॥ १५८ ॥

अलंमविरतयो रथाङ्गनाम्नोः
सखि वयसो रसविच्युतिः स्फुटाऽस्ति।
प्रभवतु न तथाऽऽवयोर्धरण्या-
मिति विरतिर्धुवमन्तरा कृता मे ॥ १५९ ॥

अयामिह स्थितिमानपि सर्वदा
न ददृशे सुदृशाऽपि च यत्त्वया।
तदयमङ्गपदस्य समन्वय-
स्त्वयि भवत्युत पश्य मयीत्यलम् ॥ १६० ॥

या पापवृत्ति-र्भवभोगदात्री
मद्भक्तिभाजामिह तां धुनोमि।
ततः प्रसिद्धैव सुसाधुता मे
या साधुता तन्वि निजा त्वयैव ॥ १६१ ॥

प्रतारकोऽहं भववारिधौ तत् सर्वे नमस्यन्ति जना मदङ्घ्रिम्।
न चेद्गुणं पश्यसि दोषदृष्ट्या तत्किं ब्रवे धन्यमतिस्त्वमेव ॥१६२॥

काठिन्यं सुघनस्तनि स्तनजनिव्यक्तं स्वचेतःस्थितं
यत्संछाद्य मदीयचेतसि मृदुन्यारोप्यते तद्धठात्।

१. अधिकम्, अधीति च च्छेदः। २. अमावास्यायां माया नेति च। ३. सूर्यरतयोः, न विरतयोश्च। ४. पक्षिणोः। ५. निरस्ता। ६. वञ्चकः, प्रकृष्टतारकश्च।

स्त्रीजातेस्तव नेदमद्भुतमहो यन्नाम विद्वानपि
स्वं दोषं गिरितुल्यमप्यलमसौ ज्ञातुं न दक्षः क्षितौ ॥ १६३ ॥

नानालतोदित भुजे भवतीसमाजे
यत्प्रेमतस्तिलकवद् विहराम्यजस्रम् ।
तद्धर्तचक्रतिलको भवसीति वाक्यं
धूर्ता भवत्य इति सौत्यबलाः स्वमर्थम् ॥ १६४ ॥

अरङ्केशभर्तेति[1] रङ्केशहर्ते-[2]
त्यजस्रं सहस्रं जना मां वदन्ति ।
सुगात्रि त्वमेकाऽत्र चित्तं प्रवक्तुं
प्रगल्भाऽसि यन्मां हि रङ्कं ब्रवीषि ॥ १६५ ॥

मद्गौरवं स्फुटमपि ह्यनवेक्ष्य लोके
यद्वक्रतां त्वमुपपादयसि प्रिये मे ।
नेदं तवाग इह किं त्वनवेक्षितेषत्-
सद्वृत्त[3]पद्धतिमतेः फलमीदृगेव ॥ १६६ ॥

तन्वि ये चपल[4]वृत्तयोऽरयस्तान्प्रहर्तुमहमस्मि दीक्षितः ।
तं च मां चपलवृत्तिरित्यदो वक्तुमुच्चलति ते कथं मनः ॥ १६७ ॥

या लोकैरखिलैरलीकवचनेष्वापाद्यते सर्वदा
तां चेत्त्वं खलतां मयि प्रियतमे सम्प्रत्यलं पश्यसि ।
तत्ते दृष्टिरलीकदर्शनचणा कैर्वा न वर्ण्या भवेत्
स्पष्टं ते मन एव वा सुखल[5]ताक्रान्तं दरीदृश्यते ॥ १६८ ॥

विश्वास्यहंता[6] तु निखिलश्रुतिगोचरा मे
कान्ते कथं श्रुतिपथं तव न प्रयाता ।
आस्तामितोऽपि मम मारतमेव पृच्छ
पश्चाद्वदिष्यसि यथा तदहं शृणोमि ॥ १६९ ॥

---

१. रङ्केशभर्ता नेति । २. पक्षे लङ्केशहर्ता । ३. चरित्रं पद्यं च । ४. चञ्चला, चेति च्छेदश्च, पलं मांसम् । ५. सुखरतं खलत्वं च । ६. विश्वासार्हता विश्वमुखत्वं च ।

ज्ञातं मयैव विदितोऽहमिह त्वयेति
संदृश्यते त्वयि यतो हि विदेहभावः।
ज्ञातो मया त्वमसि यादृगिति स्ववाचा
कान्ते किमर्थमधुनाऽऽकुलयस्यलं माम् ॥ १७० ॥

न तापकर्ता न नतापकर्ता
कदाप्यहं स्यामिति मे प्रतिज्ञा।
अनङ्गतापाकुलिताऽपि सुभ्रु
कस्मात्त्वमेनां वितथां करोषि ॥ १७१ ॥

आदावविश्रान्त - मुदारतोरु
चमत्कृतिं सुन्दरि मे प्रदर्शय।
पश्चान्मदीयं किल शाठ्यवर्णनं
कृतं त्वया योग्यमहो भविष्यति ॥ १७२ ॥

मयि सप्रमदत्वमीक्षसे त्वं
तदिदं बाढमिदं तु चिन्तयाऽन्तः।
अपि दीर्घदृशा विशालनेत्रे
सहिते वा रहितेऽथवा त्वयैतत् ॥ १७३ ॥

श्यामा बहिस्त्वं वयसाऽपि काममन्तर्बहिर्लक्षितकृष्णरूपा।
बहिर्दृशा केवलकृष्णरूपं किं मामुपालम्भपदं करोषि ॥ १७४ ॥

यद्यत्कृतं तस्य विभो प्रतिक्रियां
श्वो दर्शयिष्यामि निकेतने तव।
आस्तामियं ते ललने विभीषिका
लोके प्रसिद्धो यदहं विकेतनः ॥ १७५ ॥

मह्यमर्पयति नो स वञ्चकस्तेन संतरति नो भवञ्चकः।
दृष्टवत्यसि जनं नवञ्चकं येन मां वदसि तन्वि वञ्चकम् ॥ १७६ ॥

अलमलमलघुप्रलम्भवाक्यै-
रिति वितथं सखि मां न गर्हय त्वम्।

---

१. अविश्रान्तम् अविश्रान्तमुदेति च च्छेदः। २. विगतगृहो गरुडध्वजश्च।

रणरणंकरणे कथं न भाव्य-
मधिकंवचस्थितिना मयेति पश्य ॥ १७७ ॥

किमर्थमागा इह माधव त्व-
मेवं प्रिये मा वद मुग्धभावात् ।
यतोऽवतारो मम सर्वदैव
सिद्धो जगत्यां सुरतोदयाय ॥ १७८ ॥

किमत्र संपादितमीश यत्त्वया
निशा विशाला गमिताऽनया दिशा ।
न चालयेदं हृदि सौख्यदं यतो
निशांन्तमेवाऽकरवं कृशोदरि ॥ १७९ ॥

माँ सङ्गतां कुरु सदैव मया रमस्व
मामेव सन्ततमनन्तसुखां कुरुष्व ।
त्वन्मात्रहार्दमतिरञ्जितमानसं मा-
मेवं मुधा बत सुधांशुमुखि ब्रवीषि ॥ १८० ॥

त्वं चोरोऽस्यभिहितमत्र यत्तदास्ता-
मुँच्चोरस्थितिरिह कस्य पश्य पूर्णम् ।
अस्त्वन्यत्सखि मम पश्यतोऽपि चेतो
लीलातो हृतमिति सम्प्रति प्रतीतम् ॥ १८१ ॥

वैलासिकी कुशलता मयि याऽस्ति सुभ्रूः
सर्वापि सा तव समागमतो हि लब्धा ।
इत्थं मयैव मुखतः स्वयमुच्यमाने
मँत्तो विहाररसिकस्त्विति किं ब्रवीषि ॥ १८२ ॥

---

१. कामः । २. अधिका वचः स्थितिर्यस्य, पक्षे अधीति च्छेदः । ३. निशाया अन्तो गृहं च । ४. लक्ष्मीम्, पक्षे अस्मच्छब्दवाच्याम्; एवमग्रेऽपि । ५. उत्कृष्टचोरः उच्चमुरश्च । ६. मत्सकाशात् उन्मत्तश्च ।

कान्ते यस्मादधिकं[1]मलिनीभाव मङ्गीकरोषि
त्वय्येवातः सखि समुचिता सौरं[2]भानुप्रवृत्ति।
तस्मात् संप्रत्यधिकविलसद्भावमङ्गीकुरुष्व
भूयादर्थाद् द्विजवरमहावंशभागीशयोगः ॥ १८३ ॥

अहीनं[3]वृत्तिः सखिहीनं[4]वृत्ति-
र्नित्योऽहमस्मीति जगत्प्रसिद्धम्।
त्वमन्तरालोच्य पुनः स्ववृत्तं
यथाऽसि तथैव भजस्व कामम् ॥ १८४ ॥

वाचाल[5]ताश्रयणमेतदलं पुरस्ता-
द्यत्कामिनि त्वमवदोऽवगतस्तदर्थः।
शारीरकं रतमिहेच्छसितद्दिशामि
दासोऽस्मि ते तदलमुज्ज्वलकोपितेन ॥ १८५ ॥

कुशलोऽस्यधिकवचःस्थितिमतिमतिरसिकः पराङ्ग[6]नाशरणे।
तद्दर्शय कुशलत्वं शरणजनक्लेश[7]हरणतः सद्यः ॥ १८६ ॥

भजत इति : १०.३२.१६.

निजाङ्घ्रिभजनोन्मुखं जनमवेक्ष्य कश्चिद्व्रज-
त्यहो तमिह कश्चनाभजकमप्यलं सेवते।
सदैव भजतोऽपि यो भजति नैषदन्यान् कुतः
तदस्य गणनां भवेद्भुवि कृतघ्नकोटौ न किम् ॥ १८७ ॥

शुद्धे परात्मन्यपि जल्पयन् रजो-
गुणं ततस्तं स्वगुरुं विधाय च।

---

१. अधिकं कमलिनीत्वम् अलिनीत्वं च, अधीतिच्छेदः कमलिनीत्वं च। २. अकारप्रश्लेषाद् अरमणीयत्वं सौगन्ध्यं सूर्यकिरणाश्च। ३. हीतिच्छेदः, इनः सूर्यः; पक्षे अधमवृत्तिः। ४. शेषशायी प० उत्तमवृत्तिः। ५. वाचालस्य भावः, वाचेतिच्छेदः, रताश्रयणम्। ६. परस्त्रीरक्षणे, प० पराङ्गनाशश्चासौ रणः। ७. क्लेशानां हरणतः, क्लेशान् हन्ति स चासौरणश्च।

स्वकल्पना - ऽपोहनमाचरेदिति

तथा - ऽऽसनस्थेश्वरपृच्छयाऽध्वनि ॥ १८८ ॥

मिथो भजन्तीति : १०.३२.१७.

यः स्वस्मिन् पूर्णकामो भवति युवतयः सर्वदा तेन पुंसा
कस्माद्वाऽस्मिन्विधेया प्रतिपदविविधक्लेशदाऽन्यस्य सेवा ।
ये नामैवंस्थितस्याप्यनिशमपचितिं कुर्वते तत्त एव
प्रष्टव्याः पृच्छतैतत्कथमिति यदि मां वच्मि तद्धव्यक्तस्यात् ॥ १८९ ॥

तादृक्सत्पुरुषाङ्घ्रिसेवनविधिर्भव्यप्रदः सेवक-
स्यैवं चेत्तव सम्मतं यदुपते तत्सम्प्रतीदं कुतः ।
त्यक्त्वाऽन्याखिलकार्यमङ्घ्रिभजनं पूर्णस्य ते कुर्वती-
रस्मान् यत्सहसा त्वदीयविरहक्लेशानलोऽतापयत् ॥ १९० ॥

नायं तापो विरहदवजो न श्रमो वाऽनुभुक्तः
किन्तु स्नेहो मयि दृढकृतः सत्कृतोऽनन्तभक्त्या ।
नैवं कुर्यां यदि न भवती प्रीतिरीदृङ् मयि स्यात्
सिद्धं नित्याद्धिकरदितं काम्यमस्मिन् युवत्यः ॥ १९१ ॥

नित्यात्काम्यं समधिकमिदं सत्यमस्मादकारि
त्वामुद्दिश्य व्रतमिह भवान्यर्चनं प्रेष्ठदायि ।
अर्थस्तस्माद्यदयमुदितः श्रीश तद् ब्रूहि कीदृक्
श्रद्धा काम्ये रतिरपि च काऽऽधिक्यमप्यस्ति नित्यात् ॥ १९२ ॥

नैवं वाच्यं क्वचिदपि भवेन्नैव जातेऽपि काम्ये
साङ्गे कर्मण्यभिमतफलाऽनाप्तिरस्मिन् युवत्यः ।
युष्मत्कृतं व्रतमजनि चेत् कृत्तसर्वाङ्गयुक्तं
सख्यः सिद्ध्येदविकलफलं तर्हि का तत्र शङ्का ॥ १९३ ॥

साङ्गं बभूव तदनङ्गयुतव्रतं वा
साक्षी त्वमत्र हि विभोऽसि सदासवर्गः ।

---

१. इतः कृष्णगोप्योरुक्ति-प्रत्युक्तयः ।

जानीमहे न च किमप्यपि तु स्मरामः
सर्वाङ्गवीक्षणकृता भवता यदुक्तम् ॥ १९४ ॥

सत्यं सख्यो ब्रूत यः कोऽपि नासीद् बाह्याङ्गेषु न्यूनभावोऽखिलेषु ।
स्याद्वा कीदृश्यन्तरङ्गव्यवस्थेत्येष प्रश्नोऽभिप्सितार्थानुरोधात् ॥ १९५ ॥

दृष्ट्वा सर्वान्तरङ्गेष्वपि तव वसतिं त्वत्प्रधानानि कृत्वो-
दासीनास्तत्र जाता बहिरखिलसदङ्गैकसंगोपनेहाः ।
तान्यप्यङ्गानि सर्वाण्यविकलमनुदासीन एवाऽवलोक्य
साङ्गानङ्गान्तरङ्गानवगतमतिवत्त्वं कथं भो ब्रवीषि ॥ १९६ ॥

यूयं यद्यद् वदत सकलं सत्यमेवं तथापि
दृष्टाऽनङ्गस्थितिरपि मया तत्र कर्मण्यतन्द्रम् ।
साक्षित्वं मे कथितमिह यत्तच्च सत्यं परन्तु
कस्मिन्देशं क्व च खलु न वेत्यत्र नातोऽस्मि मुग्धः ॥ १९७ ॥

यच्चानङ्गस्थितिविलसनं यच्च नाज्ञानपूर्वं
किं चारब्धव्रतविकलताहारि मुख्याङ्गमेव ।
इत्थं भूयः सशपथमहो श्रीमतैवोक्तमर्वाक्
कार्यानन्त्यादजनि भवतो विस्मृतिर्नो पुनर्नः ॥ १९८ ॥

त्वत्साक्षि त्वन्निमित्तं त्वदुदितविधिनैवाखिलं कर्मजातं
तद्देवाकारि नो वेत्यपर इह लसत्येव साक्षी विवस्वान् ।
सोऽस्मिन्काले विदेशं गत इति भवता नैव वाच्यं यदस्ति
श्रौतो घोषो जगत्यां स हि भवति परं दक्षिणं चक्षुरैशम् ॥ १९९ ॥

अस्माकं सकलाङ्गसुन्दरमभूत् त्वत्प्रीतिसंपादकं
गोविन्दाखिलमेव कर्म न मनाक् तत्रास्ति नः संशयः ।
यच्छ्रुत्वा तवपारिहासिकमृषाभाषाविशेषानसौ
सत्साक्षी तव दक्षिणाक्षिग-जगच्चक्षुर्मुहुः कम्पते ॥ २०० ॥

यदुकुलतिलक त्वत्सङ्गमोऽसङ्गमोऽपि
समगतिरिति भाति प्रायशः स्वानुभूत्या ।

तव हि विरहकाले प्रादुरासीद्विदेह-
स्थितिरिह च विदेहावस्थितिः सङ्गमेऽपि ॥ २०१ ॥

यश्चिन्तयत्यनिशमेव हितं स लोके
मित्रेति नामकलितो भवति स्वभावात्।
त्वं मित्रमित्रपदपूर्णपदोऽसि तस्मा-
दस्मद्धितं भवति येन तथा विधेहि ॥ २०२ ॥

विचित्रतरचातुरीप्रचयचारुवाचाऽधुना
हृतोऽहमपराजितोऽपि तदितः प्रसादोन्मुखः।
भवेदभिमतं मनःसुखदमत्र यद्यत्प्रियं
प्रियाः प्रतिपदं करोम्यविरतं हि तत्पूरणम् ॥ २०३ ॥

मम[3] त्वं हितकारीति वेदान्ता मा वदन्त्विदम्।
मदिष्टकरणादीश तथाऽहं वच्मि साम्प्रतम् ॥ २०४ ॥

एवं मदर्थं इति : १०.३२.२१.

जाता यथा प्रियतमाः सकला मदर्थ-
त्यक्ताखिलागमजन - स्वजनोकधर्माः।
जाता न वा मदपरोक्षविधावभिज्ञा
ज्ञातुं मया हृदि सताऽपि तिरोहितं वः ॥ २०५ ॥

तत्तादृशी जगति कस्य विराजमाना
वागीशपूज्यतलिना रसनाऽस्ति लोके।
सर्वागमादिम - मनोरमपूर्णकामा-
ऽऽरामेण या विवदितुं भविता पुरस्तात् ॥ २०६ ॥

न पारयेऽहमिति : १०.३२.२२.

अलमुक्तेन बहुना सारमेकं ददामि वः।
सर्वदा सर्वकार्येषु चित्तमां युष्मदावृतम् ॥ २०७ ॥

भवदायुपेति वचनं व्रजगानां
विबुधायुपेति वचनं हरिणोक्तम्।

---

१. देहस्थित्यभावः। २. कामः। ३. ममता, ममेति च्छेदश्च।

फलितोऽर्थ एष तदनुप्रतिभाति
भुवि योगवित्-स्थितिरनल्पसुकल्पा ॥ २०८ ॥

श्रीमद्रमारमण ते चरणाब्जमस्मत्
सन्मानसोज्ज्वलरसेषु दृगर्कयोगात्।
तूर्णं प्रसादपदवीं नय तेन भूया-
दामोदसंभृदयमीश सदाऽङ्गदेशः ॥ २०९ ॥

प्रसन्न एवासि सखे सदा नः श्रीनाथ तत्रापि विशेषतोऽद्य।
तत्प्रार्थयामः किमु वा वदामो विज्ञो वयं नेश दिश त्वमेव ॥ २१० ॥

नहि चन्द्रिकयाऽर्थ्यते सुधांशुर्जलधिर्वा नहि जातुचिन्नदीभिः।
तडिताऽपि न मेघ इत्यलं वोऽतनुवाग्भिर्दयिताः कृतार्थनाभिः ॥२११॥

भवति प्रसादरसिको रसिको रसिको न भावुको भवति।
किमु चित्रमत्र भवति प्रेष्ठानामत्र भवति नः प्रीतिः ॥ २१२ ॥

न केकी मेघालौ क्वचिदपि विरक्तः प्रियतमा-
श्चकोरो वा ज्योत्स्नाविगलितसुधायामपि तथा।
न कामी कामिन्याः सदधरसुधायामपि तथा
विरक्तोऽभूत् कापीत्यभिनवगिरं श्रावयत किम् ॥ २१३ ॥

जह्यात् क्वचिज्जलधिरप्यलमात्मवेला-
मेषा धराऽपि समुपैष्यति वाऽधरत्वम्।
स्वीयान्तरङ्गसुखशालितया तथापि
नाहं क्वचिद् रसवतीर्भवतीस्त्यजामि ॥ २१४ ॥

एवं पृथक् पृथगुदीरित-वृत्तजात-
प्रेमानिलाकलित-कृष्णधनेन तासाम्।
सद्यः सदुत्तरवचोऽमृतवर्षणेन
नीतः शमं निजवियोगभवो दवाग्निः ॥ २१५ ॥

एवं सिद्धसमाधिसंविदुदितप्रत्यक्स्वरूपेऽखिला-
धिष्ठाने त्रिविधाघतापशमने स्वीयादरे श्रीवरे।

प्राप्तेऽध्यक्षपदं विचक्षणमतिः संक्षीणपापस्तदा
कुर्यादात्मदृगादरेण निखिलासत्कल्पनापोहनम् ॥ २१६ ॥

विस्मृत्याखिलभावमन्यविषयं मन्मात्रबद्धस्पृहो
मामेवाखिलभावनाभिरभितः पश्यन्ननालस्यधीः ।
यो गायेदवगाह्य हार्दपुलिनं तेनास्मि लभ्यो यथा
न्यायैस्तादृगिहान्य-यत्नचतुरप्रश्नैरपीत्यध्वनि ॥ २१७ ॥

लभ्यस्त्वं न गुहाद्रिकुञ्जविपिनारामादिभूयोऽटनै-
र्न ध्यानैर्नच तीर्थसञ्चरणतो नैकान्तिकावासतः ।
श्रीमंस्त्वद्गुणगानमेकमवनौ हेतुर्ह्यसाधारण-
स्त्वत्प्राप्ताविति गोपिकाभिरभितः संदर्शितोऽध्वा वृतः ॥ २१८ ॥

श्रीशाकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
श्रीभक्तिरसायने द्वात्रिंशोऽध्यायः ॥ ३२ ॥

|| अथ त्रयस्त्रिंशोऽध्यायः ||

साधुवृन्दावनोद्धृतरसास्वादैकतृष्णताम् ।
दर्शयन्नकरोद्रासं यस्तं वन्दे व्रजप्रियम् ॥ १ ॥

निःशङ्कंगलिते माने श्रीशाध्यक्षविरोधके ।
रसाब्धिरथ सिद्धैवेत्यर्वागध्यायसङ्गतिः ॥ २ ॥

इत्थं भगवत इति : १०.३३.१.

यद्वाचस्त्रिविधाऽतिदुर्धरमहातापापहारक्षमाः
स्पर्शश्चापि यदङ्घ्रिकञ्जरजसः कामं त्रितापापहः ।
तस्य श्रीपुरुषोत्तमस्य वचनैः सर्वाङ्गसंस्पर्शनै-
रप्यागन्तुकतापपापमखिला गोप्यो जहुर्नाद्भुतम् ॥ ३ ॥

तत्राऽऽरभतेति : १०.३३.२.

सिद्धे समाधौ गतकल्पनौघे सानन्दसाक्षात्कृतिरात्मनोऽरम् ।
रसानुभूतिश्च ततोऽर्थसिद्धा रासेति शब्दादिदमत्र बोध्यम् ॥ ४ ॥

मदेकगुणशालिनो मदनुरूपचेष्टाजुषो
भवन्ति भुवि ये जना मदनुरक्तसर्वेन्द्रियाः ।
अलभ्यममरैरपि स्वयमहं समेत्यातनुं
रसं ननु दिशाम्यदो ध्वनितमत्र रासोद्यमात् ॥ ५ ॥

तासामेवमभूतपूर्वमनवच्छिन्नप्रवाहं तदा
प्रेमाणं भुवि कृत्रिमेतरलसद्भावं विभाव्याञ्जसा ।
नार्वाग्भूतमितो न भाव्यनुपमं यत्तत्सुखं कामतो
रासक्रीडनकैतवेन चकमे दातुं कृतज्ञाग्रणीः ॥ ६ ॥

प्रारब्धदेहपतनोत्तरमेव रासो
ज्ञानेन लभ्यत इति स्थितिरन्यथैव ।
मद्भक्तिहार्दहृदयैस्तु जनैरिहैव
लभ्यः स इत्यभिमतं विशदं व्यधात् सः ॥ ७ ॥

अनङ्गसुखदातृत्वं व्यञ्जयन्तावुभावपि ।
परस्परार्पितभुजौ विश्रम्भाय बभूवतुः ॥ ८ ॥

रासोत्सव इति : १०.३३.३.

कुण्डलोत्प्रभगण्डकोधिकमण्डनोऽल्पशिखण्डकै-
र्मण्डितोऽसमकाण्डजोपधिहिण्डनादृत-भण्डधीः ।
दण्डितोरगचण्डिमा बहुखण्डितासुरमुण्डकः
पण्डितोऽवनिमण्डलेऽवतु मण्डलीकृतताण्डवः ॥ ९ ॥

यज्जागरान्त्यशयनादि - मकालवृत्त्यो-
रज्ञातलोकपदयो - र्निजरूपभाजोः ।
उल्लासनं विषयनिर्विषयोभयेड्यं
श्रैशं श्रुतीरितमभूदिह सावकाशम् ॥ १० ॥

वाक्चित्ताविषयत्वतो न विषयः सद्वस्तुवृत्तेर्घटः
सन्नित्याद्यखिलानुभूतिविषयत्वाज्ञाप्यवेद्यं प्रभुः ।
अन्यत्तद्विदितादथो अविदिताच्छ्रुत्यर्थमेवं स्फुटी-
चक्रे रासरसेऽबलाद्वितययोर्मध्ये कृतात्मस्थितिः ॥ ११ ॥

दृश्यते त्वग्र्यया बुद्ध्याऽनग्र्यया तु न दृश्यते ।
श्रुत्यर्थोऽयमभूद्व्यक्तोऽत्र तथाऽनुभवाद् द्वयोः ॥ १२ ॥

यं मन्येरन्निति : १०.३३.४.

यदङ्घ्रिस्पर्शोऽपि त्रिदशशिरसामप्यसुलभः
स सर्वस्वीयाङ्गैः कलयति हि गोपालवनिताः ।
विचिन्त्यैवं देवास्तदखिलवधूवृन्दमपि तत्
प्रकामं तद्युक्तं समजनि विमानाश्रितमिति ॥ १३ ॥

के देवाः कस्तदीशोऽप्यथ च तदबलाः काश्च तद्योनिजाद्या
द्रष्टुं स्तोतुं प्रवेष्टुं स्फुटसकलकलं रङ्गमन्योन्यसङ्गम् ।
ब्रह्मा शंभुश्च शेषो बत किमु बहुना तत्प्रिया सा रमाऽपि
यं दृष्ट्वा मौनभाजो मुकुलितनयनाः स्वान्तरङ्गे निदध्युः ॥ १४ ॥

ततो दुन्दुभय इति : १०.३३.५.

रासारम्भे यदा सन्मुरज-मुरलिका-झल्लरी-कम्बु-भेरी-
वादित्रा-तोद्य-वीणा-पटह-घनघनोज्जृम्भिगम्भीरनादाः।
मन्ये श्रीशेन साकं सुखदरसभुजामद्भुतं गोपिकानां
भाग्यं दृष्ट्वा व्यधात्तज्जडमपि किमलं स्तोत्रमेतन्मिषेण ॥ १५ ॥

पुष्पवृष्टय इति :

आलोक्य भूरिसुरतोत्सवभावमेनं
कश्चित् प्रजारहिततां न वदत्वमूषाम्।
इत्यात्मभावितधियो विबुधास्तदा ताः
सन्तानशोभिततनूः सुमतो व्यधुः किम् ॥ १६ ॥
राका निशा निखिलगोपसुताश्च राकाः
राके शरश्चितकरा वनभूमयश्च।
ताः पुष्पवृष्टिवशतः खलु पुष्पवत्यो-
ऽभूवन् क्षमं तदतिचित्रमिदं तु शुद्धाः ॥ १७ ॥
सुमान्यमुञ्चं स्त्रिदशा - स्तदानीं
विलोक्य रासोत्सवमद्भुतश्रियम्।
न केवलं किन्त्ववधानशून्या
निजानि भूयः सुमनांस्यपि प्रभौ ॥ १८ ॥
सुरता सुलता च पुष्पवत्यभवत्तादृशि सौरतोत्सवे।
नहि चित्रमदोऽद्भुतं त्विदं सुरजा वृक्षचयश्च किन्नराः ॥ १९ ॥
कल्पसन्तानवर्षाणि यत्राऽगुरणुरूपताम्।
युक्तं तत्रोत्सवे कल्पकोटिस्त्रुटिसमाऽभवत् ॥ २० ॥

जगुर्गन्धवति :

सुरतोत्सवसंभृतां प्रवृत्तिं भृशमैशीमवलोक्य सा सुखस्था।
सुरताऽत्र जगौ क्षमं तदेतद्यदिह स्तौत्यखिलो निजेष्टदं हि ॥ २१ ॥

---

१ वाद्यवृन्दम्। २. सन्ततिः, प्रकृष्टजारश्च। ३. देवतरुपुष्पाणि अपत्यानि च। ४. नूतनऋतुमत्यः। ५. पुष्पविशिष्टा रजस्वलाश्च। ६. शोभनं रजो यस्य, सुरषु जाताश्च।

केचित्कृपां निरुपमामवदन् कृपाब्धेः
काश्चिज्जगुर्निरुपमं भुवि भाग्यमासाम्।
अन्योन्यमेव - मतिरागदमन्तरङ्गे-
ऽगायंस्तदानघग्रशास्त्रिदशाः सकान्ताः ॥ २२ ॥

वलयानामिति : १०.३३.६.

स्वाङ्के स्वात्मजवज्जडा अपि वयं ह्याभिः समुद्वाहिता
वाचालान्यपि पादसेवनविधौ मुक्तानि चाभिर्वयम्।
हस्तैः स्वैर्वयमाभिरुन्नततराण्यालम्बितानीत्यलं
काञ्ची-नूपुर-कङ्कणान्यपि जगुः शब्दच्छलाद्धन्यताम् ॥ २३ ॥

निःसीमेशदयोदयोज्ज्वलरसं संवीक्ष्य रासोत्सवं
नृत्यन्त्यप्सरसः स्तुवन्ति विबुधा गर्जन्ति वाद्यादयः।
अस्माभिर्यदि मौनमाश्रितमिहैतन्नित्यसम्बन्धिभि-
स्तत्काऽन्या हि कृतघ्नतेति रवतस्तद्भूषणान्यस्तुवन् ॥ २४ ॥

भगवत्सङ्गिसङ्गस्य माहात्म्यं मुनिनेरितम्।
पश्यतास्मासु तत्स्पष्टमित्यूचुस्ते स्वशब्दितैः ॥ २५ ॥

विविधभोगविशेषजुषोऽप्यहो वयमिहैव सुमुक्तपदाङ्किताः।
सकलमान्यविदेहजयोऽर्थतः कृत इतीव जगर्जुरिमे रवैः ॥ २६ ॥

व्यापारोऽल्पदशामधर्म इति संभातोऽपि योऽस्मिन् यदि
श्रीनाथ प्रियकृद्भवेदतितरां तद्यातशङ्के जनैः।
कार्यस्तत्र निदर्शनं स्फुटमिमाः सत्साक्षिसल्लग्नका-
स्तत्र स्मो वयमित्यलङ्कृतिचयाश्चक्रुर्नु घण्टाध्वनिम् ॥ २७ ॥

पादजात-कृशमध्य-संशयावासिनोऽपि वयमद्य मापतेः।
सत्कृतीड्यवचसस्त्वनुग्रहादेवमूचुरिति किं नु ते रुतैः ॥ २८ ॥

सज्जघनशोभिनोऽपि हि सुरतोत्सवदाः सहंसकविलासाः।
वयमिह सुवर्णकलिताः श्रीश इव स्मो भुवीति जगुरखिलाः ॥ २९ ॥

---

१. चरणाः, शूद्राश्च। २. कृशो मध्यभागः, निकृष्टा मध्यमाश्च। ३. सम्यक् हस्तः, संशयश्च। ४. कर्णाः, वेदाश्च। ५. सच्च तज्जघनम्, सज्जाश्च ते घनाश्च। ६. सूर्यः, पादकटकश्च।

वयं हि सुरतोल्लसद्युवति पञ्चशाखिश्रियो
वयं चरणशोभिनो वयमनन्तसम्पच्छ्रिताः।
पृथक् पृथगितीव ते विशदयन्त एवाशयं
निजं निजरवैस्तदा किमु सुरोपहासं व्यधुः ॥ ३० ॥

दृष्ट्वा प्रसङ्गं सुरतोत्सवस्य
परेण पुंसा व्रजबालिकानाम्।
तास्तत्पतिप्राप्तपदाश्च शब्दै-
राकारयंस्तानिह किं नु भूषाः ॥ ३१ ॥

दृष्ट्वाऽतनुसुरतोत्सवसमुत्सुकं माधवं त्वलङ्कृतयः।
युक्तं तद्वृद्धिकृतावासन् वाचैलतोक्तिभाजस्ताः ॥ ३२ ॥

वयं सदाशयस्थिता वयं पदैकसेविनो
वयं च मध्यभूषणान्यनङ्गसङ्गिनो वयम्।
तदस्तु कीदृगप्यहो चरित्रमेतदीयमि-
त्यरं स्वरैरजल्पि तैरनल्पकल्पितैर्मिथः ॥ ३३ ॥

तनुपादकलावभासभाजो
वयमेषा परिपूर्णशोभिनीति।
इह साधु विहाय नोऽनयाऽसौ
रमते वेत्यलमुज्जगुश्च भूषाः ॥ ३४ ॥

अहं सकलहंसकोऽस्म्यहमियं च काञ्ची पदा
ममास्ति विदितेह सद्वलयभूषणाख्येति किम्।
अलङ्कृतिचयो निजामनघतां मिथो दर्शयं-
श्चकार सुरतोत्सवे प्रतिपदं श्रुतीड्यध्वनिम् ॥ ३५ ॥

तत्रेति : १०.३३.७.

सकलं सकलार्कचक्षुषाऽस्मिञ्जगदेतत्समशोभि येन सोऽपि।
शुशुभे किल याभिरिन्दिरेशः कथमेता न सुवर्णरत्नरूपाः ॥ ३६ ॥

१. कल्पवृक्षा हस्ताश्च। २. वसन्तं कृष्णं च। ३. वाचालभावः वाचेति च्छेदश्च। ४. षोडशांशो हस्तश्च। ५. मेखला क्षेत्रविशेषश्च। ६. घनः :।

तासां सुवर्णगुणभावजुषामखण्ड-
सौभाग्यकः सहि तदा रमणीमणीनाम् ।
आसीत् सुमङ्गलपदं गुणतोऽवलम्ब्य
यन्नायकः क्षममदोऽखिलसन्मणीशः ॥ ३७ ॥

सुवर्णगुणगुम्फिता-ऽखिलजगच्छिरः सन्मणि-
व्रजस्थरमणीमणीव्रजसुहारमध्यस्थितिः ।
अखण्डगुणरञ्जयतां विदधदच्युताखण्डल-
क्षणोत्तमपदोऽपि यः कथमसौ न सन्नायकः ॥ ३८ ॥

लसन्निशाभिर्विधुरेष ताभिर्व्यरोचतानन्तगुणः क्षमं तत् ।
सिताम्बरास्ता विशदान्तराशाः स चापि संपूर्णकलोदयो यत् ॥ ३९ ॥

पादन्यासैरिति : १०.३३.८.

पादन्यासानुरज्यत्समसमयसमुद्भूतमञ्जीरकाञ्ची-
रत्नप्राञ्चत्सुहस्तोज्ज्वलवलयरवं लोलनासाग्रभूषम् ।
तत्तच्चित्रप्रकार-भ्रमणगतिगलत्-त्पुष्पगन्धानुधाव-
द्रोलम्बारब्धगुञ्जारवसरणिसमुद्बोधितोद्गीतिमार्गम् ॥ ४० ॥

सभ्रूक्षेपं कटाक्षध्वनितनिजमनोजातभावं समुद्यत्-
पादन्यासानुकूलाभिनयमवनमद्ग्रीवमध्योरुसन्धिम् ।
रासोत्साहं विचित्रोज्ज्वलरसभरितं वीक्ष्य योषिन्मणीनां
तासां श्रीशेन साकं मुमुहुरिह महादेवता युक्तमेतत् ॥ ४१ ॥

( युग्मम् )

काश्चित्पादेन काश्चिद् द्विगुणगुणभुजाशाखया पुष्पिताभि-
र्वाग्भिः काश्चिल्ललाटोद्गतिकविलसनैर्मध्यगत्वेन काश्चित् ।
काश्चिद्धार्दस्थित - प्रावरणसितगुणै - र्लक्षितात्मस्वरूपा
गायन्त्येवं व्रजेशं भवनमुदितं नृत्तयः श्रौतगीतैः ॥ ४२ ॥

---

१. पक्षे सुममिति च्छेदः, शोभना मा यस्येति । २. नेता हारमध्य-मणिश्च । ३. हरिद्रा रात्रयश्च । ४. विष्णुश्चन्द्रश्च । ५. वस्त्राणि आकाशश्च । ६. दिशः इच्छा च । ७. षोडशकलाः, चतुःषष्टिकलाश्च ।

योषिल्लीलामिषादेवमवाच्यर्थो महर्षिणा ।
मन्ये यदब्रवीत् सोऽग्रे यद्गीतेनेदमावृतम् ॥ ४३ ॥
( युग्मम् )

भगवद्वार्दवेदिन्यः काश्चित् तदनुवादिकाः ।
काश्चित्तत्स्तावका ह्येवं ज्ञेया वा श्रुतिगा स्थितिः ॥ ४४ ॥

क्रीडायामचले कृष्णमेघे नानात्मभासिनि ।
आसंस्तद्गतिशोभिन्यो युक्तं तास्तत्र चंञ्चलाः ॥ ४५ ॥

उच्चैर्जगुरिति : १०.३३.९.

मोहिते सति मृगे स्थितिभाजि स्थैर्यमेष्यति चिरेण मृगाङ्कः ।
चिन्तयन्निति गणः खलु तासां गातुमारभत रासरसेषु ॥ ४६ ॥

ब्रह्मादिदेव - मुनि-योगिवरेण्य-पुण्या-
लभ्योऽच्युताङ्गसुखसङ्ग इहास्ति योऽलम् ।
याभिः ससौरतविलासत एव लब्ध-
स्तद्गीतसंवृतमिदं त्विति युक्तमेव ॥ ४७ ॥

काचित् सममिति : १०.३३.१०.

अयं श्रुतिमुखो द्विजेशकुलजो द्विजाभ्यर्चितो-
भवत्वतितरामहं त्वधरबुद्धिरूर्वंशजा ।
अवेलमधुना कथं परिचरेयमित्याशया-
ज्जगौ बत तदा तु सा तदविमिश्रमेवादरात् ॥ ४८ ॥

निशायामनिशं गीतोल्लास सच्छ्रुतिभास्वरम् ।
यो वेत्त्यनुभवत्येष साधुवादोऽच्युतोक्तिषु ॥ ४९ ॥

एकोद्गीत - परोन्नीत - स्वरपूर्तिं विभाव्य सः ।
ऐकमत्यमसापत्न्यं ज्ञात्वोचे साधु साधु तत् ॥ ५० ॥

काचिद्रासेति : १०.३३.११.

आब्रह्मस्तम्बविश्वैका-ऽऽधारस्तम्भात्मनोऽस्य हि ।
स्कन्ध एष इति श्रान्ता विश्रान्त्यै तमधारयत् ॥ ५१ ॥

---

१. चला विद्युतश्च । २. वैश्यकुलोत्पन्ना ।

सर्वांशतोऽप्यहमितस्तव सोऽनुकूलः
कान्तेऽस्मि तत्त्यज वियोगभयादिशङ्काम् ।
इत्येवमर्थमनुबोधयितुं स तस्या
अंसे गतं भुजमधाद् रसमाजिघृक्षुः ॥ ५२ ॥

तत्रैकेति : १०.३३.१२.

अवयवेष्वखिलेष्वपि वीर्यवान् भवति बाहुरिहैक इतीच्छया ।
तदपरा चतुरा सरसं रजोगुणभुजं भुजमेव चुचुम्ब ह ॥ ५३ ॥

कस्याश्चिदिति : १०.३३.१३.

दृष्ट्वाऽन्यस्याः प्रतिकृतिमुपेन्द्रस्य गण्डे स्थिताऽसौ
का वा धृष्टा मदनु सविधेऽत्रेत्यलं कापि कोपात् ।
निःसार्याऽस्मादियमिह यथाऽस्याः प्रवेशो न भूयो
भूयाच्छुद्धया किमिति निदधे तस्य गण्डे स्वगण्डम् ॥ ५४ ॥
कृष्णेनाहमुरीकृता तदनयोरप्यस्तु सङ्गोऽधुने-
त्यालोच्याच्युतगण्डबिम्बितनिजात्माऽऽलिङ्गनाद्युत्सवे ।
कापि स्वीयझलत्कपोलविलसच्छ्रीकृष्णबिम्बं मुदा
किं वा योजयितुं न्यधाद्भगवतो गण्डे स्वगण्डं तदा ॥ ५५ ॥
उद्दीप्तकीलविरहज्वलनोपशान्ति-
र्नैवाधरामृतमृते भवितेति भूयः ।
कृष्णोऽपिबत्तदधरामृतमुज्ज्वलश्रीः
कृष्णाधरामृतमसावपि भूरितृष्णा ॥ ५६ ॥
प्रभुमुख्योऽनुरागी यः सत्कार्यः स न मे कथम् ।
इत्यन्या कापि तन्मुख्यरसताम्बूलमाददे ॥ ५७ ॥

नृत्यन्तीति : १०.३३.१४.

पदादम्बुजातं पुरा यातमस्य
करे त्वम्बुजातं निराबाधमस्ति ।
विचिन्त्यैव काचित्स्वतापापहत्यै
न्यधात्स्वस्तने तस्य हस्ताम्बुजातम् ॥ ५८ ॥

गोप्यो लब्ध्वेति : १०.३३.१५.

विरत्यापि न चाऽध्यक्षं यदच्युतपदाम्बुजम् ।
रत्याप्तं तद्युक्तमतस्तद्व्रतस्तास्तदाऽभवन् ॥ ५९ ॥

कर्णोत्पलेति : १०.३३.१६.

भूयोऽजस्रं सहस्र-स्रवदमरनदी - मुख्यतीर्थाश्रिताऽङ्घ्रो-
ऽप्यङ्घ्रिर्यत्पादधूलीकलितमिति जलं यामुनं मूर्ध्नि धत्ते ।
तद्वर्ण्यं भाग्यमासां किमिह किमु तदालङ्कृतिस्रक्सुमानां
लब्धो यैरङ्गसङ्गो मुनिजनसुमनोवृत्त्यलक्ष्योऽच्युतस्य ॥ ६० ॥

यासां पादेन पादं भुजमपि भुजतः पाणिना पाणिमंसं
स्वांसेनास्येन चास्यं हृदयमपि निजोरःस्थलेनाङ्गमङ्गैः ।
आक्रम्याक्रम्य मुख्यं धयति रसमहो वासुदेवो मुदा यत्
तद्भाग्यं वागगम्यं कथमिह न धराभोगसौभाग्यभूतम् ॥ ६१ ॥

एवं परिष्वङ्गेति : १०.३३.१७.

रसं लब्ध्वाऽऽनन्दीभवति भुवि धीमानिति वचः
श्रुतिश्राव्यं श्रीशः कलयितुमशेषेन्द्रियचरम् ।
परीरम्भं वीक्षामतनुविषयामङ्गसुरभि-
प्रसारं किं चक्रे मधुररसना-ऽऽस्वादनमपि ॥ ६२ ॥

यादृग्यादृग्वृत्तिरासीत् स तासां
तादृक्तादृक्तत्र रेमे रमेशः ।
स्पष्टं तेनासङ्गिता :पूर्णता च
भक्ताभीष्टानन्ददायित्वमीशे ॥ ६३ ॥

पूर्णस्यात्र न मे किञ्चिदस्ति कर्तव्यमंशतः ।
तथाप्यस्म्येव तत्तुष्ट्यै भक्तव्यापृतितत्परः ॥ ६४ ॥

तदङ्गसङ्गेति : १०.३३.१८.

श्रीशाङ्गसङ्गसुखसंभ्रमतो युवत्यः
स्मर्तुं स्वगोकुलमपि प्रभुतां न चापुः ।

दूरेऽन्यसंस्मृतिरिदं क्षममेव यस्मात्
तासामनन्यगमनो हि तदाऽऽस कामः ॥ ६५ ॥

सति पितरि सावकाशं लालयितरि दातरीह पादरि च ।
तनुजस्त्वनन्यगमनः स्फुट इति रतिपतिरभूत्स तत्रैवम् ॥ ६६ ॥

तिरस्कृताः सुमनसो यैर्येऽप्यत्रोज्झिताश्च तैः ।
तेषां कौटिल्यमालिन्यभाजां मुक्तिरदोऽद्भुतम् ॥ ६७ ॥

अरंकेशाः सुदङ्मौलिश्रियः सूर्येन्दुशोभिनः ।
युक्तं तन्मिषतोऽपश्यन् मुदाऽऽसं सुरतोत्सवम् ॥ ६८ ॥

ये मुक्ताभरणाः सदैव सुमनः सङ्गादृतात्मश्रियः
शान्ताः स्निग्धतमस्वभावसरलाः कृष्णस्वरूपेडिताः ।
किञ्चानेकसुदृक्शिरोमणिपदास्ते बन्धभाजः कथं
स्युर्युक्तं तदिदं तदा यदभजन् केशा विबन्धात्मताम् ॥ ६९ ॥

यद्योगतो वयमिहैदृशसौख्यभाजो
जाता इति स्मरणमांशिकमप्यमूषाम् ।
नास्तीति कोपचलितं किमितोऽधिवासा-
दास्वेवमास शिथिलं ध्रुवमंशुकं तत् ॥ ७० ॥

एतत्सहस्थिततया विहितेऽधिवासे
मोक्ता प्रभुः क्वचिदसावपि वा मम स्यात् ।
इत्यादृतावपि न मां स्मरतोऽधुना ता-
वित्यंशुकं तदनुतापितयाऽऽप मुक्तिम् ॥ ७१ ॥

अस्मिन्नयत्नसुलभे सति मुक्तियोगे
प्राप्तेऽलसं यदि वसामि तदन्यकाले ।
सा नेति संभ्रमचलद्ध्रुवमंशुकं तत्
पादे पपात विधृतोद्धरणाभिलाषम् ॥ ७२ ॥

---

१. इच्छा स्मरश्च । २. देवाः पुष्पाणि च । ३ चिकुराः ब्रह्म-काम-शङ्कराश्च । ४. सूर्यचन्द्रौ तदाकृती अलङ्कारविशेषौ च । ५. शान्तिमन्तः, शकारान्ताश्च ।

स्वावासि सर्वजनमुक्तिसुखावहाऽपि
काञ्चीमदाश्रयतया श्रियमाप मुक्तेः ।
अद्याप्यनङ्गगृहगोपनकार्यहं चेद्-
धिङ् मामिति स्म गलदंशुकमास सद्यः ॥ ७३ ॥

मत्वा विष्णुपदं मयेदमनिशं निःशङ्कमासेवितं
कोऽयं मे गुणिनोऽप्यधःस्थितिकरो मोहोऽलमित्याकुलम् ।
दृष्ट्वा विष्णुपदं स रूपसुरतानन्दप्रसङ्गप्रदं
प्राप्तुं तत्प्रथमं श्रमास्पदमरं युक्तं जहौ चीवरम् ॥ ७४ ॥

काञ्च्याश्रितं सततविष्णुपदावलम्बि
संछादितान्यजन - सर्वजघन्यभोगम् ।
नित्यानवद्यगुणरूप - विचित्रशोभं
मुक्तं तदंशुकमभूद्धि किमत्र चित्रम् ॥ ७५ ॥

अभूतपूर्वोऽयमुपस्थितः समु-
त्सवः सुदृक्सौख्यकृदीशकल्पितः ।
न भूततत्कार्यततेः प्रयोजन-
मिहेत्यधोऽगात् सगुणं तदम्बरम् ॥ ७६ ॥

अम्बरं वीक्ष्य गोपीनामम्बरं यदधोऽपतत् ।
युक्तं भूतस्वभावो यत् परोत्कर्षासहिष्णुता ॥ ७७ ॥

त्यक्तास्मदाश्रयतयैव पुरा यदेता
निःसीमहार्दसुखदास्तु हरेर्बभूवुः ।
आलोच्य तद्गतिसुखर्धिसमीहया त-
द्युक्तं तदांशुकमभूत् तदनङ्गसङ्गम् ॥ ७८ ॥

कटिस्थिते तद्गलितेऽपि वासस्यलङ्गसङ्गित्वमखण्डमासीत् ।
चित्रं च चित्रान्तरमङ्गदश्रीरनङ्गदो बाहुरभूद् द्वयोर्यत् ॥ ७९ ॥

---

१. मेखला क्षेत्रविशेषश्च । २. वस्त्रं आकाशश्च । ३. वस्त्रं अमिति च्छेदश्च, अम् विऽण् वरं श्रेष्ठम् ।

विषमेषु रतिस्थितिर्न कार्या
गुणिना जातुचिदुद्धता यदि स्यात् ।
नहि निर्वहणं क्षमां निनेति
सगुणोऽभूत् स पटः क्षमाश्रितोऽरम् ॥ ८० ॥

मध्यमस्यास्य संसर्गः सर्वदा शून्यवादिनः ।
न युक्त इत्यभूद्वस्त्रं सुदृक्पादनतं गुणि ॥ ८१ ॥

विधाय निर्बन्धमिदं मयाऽवितं
यदर्थमासां कुचयुग्ममीदृशम् ।
अग्राहि तेनाद्य दयाब्धिनेति तत्
कृतार्थभावादिव कञ्चुकोऽगलत् ॥ ८२ ॥

केशा मुक्ता गुणी मुक्तो नाद्भुतं सुरतोत्सवे ।
चित्रं मुक्ताः पुनर्मुक्ता मुक्ताः सुमनसोऽपि च ॥ ८३ ॥
अनङ्गयोग्या जाताः स्मो वयं कृष्णाङ्गसङ्गतः ।
इति स्रजोऽप्यलङ्कारास्तदाऽनङ्गश्रियं दधुः ॥ ८४ ॥

कृष्णविक्रीडितमिति १०.३३.१९.

इदं सुखं हि सुलभं कृष्णपक्षसेविनाम् ।
युक्तमासीत् तदप्राप्त्या मोहस्तत्र खवासिनाम् ॥ ८५ ॥

स्वस्था अपीशचरितं समवेक्ष्य देव्यो-
ऽस्वस्था बभूवुरबलास्त्वबला नखस्थाः ।
जाताः सुखस्थितिजुषोऽद्भुतमन्यदत्रा-
नन्दैकहेतुरभवत् स हि नन्दपुत्रः ॥ ८६ ॥
ऐकान्तिकीं मम पितुर्विहृतिं विलज्जाः
पश्यन्त्यलं कथमहो विबुधस्त्रियोऽमूः ।

---

१. असमेषु विषमा इषवो यस्येति च । २. आग्रहं नितरां बन्धं च । ३. देवानाम् । ४. अव्याकुलाः स्वर्गस्थाश्च । ५. नखे तिष्ठन्ति ताः, नेति च्छेदश्च । ६. सुखं शोभनखं च । ७. आनन्दः, आ इति वाक्यपूर्तौ, नन्दश्च । ८. देवाः पण्डिताश्च ।

इत्यन्तरोदितरुषा मदनेन गाढं
ता अर्दिता निजशरैरिति युक्तमेव ॥ ८७ ॥

अम्बरमालम्ब्यैवानुभूत - सुरतोत्सवो विधुर्युक्तम् ।
गलिताम्बरयुवतिकृतं विलोक्य तं विस्मितो यदभूत् ॥ ८८ ॥

गोकुल[1]रमणीभिः सह हरि[2]केलिं वीक्ष्य विगतभयशङ्काम् ।
शशमण्डनस्य चित्तं कथमिव भविता न विस्मयोल्लासि ॥ ८९ ॥

ताराकामुकमानसे नहि मया यत्नः कृतोऽर्वाङ् महा-
नस्यामस्त्वनिशं [3]प्रजारहिततेत्यासीत्तु वैफल्यभाक् ।
श्रीकृष्णोऽयममोघवीर्यचरितः सम्पूर्णकामोऽपि तां
सम्पाद्याशु भुनक्ति निर्भयमिति ग्लौ[4]श्चित्रदृग् विस्मितः ॥ ९० ॥

नाहं नैते बुधाद्याः सुरगुरुकवयो भास्करोऽहस्करोऽपि
कृत्स्नं यस्यैकपादं जगति कलयितुं नालमीशाः कुतोऽन्ये ।
स श्रीशस्तूर्णमाभिर्लघुकरयुगलेनावृतः सर्वतोऽपी-
त्यब्जः साश्चर्यचित्तः प्रतिकलमभवद् वीक्ष्य वीक्ष्येति युक्तम् ॥ ९१ ॥

अल्पीयसि वयस्येष मद्वंश्योऽहमिवार्भकः ।
सुरतानन्ददकरोऽभूदितीन्दुः स विस्मितः ॥ ९२ ॥

पुंसस्त्रियाश्चेतसि चित्तजाङ्कुरो
मद्दर्शनादुद्भवति क्षपान्वये ।
जातोऽहमेवाद्य तु तद्विलोकनात्
सकामचेता इति विस्मितो विधुः ॥ ९३ ॥

यदि स्वसृसुतोत्सवासहनवर्तनो मातुलः
तदार्तिकरणोद्यतो भवति भागिनेयोऽन्ततः ।
इति स्वपितृकंसयोश्चरितमुक्तसम्बन्धिनो-
र्निरीक्ष्य मदनोऽप्यसावुचितमास चन्द्रार्तिदः ॥ ९४ ॥

---

१. धेनुकुलं व्रजश्च । २. सिंहः कृष्णश्च । ३. प्रकृष्टजारः प्रजेति च्छेदश्च । ४. चन्द्रः । ५. आकाशरूपम् ।

कृत्वा तावन्तमिति : १०.३३.२०.

अनेकदेहसंयोगः स्फूर्तिर्वाऽनेकवृत्तिषु ।
युगपद्योगिनः स्पष्टस्तत्र योगीश्वरेऽद्भुतम् ॥ ९५ ॥

अस्मिन्नद्वैतरूपोऽप्यहमनुकलयास्यात्समूर्तीः सकामा-
नानामद्भक्तिभाजां हृदयसमुदितानन्तसङ्कल्पसिद्ध्यै ।
एवं सम्बोधयञ्छ्रीपतिरतुलकृपो भक्तभव्यैकवृत्ति-
र्मन्ये नानास्वरूपस्तदभिलषितसंपूर्तये संबभूव ॥ ९६ ॥

एकोऽप्यनेक इव वृत्तिषु यावतीषु
स्वैरं वसामि विहरामि सदा सकामः ।
तासां स्वमात्रविषयाकलनस्पृहाणा-
मज्ञातपूर्व इति किन्तु विशेष एषः ॥ ९७ ॥

यावन्तश्चोपाधिभेदा जनेषु तावत्संख्या बिम्बभेदाः प्रसिद्धाः ।
युक्तं तस्माद्गोपिकास्वीश एष नैव न्यूनो नातिरिक्तोऽथवासीत् ॥९८॥

मन्मात्रोदितकामवृत्तिषु यदि स्यामासु योषस्वहं
क्रीडावृत्तिषु कामतो विषमदृक् तद्दक्षमानो भवेत् ।
कामस्तेन भवेन्न चेप्सितममूषां तेन भक्तेष्वदे-
त्याख्या मे विफला भवेदिति विभुस्तास्वास तुल्येक्षणः ॥ ९९ ॥

सममदनुगतानां तुल्यशक्तिव्रताना-
मिह विषमफलाप्तिर्नोचिता जात्वमूषाम् ।
त्रिरसकृदपि मा भूद्यात्र सापत्नभावो
युगपद - भवदीशो-ऽनन्तमूर्तिस्तदेति ॥ १०० ॥

तासामतीति : १०.३३.२१.

मद्रञ्जनागणित - भूरिपरिश्रमा ये
तेषां श्रमं परिहरिष्यति मां विना कः ।
इत्थं स्वभक्तजनकारुणिको मुकुन्दः
सञ्चिन्त्य तद्वदनघर्म - मपाचकार ॥ १०१ ॥

---

१. विषमदृष्टिः शङ्करश्च ।

आगन्तुकश्रमनिवृत्तिरयत्नसिद्धा
मुख्यश्रमापनयने विहिते सतीति।
आलोच्य मङ्गलकरेण करेण तासां
मुख्यश्रमापनयनं विदधे दयाब्धिः ॥ १०२ ॥

गोप्य इति : १०.३३.२२.

दीनोपकार - कारुण्यमसीमं श्रीपतेरहो।
क्षुद्रा अपि वयं येन नीताः श्रीसुखशेवधिम् ॥ १०३ ॥

यावत्स्त्रीजातिसौभाग्यानन्दराज्येऽभिषेचिताः।
वयं पद्मातपत्रेण करेणेशेन लक्षिताः ॥ १०४ ॥

यत्पदाग्रमभिवाञ्छति पद्मा
सोऽस्मदङ्गमखिलेन करेण।
लालयत्यनुकलं सकलेशो
धन्यतामिति जगुः किल गोप्यः ॥ १०५ ॥

अयि रात्र्यनुभूतमुच्यसे
विदिता तेऽस्ति वियोगिनीदशा।
तदितो न विधुर्यथा व्रजे-
द्चलस्त्वस्व तथाऽस्य चांशुकम् ॥ १०६ ॥

अतनुसुखमवाप्तं चक्रवाकैरशेषैः
समजनि च निरासः पद्मिनीम्लानतायाः।
दिनकर तव कृत्यं प्रायशो रासकेलौ
समभवदिति वेगं स्वागमे मा कुरुष्व ॥ १०७ ॥

सर्वंसहा भवसि मूर्तिमती क्षमा च
तत्प्रार्थनाभिरलमत्र तथापि वच्मः।
हल्लीसके पदसमोद्धरणस्थितौ त्वं
धात्रि स्थिरा भव यथार्थनिजाभिधाना ॥ १०८ ॥

---

१. किरणं वस्त्रं च। २. स्त्रीमण्डलीनृत्ये।

एवं भक्तिं वीक्ष्य तासामनन्यां
तुष्टश्चित्ते पूर्णकामो मुकुन्दः ।
देव्याऽलभ्यं यत्तदाऽदादनङ्ग-
सौख्यं ता अप्यात्मभावं युवत्यः ॥ १०९ ॥

सन्निर्गुणाक्रिय - परात्मदृशो भृशं ये
ते स्वं सुखं भुवि गरिष्ठमिति ब्रुवन्तु ।
एवं धिया मम तु भाति यदास तासां
कृष्णाङ्गसङ्गसुखमस्य न तत्कलार्हम् ॥ ११० ॥

ताभिर्युत इति : १०.३३.२३.

मत्प्रीतिहेतुकतयाऽपि रजोगुणश्चे-
ल्लग्नः सतां हृदि तदा निजकौशलेन ।
कुर्वं तथा तदपनोदनमात्मभक्त्यृ-
द्धिः स्याद्यथेत्यकृत तज्जलकेलियोगम् ॥ १११ ॥

बाह्योऽपि चेन्नहि मया निजभक्तिभाजां
नीतः श्रमो बत लयं तदिहान्तरस्थम् ।
दूरं विधातुमसुमान् शरणं व्रजेन्मां
को वेति तत्र सदयः क्षममुद्यतोऽभूत् ॥ ११२ ॥

अन्तर्बहिर्भवति यो रससंप्लुतात्मा
तत्रैव तुष्टिरविशङ्कमनङ्गभूता ।
जानन्निदं स हि दयाब्धिरनङ्गपूर्ण-
तुष्टिं विधातुमुचितं व्यदधाद्रसाक्ताः ॥ ११३ ॥

मदनुव्रतचारिणो भवेयुर्भुवि येऽनन्यधियामहं निशायाम् ।
वितरामि रसं स्वमेव तेषामिति तादृक्षु तदर्पणादबोधि ॥ ११४ ॥

अन्याङ्गनोपभोगो - ऽस्मिन्नदभ्रवसुशोभनः ।
अस्तीत्याकलयन्नीशस्तासु वस्त्रं[1]द्धिमार्पयत् ॥ ११५ ॥

---

१. जलं द्रव्यं च ।

गोपिकयाऽऽगो[1]ऽपि कया नाकारिरिपो[2] तवात्र नाकारि ।
इत्याशयतो लघु ता दिव्यं कर्तुं तदाऽऽपगामविशन् ॥ ११६ ॥
तीर्थप्रवेशो निशि चाऽप्रशस्ते शास्त्रप्रणेताऽप्यकरोत्तमीशः ।
तेन व्यबोधीदमिहानिशं यः सकामधीः स्यात् सहि भिन्नसेतुः ॥११७॥

सोऽम्भस्यलमिति : १०.३३.२४.

अस्मानिवेश जडजातविहारशीला-
नप्यच्युताऽव सुजनानिति सूचयन्त्यः ।
गोप्योऽम्बुकेलिमिषतः करनीरजात-
क्षीरै - र्व्यधु-र्हरिशिरस्यभिषेकमीड्यम् ॥ ११८ ॥
तावत्तत्र जलेऽपि निर्जितनिशाधीशाननाब्जं चल-
द्भ्रूविक्षेपकटाक्षलक्षित - मृगीदाक्षिण्यनिक्षेपकम् ।
दुर्वर्णायित - मात्मकान्तिकलया भूयः सुवर्णाचलं
कुर्वन्तं स्तनगौरवाच्च महतो निम्नोत्तराशाश्रितम् ॥ ११९ ॥
वाराक्षेप - विवर्तिता - ऽऽस्यविहिताप्यक्षेपजानन्यज-
व्यक्तोद्भूतिनिमित्तकाहितमृषा वर्ष्मैकसङ्घर्षणम् ।
किं वा लग्नमिहेति सम्भ्रमवशात् पश्येत्यसत्योक्तितः
स्वाकृष्टाम्बरसूरुमूलमफलं संदर्शयन्तं मुहुः ॥ १२० ॥
भीरत्रास्ति न कापि नाभ हृदयं कस्मात् समुत्कम्पते
पश्यैतत्त्वमिति प्रतार्य कुचयोरास्थापयन्तं करम् ।
मा भैषीस्त्वमशेषमाधिशमनं कुर्वेऽधुनैवाञ्जसे-
त्युक्त्वा गाढकृतप्रमर्दजनितानन्दार्धमीलद्दृशम् ॥ १२१ ॥
परस्पररसाङ्काविं परस्पर विहारकम् ।
पूर्णकामः स्म सानन्दं चक्रे तं कामिनीजनम् ॥ १२२ ॥

( कालापकम् )

कामैकपुष्टिकृतदृष्टिर हर्दिवं यः
स्यादिष्टमस्य सततं जडजातमेव ।

---

१. अपराधः । २. नाकारीणां दैत्यानां रिपुः कृष्णः ।

तत्केलिमेव पशुवद् बहु मन्यते चे-
त्याधाज्जडोन्मदगतिं विशदां तदेशः ॥ १२३ ॥
यत्कराम्बुजमालम्ब्य तत्समुद्धरणोत्सुकः ।
गजेन्द्रलीलस्तत्काल आसीत्सद्यक्तमच्युतः ॥ १२४ ॥
यत्किञ्चिदद्भुतमुदीक्ष्य मनस्तदेति
तद्दर्शने द्रुतममुष्य हि स स्वभावः ।
युक्तं विचित्रतममेतदवेक्ष्य दिव्या-
न्यागुर्द्रुतं सुमनसां सुमनांसि तत्र ॥ १२५ ॥
इत्थं देवास्तदीयं विविधविलसितं सम्यगालोचयन्तो
धन्यास्ता गोपकन्यास्त्रिजगति च जलक्रीडनं धन्यमेतत् ।
ब्रह्मानन्दोऽपि तुच्छस्तृणमिव भवतीत्यूचिरे यत्पुराऽस्मान्
विद्वांसस्तत्सदीदृङ् न परमिति मुहुः श्लाघयैवाऽस्तुवंस्ते ॥ १२६ ॥
रसेन किं जडेनास्तु सरसोर्वी तथापगा ।
मूर्तिमद्रसशालिन्यो गोप्य एवेति नो मतिः ॥ १२७ ॥
श्रीशाङ्घ्रिसङ्गतरतेर्मनुजस्य यत्र-
कुत्रापि नाम विहृतिः सुखदैव भूयात् ।
आसीच्छरन्निशि निशीथयुजीन्दुभाजि
क्रीडासुखाय भृशमीशजुषां हि तासाम् ॥ १२८ ॥

ततश्चेति : १०.३३.२५.

वशीभूता यस्य व्रजविलसिता वृत्तिनिचया
न तद्वन्धायास्मिन् भवति विहिता कापि विहृतिः ।
स्फुटीकुर्वन्नेवं युवतिभिरलं ताभिरकरोद्-
वशाभिः श्रीनाथः स्थलजलवनारामविहृतिम् ॥ १२९ ॥
जडजातविहारशालिनः परिपश्यन्त्विह मां तु कीदृशम् ।
अहमस्मि सदा तु मद्दृशा सदुदासीनतटस्थलक्षणः ॥ १३० ॥
संयोग - विप्रलम्भद्वयानुभववज्जलस्थलानुभवम् ।
दातुं परिपूर्णरसप्रदोऽभिरेमे स ताभिरुभयत्र ॥ १३१ ॥

लब्ध्वाऽऽनन्दं कृतार्थः सन्बालोन्मत्तपिशाचवत् ।
विहरेज्ज्ञानवानेतद् व्यक्तयथोक्ता गजोपमा ॥ १३२ ॥

लब्धे चित्सुखसद्रसेऽथ नितरां कार्तार्थ्यपूर्णात्मना
पुंसाऽशेषजडेष्वशेषशरदो नेया विहारादिभिः ।
रुद्ध्वा कामफलाभिसन्धिमबहिर्धृत्वा बहिः कामतो
वृत्तिं सप्रमदामिति स्फुटमभूत्तत्केलितः श्रीपतेः ॥ १३३ ॥

एवं शशाङ्केति : १०.३३.२६.

शिवविधिसवभाजां कुण्ठिता यत्र शक्ति-
र्निखिलभुवनवीरो विश्रुतः सोऽपि कामः ।
युवतिसमवधाने निर्जितो येन रात्रौ
किमपरमतिचित्रं तच्चरित्रं हि वाच्यम् ॥ १३४ ॥

विचित्रं चरित्रं विधायैवमीशः
स्वतन्त्रां गतिं स्वैरवृत्त्या प्रदर्श्य ।
भुजङ्गप्रयातोऽप्यनङ्गप्रदाता-
ऽप्यनङ्गाङ्गभौजङ्गवृत्तिं व्यतानीत् ॥ १३५ ॥

मद्बलं तु कियद् दैत्यद्विषोऽग्र इति भीमतः ।
काव्यस्य रोधो दुःसाध्योऽप्यभून्निर्यत्नतः प्रभोः ॥ १३६ ॥

रसो वै स इतिश्रुत्या रसात्मेश इतारितम् ।
युक्तमेव ततः श्रीशः स्वस्माद्भिन्नं न तं व्यधात् ॥ १३७ ॥

नित्यानवद्यनिःसीमसुखिनः सुरतोत्सवे ।
प्रभोर्वैरस्यकृन्नासीद्रसावधिरिति क्षमम् ॥ १३८ ॥

तत्त्वभ्रान्तधियः स्वपूतगतयः पाण्डित्यगर्वोर्मयः
काव्यालापविवर्जनं जगति यज्जल्पन्त्यनल्पेक्षणाः ।
नित्यानन्दविधायिनीं निजरसां सत्काव्यगोष्ठीमिमां
निर्माायात्र जने निनाय सदयस्तन्मन्दभावं वचः ॥ १३९ ॥

अरसकाव्यविलापविवर्जनं
कविवचोविषयोऽलमिति क्षमम् ।

सरसकाव्यकथाभिनिषेवणं
यदकरोज्जगदादिगुरुः स्वयम् ॥ १४० ॥

यत्र विद्योतते श्रीशलीलागुणकथोदयः ।
तत्सत्काव्यं भवत्यत्र चतुर्वर्गफलप्रदम् ॥ १४१ ॥

लब्धं मानुषजन्म चेद्विधिवशात् तद्वोकुलप्रोल्लस-
न्नानावृत्तिवशंवदोऽप्यनुपदं कुर्वन् विवेकाश्रयम् ।
ताताऽत्यन्तसुखप्रदाऽऽत्मजननीसेवा - मभीष्टप्रदां
कुर्यादात्मनिरुद्धकाव्यविषयो यावद्विदर्कोदयः ॥ १४२ ॥

आसेव्यतां गुरुपदां सुखदामतीव
चन्द्रप्रियां भुवि निशां सनिरुद्धकाव्यः ।
एवं प्रभुः स्वजनभव्यकृदध्वदर्शी
प्राबोधयत् स्वकृतितोऽद्भुतरासकेलौ ॥ १४३ ॥
( युग्मम् )

संस्थापनायेति : १०.३३.२७.

यो यन्निषेद्धा नहि तेन जातु तत्कार्यमित्यादृतशास्त्रबुद्धिः ।
श्रुत्या निषिद्धं परदारसङ्गं कथं चचार स्वयमित्यपृच्छत् ॥ १४४ ॥

विचारं वृत्त्यंशेऽगुणसगुणभावैकविषयं
विधायाद्याध्याये नृपतिरवधानायतमतिः ।
अपृच्छद्भूयोऽपि स्थितिमनुपमानन्दजननीं
तदा तादृग्वृत्तेरवितुरवनौ विस्मितमनाः ॥ १४५ ॥

साङ्गोपाङ्गसुयोगवैभवविधिर्व्यक्तीकृतः सर्वतो
ज्ञातोऽप्यत्र रुचिर्न मेऽस्ति भगवद्भक्त्याऽमृतास्वादिनः ।
केचित्त्वत्र विचक्षणा अपि जनास्तन्मात्रसक्ता भव-
न्त्येतस्मिन्नुदितं तु संशयमिमं गुर्वोक्तितोऽपाकुरु ॥ १४६ ॥

आम्नायप्रमुखाखिलाङ्गनिचयैः सर्वैः समुद्घोषितो
दोषो नित्यनिमित्तजोदितविधेर्लोपेऽनवद्यस्य हि ।
सिद्धोऽसौ तु निसर्गतो बहुदिनव्यापारशून्यात्मनि
योगे तद्युजि पुंसि तन्न सुकृतं स्यात्प्रत्युताघोदयः ॥ १४७ ॥

स कथमिति : १०.३३.२८.

तस्मात् सर्वमतश्रुतिस्मृतिचयप्राप्तां स्वधर्मस्थितिं
त्यक्त्वाऽन्यस्थितिमाश्रितो व्रजगता गोपीः सकामा अपि ।
एकीकृत्य भुनक्त्यहो रहसि यद्योगीति तन्मे दृशा
निन्द्यं भात्यखिलार्थवित् त्वमसि तत् तत्तत्त्वमाविष्कुरु ॥ १४८ ॥

आप्तकाम इति : १०.३३.२९.

सर्वोऽपि स्वात्महितो भवति जनः सर्वदेति निर्णयतः ।
तत्कृतिरपि हितकृत्स्यात्परन्तु कथमिति न वेद्मि तद्वद भोः ॥ १४९ ॥

एवमाशयमाज्ञाय राज्ञस्त्र्यर्थसमाश्रयम् ।
तत्त्वज्ञो मुनिरप्यूचे तत्र सत्तत्त्वमुत्तरम् ॥ १५० ॥

राजन् सर्वमिदं न्यरूपि बहुशः प्रागेव विस्तारतः
शङ्कोन्मेषहरं यथा भवति ते तत्राप्यसावुद्गतः ।
तं भूयोऽपनयामि संशयमलं वाक्यैः श्रुतिस्थार्थगै-
रेवं गौरवमाविधाय निरघामेषामुवाच स्थितिम् ॥ १५१ ॥

धर्मव्यतिक्रम इति : १०.३३.३०.

राजन् सत्यमिदं निषिद्धमिह यत्कुर्यान्न तज्जातुचि-
च्छास्त्रं किञ्चिदमन्त्रितं भवति भोस्तत्रैव योऽस्मिन्सदा ।
राजाज्ञावदलं बिभेति विधितः सम्प्रत्ययं तु प्रभुः
सर्वस्यापि विधेरपि प्रतिविधेः कर्ताऽस्य तद्भीः कुतः ॥ १५२ ॥

यन्मायाकलनासमर्थधिषणो दिङ्मूढवृत्तिर्विधि-
र्यत्पादे शरणीभवन्नतचतुर्मूर्धाऽऽप निष्पापताम् ।
स्वातन्त्र्याद्यपदस्य सत्यवचसस्तस्य प्रभोरच्युत-
स्यास्यास्तत्कृतलेखलङ्घनभियः का नाम संभावना ॥ १५३ ॥

पित्रालेखप्रमाः पुत्रा न पिता पुत्रलेखधीः ।
धर्म एषोऽभवत्सुस्थो नाधर्मांशोऽस्ति कश्चन ॥ १५४ ॥

यदि स्यादधर्मस्तदैशं चरित्रं
कथं शृण्वतां स्यादधर्मापहारि ।

ततो निर्णयः स्पष्ट एवाजनीह
स्वयं कर्तुमीशोऽन्यथा कर्तुमीशः ॥ १५५ ॥
विधिबोध्यो धर्म इति श्रुत्योक्तं स्थूलधिय इहोद्दिश्य ।
हरितोषदस्तु धर्मो दर्शित मे तत्तदात्मना श्रुत्या ॥ १५६ ॥
धर्मो धर्म इति श्रोतो घोषः फलबलादलम् ।
वक्तव्यस्तत्त्वमेवैतत् पश्याघमथवाऽनघम् ॥ १५७ ॥
स्युर्यत्साक्षितया लोके चतुर्दश हि साक्षिणः ।
तत्कृतौ कस्तदन्योऽस्ति साक्षी तत्सदसद्ग्रहे ॥ १५८ ॥
काकोलादनमग्निपानमचलोद्धारं करेणाचिराद्
गोपोज्जीवनमप्यथाऽहिदमनं यच्चान्यदप्यद्भुतम् ।
लीलामात्रमितीशकृत्यमखिलं निःशङ्कमाशृण्वतः
शङ्काऽत्रैव तवोदितेति नृपते चित्रीयते मन्मनः ॥ १५९ ॥
स्वर्णद्यामतिपूतिगन्धसलिलस्पर्शः करे चैन्दवे
स्पर्शः शूद्रततेरभक्ष्यभजनासक्तिः कथं पावके ।
अर्के दूरससंग्रहानुसरणं चेत्याद्यसत्प्रश्नकृन्-
मूर्खोऽस्मिन्निति जानता प्रभुकृतौ वाच्यं न वाच्यं क्वचित् ॥ १६० ॥
कृत्स्नाधिव्याधिविध्वंसनपटुविविधानेकजन्मार्जिताघ-
व्रातप्रध्वंसकृद्यच्छ्रवणमपि सकृत् प्राणिनां प्रेष्ठदायि ।
तच्छ्रीनाथस्य भव्योज्ज्वलरसकलितं चित्रचारित्र्यमेतत्
साधं चावद्यमेवं सकृदपि मनसा चिन्तयेत्कः कृतज्ञः ॥ १६१ ॥
अचिन्त्याः पन्थानो जगति महिमानोऽपि महतां
ध्रुवं निःसीमानश्चरित-ममिताश्चर्यकृदहो ।
अगाधप्रामाण्यं वचनमपि किंवा बहुगिरा-
ऽखिलं सर्वोत्कृष्टाद्भुतमिति न तत्राद्भुतमिदम् ॥ १६२ ॥
नैतत्समाचरेदिति : १०.३३.३१.
येषां कर्तुमकर्तुमन्यथयितुं जागर्ति शक्तिः सतां
तेषां गेयमघापहरि चरितं कार्यं न जातु स्वतः ।

श्रेयः काङ्क्षिभिरादरादिह यतः स्वार्थे स्वतन्त्रा हि ते
तस्मात्तद्वचनोक्तमुक्तवचनोपेतं च कुर्यात्कृती ॥ १६३ ॥

कुशलाचरितेनेति : १०.३३.३३.

सत्कर्माणि फलाभिसन्धिरहितान्येवात्र ये कुर्वते
तेषां कर्म न पापकार्यपि भृशं पापाय सञ्जायते ।
यस्मात्ते नृप सर्वतोऽपि निरहङ्कारान्तरङ्गाः सदे-
त्युक्ता सत्स्थितिरच्युतस्त्वतुलसद्वृन्दावनश्रीयुतः ॥ १६४ ॥

तेजस्विनां साहसतो न भीतिस्तपस्विनां वेत्यवनावगूढम् ।
अयं तु साक्षात् प्रभुरुज्ज्वलश्रीरतेजःस्वरूपः सुतपःस्वरूपः ॥ १६५ ॥

यत्पादपङ्कज इति : १०.३३.३५.

येऽलन्यभावकलिताच्युतपादपद्मा-
स्तेषामपीह नहि साहसतोऽस्ति भीतिः ।
साक्षादयं विधिनिषेधविबोधिवेदा-
गम्यस्वरूप इति तत्र कुतोऽयमंशः ॥ १६६ ॥

गोपीनामिति : १०.३३.३६.

योऽखिलान्तर्गतोऽसौ तत् पत्यन्तरगतो न किम् ।
तथात्वे च स्फुटं श्रीशः पतिः सत्यश्च ता इति ॥ १६७ ॥

तासामास तदा ध्रुवं प्रभुरसौ सङ्केतभर्त्रात्मकः
प्रोक्तं प्रागिति यत्ततोऽप्यजनि भोस्त्वत्प्रश्नवागुत्तरम् ।
किञ्चेहापि निजानमंसत जना दारान् स्वपार्श्वस्थितां-
स्तत्केनापि न हेतुना प्रभुकृतौ शङ्कावकाशोऽधुना ॥ १६८ ॥

वृत्तीनामवितुः स्थितिः कथमियं कामेन लोभेन चा-
हङ्कारेण समन्वितेति यदिदं पृष्टं त्वया तन्मुधा ।
वृत्त्यंशो निरणाय्यशङ्कमिह चेत्तेनैव तच्छालिनो
जातो निर्णय इत्यलं नृप पृथङ् नात्रोत्तरापेक्षणम् ॥ १६९ ॥

तत्राप्युक्तमिहैवार्वाक् स्पष्टं तत्स्थितिवर्तनम् ।
वशीभूतेति लब्ध्वेति लब्ध्येत्यूह्यं त्रिपद्यतः ॥ १७० ॥
( युग्मम् )

वृत्तिष्वनन्यविषयासु सतीषु च स्वा-
यत्तास्वथो तदवितुर्विहृतिर्यथाऽऽशम् ।
जातापि नाघजननाय न बन्धनाय
दोषाय वा न भवतीत्यवधारयैतत् ॥ १७१ ॥

यत्पृष्टं कर्मकाण्डस्खलनमिह भृशं पुंसि योगानुरागी-
ण्यत्राज्ञानं तवैव स्फुरति नृपवराजानतस्तस्य तत्त्वम् ।
कः कालः कः कृतान्तः किमघमनुसृतानन्दसन्दोहभाजि
किं वाऽनुष्ठेयमस्मिन् परमपदजुषि प्राणिनि प्राप्तकामे ॥ १७२ ॥

नित्यानन्देऽपि योगे यदयमुदयते संशयस्तर्हि राजन्
स्वापं कस्मान्न सर्वस्त्यजति भुवि जनः सर्वकर्मावलोपम् ।
पुण्याघोत्पत्तिहेतुव्यवहृतविलयस्तत्र चेदत्र तुल्यः
कालस्तस्मिंस्तु गण्यः स्वसुखमविदितं नैवमत्रेति लाभः ॥ १७३ ॥

नित्यं नैमित्तिकं चाभ्युपगतमपि यत्कर्म तत्तत्पुरस्तात्
गङ्गास्नातुः प्रतोलीसमलजलमिवानादरस्यैव पात्रम् ।
यत्तत्संपाद्यमर्थं बहुदिननिचयैर्निर्व्यलीकात्मसौख्यं
भुङ्क्तेऽसौ नित्यमेवेत्यनुपमचरितः कोऽस्ति धन्यस्तदन्यः ॥ १७४ ॥

स्वायत्तीकृत्य गोपी रहसि स हरति प्रोल्लसद्रासरूपा-
नन्दक्षीराब्धिवासाश्रयणमिह महानेष एवास्य धर्मः ।
त्यक्त्वा तं बाह्यवृत्तिप्रसभरतिजुषो ये भवन्त्यन्यदारा-
सक्तास्ते स्युः सतीत्थं नृप कथमधुना पृष्टवानन्यथैतत् ॥ १७५ ॥

वृन्दावने सदानन्दविभूतौ सुरसात्मनि ।
कुर्वत्यपि न योगीशो स्पर्शः पुण्याघकर्मणाम् ॥ १७६ ॥

अल्पमनल्पं सुकृतं दुरितं वेत्युभयमप्यशेषजने ।
योगीश्वरमिममनुपममवेहि परमैकसुकृतमयमूर्तिम् ॥ १७७ ॥

अनुग्रहायेति : १०.३३.३७.

भगवानिह पूर्णसर्वकामः स्वजनानुग्रहनित्यसाभिलाषः ।
भवतीति तदस्य सर्वकृत्यं नृप जानीहि सदैव सञ्चितार्थम् ॥ १७८ ॥

अनवद्यपदाद्यभूमिभाजः सदयस्यास्य विधीन्द्रपूजिताङ्घ्रेः।
यदवद्यमलीकमुक्तमस्मादनघां तन्नतिमाचराचरामि ॥ १७९ ॥

ब्रह्मरात्र इति : १०.३३.३९.

युक्तो योगप्रकारो य इह भृशमसौ योगविन्मौलिमान्यो
मन्ये यद्ब्रह्मरात्रे विशदमभिहिते कल्पसन्धानमस्मिन्।
भूतानां या निशाऽस्यां विहरति सुयमी चेत्यपि स्मार्तवादो
भूयस्तस्यानुकूल्ये स्थित इति विशदं तद्विधिज्ञैर्विशोध्यम् ॥ १८० ॥

योगान्तरङ्गसुखसिन्धुसुधारसज्ञा-
स्ता वृत्तयो भुवमनादरमावहन्ति।
आपातमञ्जुरस - गोकुलवर्तनेष्वि-
त्यासीदलिच्छितगतैः स्फुटमत्र तासाम् ॥ १८१ ॥

आकल्परात्रिमाकल्प्य यत्ताः प्रभुररीरमत्।
ताच्छील्यमासां वात्सल्यमस्यासीममभूद् द्वयम् ॥ १८२ ॥

धन्यं वन्यलतादि धन्यमुदकं धन्या च वन्यावनी
धन्यान्येव सुमानि तान्यपि तथाऽन्ये तत्र तत्राश्रिताः।
श्रीकान्तेन निशान्तशोभिनि वने कान्ताभिरैकान्तिकी
क्रीडाऽकारि हि यत्र यत्र सकलानङ्गप्रदा पश्यताम् ॥ १८३ ॥

नीचोऽस्तूच्चतरोऽस्तु वा तदवनं कुर्यामहं स्वाश्रयाद्-
गत्वा तत्र पदा निजेन यदसौ मद्भक्तिभाग्यान्वितः।
इत्थं स्वं वचनं विधालुमुचितं प्रासस्त्वमत्रान्यथा
कुत्राब्धिः क्व च गोकुलं क्व च रमा काश्मीरवामभ्रुवः ॥ १८४ ॥

वल्लव्यो न च वल्लवा अपि न सा पल्ली न हल्लीसकं[1]
ताभिः फुल्ल-सुमल्लिका-परिमल-प्रोल्लासि-वृन्दावने।
यच्चान्यच्च चरित्रमच्युतकृतं भूयस्त्वयाऽन्यन्न तत्
किन्तु श्रीरमणाखिलोऽप्ययमसौ मत्पुण्यपाकोदयः ॥ १८५ ॥

अनङ्गसुखसङ्गिनावपि कृताङ्गसङ्गौ मिथः
सदाचरणतत्परावपि कुजन्मिलीलाप्रियौ।

---

१. नारीमण्डलीनृत्यम्।

तडिद्घनविलासिनावपि च मेघविध्वंसिनौ
नमाम्यमितकामदौ सुरसगोपिका-माधवौ ॥ १८६ ॥

विक्रीडितमिति : १०.३३.४०.

हृद्रोगविगमायैव विक्रीडितमिदं हरेः ।
युक्तमुक्तं फलं तस्माद् गोपीवत्पठतामपि ॥ १८७ ॥
यन्नामापि सकृत्प्रोक्तमनामयकरं नृणाम् ।
सुव्यक्तमेव हृद्रोगापहं तद्रासकीर्तनम् ॥ १८८ ॥

वाङ्नाम्न्याः कामधेनोर्मुनिवरवदनक्षीरसिन्धूदिताया-
नेशः शेषोऽप्यशेषं तदुदितमवनावर्थजातं ग्रहीतुम् ।
तत्राहं त्वल्पबुद्धिस्तदपि पृथुनृपादर्शिताध्वावलम्बी
वत्सीभूयेप्सितार्थग्रहणमकरवं सद्भिरप्येवमूह्यम् ॥ १८९ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिक-निवासि-कविवर-हरिसूरिविरचिते
श्रीभक्तिरसायने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

एकदेति : १०.३४.१.

या स्त्रीणां वरदा बभूव विहितानङ्गार्चनानामपि
सा साङ्गार्चनतः प्रसादसुमुखी स्यादत्र कः संशयः।
इत्थं निश्चितवासना व्रजजनाः सर्वेऽपि साभ्यर्हण-
मन्येऽन्यान्यपहाय देवसदनान्यागुस्तदम्बावनम् ॥ १ ॥

तत्र स्नात्वेति : १०.३४.२.

नित्यं कृष्णोल्लसद्दिव्यरसभाजो हि वल्लवाः।
युक्तमेव तदाऽऽसंस्ते प्राप्तसारस्वताऽमृताः ॥ २ ॥
कालिन्द्यां विहितस्नानाः प्राप्तसारस्वताम्भसः।
गङ्गाप्राप्त्यर्थमानर्चुः प्रायो गङ्गाधरं हि ते ॥ ३ ॥

गङ्गां तापापनुत्त्यै वहति सदमृतं दातुमेवामृतांशुं
कामं रामानुषङ्गं जगति धनपतेर्मित्रतामर्थजातम्।
नित्यं स्वाभीष्टदाता विशदयितुमलं स्वं जने शङ्करत्वं
सत्यं धत्ते दयालुः शिवपदमपि यस्तत्पदेऽस्तु प्रणामः ॥ ४ ॥

आशावासस्थितिस्त्वं भव भवसि ततोऽभ्यर्थनीयं पुरस्ते
किं वाऽऽस्तां तामपर्णां प्रतिकृतनतयो भूर्यपर्णा भवामः।
गा नस्त्वं पालयेथा यदसि पशुपतिर्गोगतिश्चेति तद्वाक्-
श्रुत्याऽऽनन्दी स गौरी स्मितमुखनयनः पातु नः पार्वतीशः ॥ ५ ॥

उचितमिदमवैमो गोव्रजत्राणकामा
भुवि पशुपतिमेव प्रास्तुवन् गोपसङ्घाः।
स्वहितनिहितदृष्टिः स्पष्टमस्मिन् सजातिं
पुरुषमतनुभूतिं स्तौति लोकोऽखिलोऽपि ॥ ६ ॥

---

१. कृष्णाः यमुना च। २. दिगम्बरः आशाया वासो यस्यां सा स्थितिश्च।
३. अपगतऋणाः।

जननीति पदोल्लासस्त्वय्यैवाम्ब विराजते ।
प्रजापदं तथाऽस्मासु तद्रक्षस्व दयादृशा ॥ ७ ॥

गावो हिरण्यमिति : १०.३४.३.

जननीजनकौ समानरूपावपि माता निरुपाधिकप्रसादा ।
जनको न तथेत्यबोधि नूनं गिरिशप्रीतिकरार्थदानलेखात् ॥ ८ ॥

ऊपुरिति : १०.३४.४.

जडमन्तर्हितं कृत्वा तटस्थत्वमुपागतः ।
यस्तस्य व्यक्तमेवास्मिन्निर्व्यापारतया स्थितिः ॥ ९ ॥

कश्चिन् महानहिरिति : १०.३४.५.

सारस्वतं रसं लब्ध्वाऽप्यस्मिन् यो विपिने पुमान् ।
मायानिशि शयीताऽसावहिग्रस्त इति स्फुटम् ॥ १० ॥
अन्तर्हित - महानन्दो भवत्येव क्षुधातुरः ।
इति किं व्यञ्जयन्नर्थं तमहिर्जग्रसे तथा ॥ ११ ॥

स चुक्रोशेति : १०.३४.६.

तिष्ठन् ब्रह्मण्यपीह श्रुतिभुवि तमसा विस्मृतात्मस्वरूपः
स्याच्चेद्ग्रस्तोऽहिनाऽसौ प्रभवति सहसेत्यद्भुतं नाद्भुतं तु ।
एतद्यत्तादृशोऽपि स्मरति यदि विभोर्नाम कृष्णस्य सद्यः
पात्रं स्यात्कृपायाः सुरुचिपृथुमहानन्दसच्छब्दवाच्यः ॥ १२ ॥
अघात् समुद्धृता येन पशुपाः पशवोऽपि स्वः ।
तद्ग्रस्तं तातमाश्रुत्य कथं न स्यात् त्वरान्वितः ॥ १३ ॥

अलातैरिति : १०.३४.८.

अनेकगोपाल - वितीर्ण - काष्ठप्रहार - वैफल्यमवेक्ष्य तत्र ।
सनन्ददुःखासहनः सवज्रपादप्रहारं क्षममच्युतोऽधात् ॥ १४ ॥
अहिहतिः पविना सुलभा हरेर्जनि पूर्वमिहापि तथोचिता ।
इति विचिन्त्य हरिस्तमहिं द्रुतं पविपदेन पदेन जघान किम् ॥ १५ ॥

---

१. जनानां नीतिः, जननी इति च । २. आनन्दो नन्दश्च । ३. वृत्रासुरः । ४. इन्द्रस्य ।

भवति न विषबाधा यस्य कालत्रयेऽपि
प्रभवति हि स एवान्यस्य सञ्जीवनाय।
इति विभुरवधार्य स्वाप्तसञ्जीवनार्थी
सदमृतघटमङ्घ्रिं युक्तमस्मिन् युयोज ॥ १६ ॥

सदुर्लभं पदमहं निजमर्पयामि
तस्मै विपत्स्थितिजुषे द्विषतेऽपि तोषात्।
यः सम्मुखीकृतमदिष्टजनस्त्वितीशो-
नाबोधि तादृगहये ददता पदं स्वम् ॥ १७ ॥

यस्मात्पादनपिचण्डिलदीर्घगात्रः
पत्स्पर्शमात्रत इहाहिरगाद् विनाशम्।
नैतद् विचित्रमहिताक्ष्यनिसर्गवैरं
ताक्ष्यध्वजस्य चरणोऽपि स सध्वजो यत् ॥ १८ ॥

मित्रारितुल्यदक्त्वं स्वं दर्शयन्नहिनन्दयोः।
विपज्जुषोरदात्तुल्यां पदस्पर्शात् सुखश्रियम् ॥ १९ ॥

यावन्निःशेषमायारजनिनिरसनं जायते सेवते य-
स्तावद् भूयो निगृह्येन्द्रियगणममृतं ब्रह्म सारस्वतं सः।
न स्यात्क्ष्वेलक्कृतान्तोरगमुखपतितो जातु जातोऽप्यबाध-
स्तस्मान्मुक्तश्च शीघ्रं हरिगुरुकृपया स्यादिति प्रोह्यमस्मात् ॥ २० ॥

सेवां देवस्य कस्याप्यतनुत पिबत श्रेष्ठमम्भोऽपि भूयः
पुण्ये वाऽरण्यदेशे निवसत सुहृदोऽनेकशो वाऽऽश्रयध्वम्।
कालात्युग्राहि मुक्तिं त्वनुभवति जनः स्वात्मलाभं च तस्मा-
देकस्मादेव कृष्णादिति कलयन् भोऽत्र साक्षी स नन्दः ॥ २१ ॥

प्रपञ्चत्वं लोके प्रकटयति यः कालभुजग-
स्तमप्यङ्घ्रिस्पर्शात् सपदि गतमोहं वितमसम्।
करोम्येवं भक्तार्थित इति जने संविशदयं-
स्तथा चक्रे श्रीशो निरुपधिदयस्तादृशमहिम् ॥ २२ ॥

---

१. आपत् पदशून्या च। २. प्रपञ्चभावः प्रकृष्टं पञ्चत्वं च।

अहिमपि मुक्तिपदं योऽनयदनुकम्पी स नायको लक्ष्म्याः ।
निजभजकं तद्ग्रस्तं विमोचयेदत्र कोऽस्ति सन्देहः ॥ २३ ॥

शापाहिभावमुपयातममुं पदेन
सद्यः सुदर्शनपदं नयताऽच्युतेन ।
व्यक्तीकृतं निजजनावनदीक्षितेन
स्वीयं सुदर्शनकरेत्यभिधानमस्मिन् ॥ २४ ॥

स वै इति : १०.३४.९.

धृते हि भावे भगवत्पदाप्तिः
सर्वत्र सिद्धेति किमत्र चित्रम् ।
त्यक्ते हि भावेऽपि स चित्रमासीद्
विद्याधरो नाम सुदर्शनश्च ॥ २५ ॥

दुर्दर्शनो विपत्स्थितिरासीत् प्राग् विप्रयोगतो युक्तम् ।
भूयः सुदर्शनोऽभूत् सम्पत्स्थितिरपि स साधुसंयोगात् ॥ २६ ॥

गीताभ्यासी जातुचिन्मोहसर्प-
भ्रान्तो जातोऽप्येष विद्याधरेव ।
नष्टे दिष्टे दुर्भगे स्वात्मरूपं
पश्यत्यस्मिन् सोऽहिरेव प्रमाणम् ॥ २७ ॥

तमपृच्छदिति १०.३४.१०.

गीताभ्यासरतोऽस्तु वा सुखगतिर्विद्याधरो वानिजा-
त्मेक्षा हृष्टमतिः सुदर्शन इति प्रख्यातिभाजस्तु वा ।
स्याच्चेद्द्विप्रवरोपहासकृदसावप्येति सद्यस्तम-
स्तत्रान्यस्य तु का कथेति सुहृदां बोधाय पृच्छां व्यधात् ॥ २८ ॥

कस्यापि सहते नेशो ब्राह्मणस्यावहेलनम् ।
किं पुनर्भक्तियुक्तस्य विद्वद्वरशिखामणेः ॥ २९ ॥

जपस्तपस्तस्य सवादि वाऽखिलं
प्रमादिनो जायत एव निष्फलम् ।

---

१. सुदर्शनं करे यस्य सः, सुदर्शनोत्पादकश्च । २. विप्रस्य योगः, वीत्यक्षरप्रयोगश्च । ३. साधोः संयोगः साध्विति च्छेदः, समित्यस्य योगः ।

रहस्यमेतन्निगमस्य भाति मे
सकृत् कृतं येन हि विप्रहेलनम् ॥ ३० ॥
विप्रः कृतापराधोऽपि वक्तव्यो नापभाषितैः ।
नात्र मानान्तरापेक्षा यच्छ्रीवत्सधरः प्रभुः ॥ ३१ ॥
विप्रविहितसाहसमपि परस्य पुंसस्तु भूषणायैव ।
अभवद्भृगुपदघातः श्रीपतिवक्षसि महानलङ्कारः ॥ ३२ ॥

अहं विद्याधर इति : १०.३४.१२.

विद्याधरेति मम नाम सुदर्शनेति
मात्रे[1]डितं सदय केवलमास पूर्वम् ।
तच्चार्थवद्विरचितं स्वपदार्पणेन
नीत्वैनमीश कृपणं स्वसुखस्वरूपम् ॥ ३३ ॥

ऋषीनिति : १०.३४ १३.

विप्रो नाम पदार्थ एव भगवँल्लोकेऽभिवन्द्यः स्वतो
विद्वाँस्तत्र तु किं पुनः पुनरसौ चेद् ब्रह्मनिष्ठाग्रणीः ।
तस्यैतस्य जगद्गुरोरपि मुधा येनोपहासः कृतो
दण्डस्तस्य ममोचितोऽयमधुना त्वत्पादलाभोऽधिकः ॥ ३४ ॥
अहो सदय भक्तिमज्जनसुखावतारः प्रभो
दयाविधिरयं च ते भुवि विभात्यनन्यादृशः ।
पुरा यदहिरप्यहं तदनु च स्वतातः समु-
द्धृतस्तदिदमद्भुतं मनसि कस्य न स्यादलम् ॥ ३५ ॥
सर्वशूराभ्यराजोऽपि दयया रञ्जितो हि यः ।
तस्मै चित्रचरित्राय तुभ्यं कृष्णास्तु मन्नतिः ॥ ३६ ॥

निशम्येति : १०.३५.१९.

निशाम्य वैभवं श्रैशं निशम्य च तदास्यतः ।
व्रजस्थानां व्रजे भूयो वासेहाऽऽसीदिति क्षमम् ॥ ३७ ॥

कदाचिदिति : १०.३४.२०.

---

१. जनन्या । २. रञ्जितः अरमिति च्छेदश्च ।

अशश्रुमुखसंस्पर्शे सदानन्दे विराजिते ।
निरामयाभियुक्तं तद्वृत्तिभिर्वर्तनं प्रभोः ॥ ३८ ॥

कृत्वाऽहिनिर्दलनमात्तसुदर्शनश्री-
योगी स्वयोगकलिताऽखिलवृत्तिजालः ।
रात्रौ वने च विहरेदभयं मनोज्ञे
सुव्यक्त - मेतदजनीश - सरामकेल्या ॥ ३९ ॥

सुखस्थितिरहेर्दृष्टा नाहिपस्य समांशतः ।
नैव मे त्वग्रजहृदीत्यनेनारमत प्रभुः ॥ ४० ॥

तयोर्निरीक्षतोरिति : १०.३४.२६.

सद्भक्तवृत्तिमपहर्तुमलं किलाखिन्
स्वल्पं धनं स हि पुनर्धनदार्पितश्रीः ।
तद्युक्तमेव निधिमौलिरशेषयोषाः
सद्यो जहार दिशि तादृशि दुर्मदान्धः ॥ ४१ ॥

निर्बलसाहसविधौ धनवन्न लोके
वस्त्वन्यदस्तमितशङ्कमलं नियोक्तृ ।
एतत्स्फुटं हि सबलाच्युतसन्निधाने
तत्संश्रिता अपि जहार सता धनाढ्यः ॥ ४२ ॥

शालहस्ताविति : १०.३४.२८.

श्रेयान्कुजोऽप्ययं न त्वं यदसौ मत्कराश्रितः ।
त्वं तु सम्भ्रमदोऽपैषीत्यबोधि दधता द्रुमम् । ४३ ॥

स वीक्ष्येति : १०.३५.२९.

आत्मरक्षार्थमाजह्याद्भूमिमित्यस्ति विश्रुतम् ।
युक्तमेव तदा स्वार्थं योषितस्त्यक्तवानसौ ॥ ४४ ॥

तमन्वधावदिति : १०.३४.३०.

यदुन्मादादयं यक्षाधमः सम्भ्रमदोऽभवत् ।
हर्तव्यं तदिति श्रीशो युक्तं तन्मणिवासनः ॥ ४५ ॥

---

१. संश्चासौ आनन्दश्च तस्मिन्, सदेति च्छेदश्च ।

अवलाश्रितस्य बहुलप्रमदापद्धतिर्हि तादृशेन मया ।
विहितेति बोधनाय स्वयमबलः संस्तमच्युतोऽधावत् ॥ ४६ ॥
योगबलेन हि वृत्तीः सर्वाः संरक्ष्य योगवित्सुजनः ।
बाह्योपाधीन् हन्यादिति विशदं युवतिरक्षणाद् बलतः ॥ ४७ ॥
निष्ठा चेत्कृष्णपदे सद्योऽप्यकुतोभयो भवति जन्तुः ।
स्पष्टमिदं ता अबला अपि सबलाः कृष्णभक्तितो ह्यासन् ॥ ४८ ॥
विशालमेनं यदि शालतोऽहं भृशं हनिष्यामि तदा ह्यनीतिः ।
भूयादितीशः स्वकरेण राजराजाश्रितस्यापि शिरो जहार ॥ ४९ ॥
ममैकः पाञ्चजन्योऽस्ति शङ्खचूडाश्रितो मणिः ।
तदन्यः कोऽयमत्रेति जहार सदिदृक्षितः ॥ ५० ॥
धनमल्पमनल्पं वा लब्धं चेदनुजन्मना ।
तत्र स्वत्वं त्वग्रजस्येत्यादात्तस्मै मणिं प्रभुः ॥ ५१ ॥
बाह्योपप्लवविलये योगबलावाप्तसुखवसतीनाम् ।
वृत्तीनां न परोक्षं किञ्चिदपीति स्फुटं तदीक्षणतः ॥ ५२ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर हरिसूरि-विरचिते
भक्तिरसायने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

१. विस्तीर्णं विगतशालं च । २. शङ्खानां चूडाश्रितः, शङ्खचूडो धनदानुचरस्तदाश्रितश्च । २. सञ्जातदिदृक्षः ।

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

गोप्य इति : १०.३५.१.

द्वयोः स्त्रीभिः सह क्रीडां निरीक्ष्येतस्तदद्वयम् ।
ता बोधयन्त्यो युग्मेनास्तुवन् केवलमीश्वरम् ॥ १ ॥

द्वैतोरीकरणादृते न घटते सर्वात्मनाऽऽत्मस्तुति-
वृत्तीनामपि वा प्रवृत्तिरगुणे नैवात्मनि स्यादिति ।
आम्नायप्रतिपादितार्थविशदीभावाय ता गोपिका
युग्मेनैव तमस्तुवन् व्रजगता वृन्दावनोद्यद्गतिम् ॥ २ ॥

युग्म एव सुखोल्लासः समुज्ज्वलरसे निशि ।
नाद्वैत इति तद्रासमुखिता - स्तुष्टुवुस्तथा ॥ ३ ॥

सच्छायो मिहिरो घनश्च सतडिद्राकान्वितश्चन्द्रमा
भूपो भूकलितो विभुः प्रकृतियुग् दाता युतः सम्पदा ।
सस्त्रीकः पुरुषो नयोऽपि च धिया कामोऽपि रत्यान्वितः
साधुर्भक्तियुतो मधुश्च सुलतस्तद्वत्त्वमस्मन्श्रुतः ॥ ४ ॥

प्राप्नोषि सुषमामेवं व्यञ्जयन्त्यो निजाशयम् ।
चक्रुर्द्वादशयुग्मैस्ता गीथं गोप्योऽच्युतार्थकम् ॥ ५ ॥

( युग्मम् )

वृत्तीनां यौगिकानन्दरसभाजां बहिः स्थितिः ।
व्युत्थानजाहीदृशीति तदहस्थितितः स्फुटम् ॥ ६ ॥

आरामः सुमनोलताभिरिह सत्पुष्पाभिरम्भोधरो-
वर्षाभिश्च समुज्ज्वलाभिरभित - स्ताराभिरेवोडुपः ।
सौभाग्यं सुरतातिशायि सुखमप्याप्नोति नैवाऽन्यथा
जानन्नेवमसौ प्रभुः सखि कथं संत्यज्य नः क्रीडति ॥ ७ ॥

वामबाहुकृतेति : १०.३५.२.

सबाहुः सकपोलोऽपि पुमानत्रास्ति को रसः ।
तददक्षिणयोरेव - मुभयो - रथवोचितम् ॥ ८ ॥

यदस्माभिः पेयं मधुरमधरस्थामृतमसा-
वसारस्तद्वेणुः पिबति भविता बीजमिह किम्।
अपुण्यं वास्माकं सुकृतमथवा तस्य किमुता-
विवेकोऽयं दातुर्यदनुचितपात्रे वितरणम् ॥ ९ ॥

व्योमयानेति : १०.३५.३.

आदावङ्गुलिमण्डलीभिरभितो वेणुं निरीक्ष्याश्रितं
साश्चर्याः पुरुषायितस्थितिमथो निर्णीय सापत्रपाः।
कामेष्वर्पितमानसास्तदनु ताः कान्ताः सकान्तास्तदा
जातास्तद्रसलिप्सया नखगताः कृष्णस्य खस्था अपि ॥१०॥
वेणुमङ्गुलिभिराश्रितमार्गमेतदङ्घ्रिफलितार्थविचारे।
तत्कृतश्च पुरुषायितभावो भाति भावकुशलैरवलोक्यः ॥ ११ ॥
( युग्मम् )
वादयतीशे वेणुं जातास्तन्मूर्च्छनाश्रिता देव्यः।
चित्रं न चित्रमथवा श्रुतिसङ्घटिता हि ता यतो गदिताः ॥ १२ ॥
देव्योऽपीह सुखस्थिता अपि सदा संसिद्धयोगा अपि
श्रुत्वा नन्दभवाननाम्बुजमरुत्-पूर्णाङ्गवेणुस्वरम्।
तत्कालं मुमुहु-र्मुहुर्मुहु-रहो तत्रापरासां कथा
का वा गोकुलगोजुषामिति तदा योषास्तथाऽवर्णयन् ॥१३॥
श्रुतिविषयात्सुखानां ननु वासोपस्मृतिः सदपि समभूत्।
शुकं तच्चित्रमिदं यत्स्मृतिर्जन्माभवद् युवतिहृदये ॥१४॥

हन्त चित्रमिति : १०.३५.४.

वेणुध्वनितस्तनितो मुहुः स्फुरद्धार-हाससित-विद्युत्।
कोऽयमकाले कृष्णः प्राप्तो घन इति सुविस्मिता आसन् ॥१५॥

वृन्दश इति : १०.३५.५.

पशवोऽपि वेणुनादं शृण्वन्तस्तत्यजुस्तदा भोज्यम्।
वयमिह मनुजा अपि सखि गोकुलनिरता इदं न किं चित्रम् ॥१६॥

---

१. स्वरारोहावरोहाः मूर्च्छा च। २. पृथ्वी। ३. कर्णौ वेदश्च। ४. वस्त्र-विस्मरणं वास इतिच्छेदः, मन्वाद्युक्तिशून्या स्थितिश्च। ५. स्मृतेर्जन्म कामश्च।

अनवद्यं श्रुतिवेद्यं हृद्यं सन्नादमन्तरोल्लसितम्।
अवधार्य युक्तमासीन्निष्क्रियवृत्तिस्थितिस्तदा तेषाम्॥१७॥

बर्हिण इति : १०.३५.६.

रजोगुण-तमोगुण-प्रचुर-सात्त्विकाडम्बरः
समाह्वयति गा यदा सदुपयोगिगोपैर्वृतः।
अधन्यमनुभाव्य वै सरसचेतसः स्वं जना-
स्तदाऽन्वभिलषन्ति यत्पदरजः प्रभोः साधु तत्॥१८॥

तर्हीति : १०.३५.७.

सद्रसाश्च सरितोऽतनुतप्तास्तत्पदाम्बुजरजोऽनिलनीतम्।
कामयन्त इह तत्सखियुक्तं पङ्कजातकलिता वयमेताः॥१९॥

अजपदाब्जरजः सखि दुर्लभं
यदभवत् सरितां जडताजुषाम्।
उचितमेतदसाध्विदमीक्ष्यतां
सरसभावविदामपि नोऽधुना॥ २०॥

अनुचरैरिति : १०.३५.८.

यदा भवचरो भवत्यखिललोकसद्धर्तनो
गिरिभ्रमजुषः समाह्वयति गास्तदा स प्रभुः।
महासुकृतशालिनस्त इह तत्तदङ्कैर्हितं
विबुध्य विभुमर्चयन्त्यलघुभक्तिभारेण ये॥ २१॥

वनलता इति : १०.३५.९.

धन्यास्ते तरवो लता अपि वनोद्भूताः सखि प्रेमतः
सम्प्राप्तं निजपत्रपुष्पफलतः सन्तोषयन्त्यच्युतम्।
भूत्वाऽस्मिन् सुलताश्रिता अपि वयं भूयो वनश्रीजुषः
पात्रं नाच्युततोषपोषकविधेर्जाताः स्म इत्यद्भुतम्॥ २२॥

दर्शनीयेति : १०. ३५.१०.

ये हंसाः समुपासते हरिपदं स्वच्छः प्रसादोन्मुख-
तेष्वीशोऽपि न चित्रमत्र यदिमे सन्मानसारोचिताः।

चित्रं ये तु सकृन्निजाङ्घ्रितुलसीस्वादाः प्रसादाहृतां-
स्तान्मत्तान् मलिनानलींश्च कुरुते तत्स्तोत्रदत्तश्रुतिः ॥ २३ ॥

सरसीति : १०.३५.११.

हंसानामपि यच्चित्तमोहकृद्गीतमैश्वरम् ।
किं चित्रमत्र तद्गीतमुग्धा गोमतयो वयम् ॥ २४ ॥

मत्तालि - गीत श्रुति - दत्तकर्णो-
ऽप्युपास्तिकृद्धंसकृतादरो यत् ।
सर्वत्र तुल्या फलिता दयाऽस्मा-
दस्मासु सख्यः किमिहाधुनैतत् ॥ २५ ॥

सह बल इति : १०.३५.१२.

यदा समुदमुद्वहन् शिरसि सञ्चरन् भूभृतः
प्रमोदयति गोपिका व्रजगताः स्वगीतस्वरैः ।
उपैति भयमन्तरे बहुमला हि मेघस्थिति-
स्तदेति कविवद्वचः सफलमास तासामपि ॥ २६ ॥

या अतीन्द्रियतया लताश्रया एव तासु वनदेवतास्वहो ।
हर्षदो भवति सर्वदा पदस्वर्चिकास्विह कुतोऽयमीदृशः ॥ २७ ॥

महदिति : १०.३५.१३.

आम्नायसिद्धमेवालि सख्यं जीवपरेशयोः ।
तन्मेघसुमनोदानग्रहणे साधुनी मिथः ॥ २८ ॥

सर्वदा त्वमसि मत्पदे स्थितो मत्पुरः कथमिहाब्द गर्जसि ।
नैवमेतु हृदये हरेरिति च्छत्रभावमुररीचकार सः ॥ २९ ॥

विविधेति : १०.३५.१४.

नानाजीवविहारचारुचरितः श्रीशो यदा कौतुकात्
तत्तज्जात्यभिमानशाल्यभिनयान्व्यक्तीकरोत्यञ्जसा ।
तत्तत्तात्त्विककल्पनिर्णयविधौ संभ्रान्तचित्तास्तदा
ब्रह्माद्याः कवयोऽपि तत्र सुखदे का वा यशोदे वयम् ॥ ३० ॥

---

१. गोवर्धनस्य । २. मेघस्थितिः, मे अघस्थितिश्च ।

यद्वेणुवादनलसत्-स्वरजातिभेदं
ज्ञातुं चतुःश्रुतिमुखोऽपि न चालमास ।
तत्रावलाः समपकृष्टमनःस्वभावाः
का वेति पश्य तव पुत्र महत्त्वमेतत् ॥ ३१ ॥

यदस्मान्व्यत्यस्ताभरणवसनस्रग्विलसिताः
समालोक्यानल्पं वदसि बत मूर्खा इति मुहुः ।
इदं मत्पुत्रस्याद्भुतकृतिफलं वेत्सि न जने-
ऽथवा सिद्धं ह्येतज्जनयितृमुदे स्वात्मजकृतिः ॥ ३२ ॥

सवनश इति १०.३५.१५.

बाले मदीयतनुजे किमहो समग्रा
आरोपयन्ति वितथार्थमनल्पशब्दैः ।
नैवं वदास्व पथि गोगणसंवृतं यं
वृद्धाः पितामहमुखा अपि संनमन्ति ॥ ३३ ॥

विधि-शिवादि-सुरेशविमोहकं भवति गीतमियं बत मानुषी ।
समवधार्य तदेत्यखिला अपि तदलमूचुरशङ्कतया सतीम् ॥ ३४ ॥

निजपदाब्जेति : १०.३५.१६.

ध्वज-पवि-यवा-ऽम्बुजा-ऽङ्कुशविचित्रशोभैः पदैर्व्रजावन्याः ।
दुःखं हरता हरिणा कार्यं दुःखापहरणमस्माकम् ॥ ३५ ॥

व्रजतीति : १०.३५.१७.

ध्वजाङ्कुशयवाम्बुज-प्रमुखलक्ष्मणः श्रीपतेः
पदस्य हृदि धारणादपगताऽखिलाघस्थितिः ।
सति प्रणयितां गता मतिरनङ्गभावा च न-
स्ततः समुचितोऽधुना हृदि विदेहभावो न किम् ॥ ३६ ॥

मणिधर इति : १०.३५.१८.

भक्तानां स्वपदानुरञ्जितधियां गास्तोपदा मालया
तौलस्या गणयन् करोति सदयो गीतोपदेशं यदा ।
जीवन्मुक्तसुखाशया जगति ते श्रीमद्गुणाकर्णना-
सक्ताः स्युर्मनसोज्झिताखिलमिलत्तृष्णाश्च कृष्णोद्धृताः ॥ ३७ ॥

क्वणितवेणुरवेति : १०.३५.१९.

वयमिव मुक्तगृहाशा हरिण्य इति साधुता इवात्र वयम् ।
सखि कृष्णसारसुखरसजुषो न जाता इतीदमतिचिन्त्यम् ॥ ३८ ॥

कुन्ददामेति : १०.३५.२०.

यदा कौतुकात् केशवो भक्तिभाजां
सुखायानघेऽस्मिन् भवे गोपगोपः ।
समाक्रीडति प्रेमतश्चित्तमन्त-
स्तदा त्वर्चनोत्कण्ठितं देवतानाम् ॥ ३९ ॥

मन्दवायुरिति : १०.३५.२१.

स्तोत्रपाठमवलम्ब्य मुकुन्दं तोषयाम इति घोस्तु वृथा नः ।
वन्दितामपि वलम्ब्य सुरौघा यं क्षमा वशयितुं न बभूवुः ॥ ४० ॥

वत्सल इति : १०.३५.२२.

भवाध्वनि यदा सदाचरणवृद्धिकृद्भक्तिभृ-
ज्जनाश्रितपदः प्रभुर्भवति वत्सलः सद्भवि ।
तदा तदवनश्रमादपि समुत्सवं दर्शयन्
पुनः पुनरतन्द्रितः श्रयति तद्रजोऽघापहम् ॥ ४१ ॥

उत्सवमिति : १०.३५.२३.

देवकीजठरभूरिति शब्दो गोपिकाभिरपि गर्गवदुक्तः ।
मोहवैभवमिहैशमचिन्त्यं सा च ताश्च मुमुहुः पुनरज्ञाः ॥ ४२ ॥

यदुपतिरिति : १०.३५.२५.

अनन्यशरणावनोल्लसदहङ्कृतिर्मानदः
सतां सुहृदनुग्रहं खलु यदेच्छतीशः स्वयम् ।
तदा बदरवत्पुरः स्फुरति गोकुलस्थायिनां
त्रितापमखिलं हरन् झटिति पूर्णचन्द्रोदयः ॥ ४३ ॥

एणा गावो मयूरा विपिनतरुलता आपगाः षट्पदाश्च
हंसोत्तंसा विहङ्गा जलधरपवना अप्यलं मानयन्तः ।

---

१. कृष्णसारो मृगः कृष्णेति च्छेदश्च । २. पृथिव्यां धेन्वां च । ३. पांसुं रजोगुणं च । ४. तत्सदृशः कृष्णः, रसायनविशेषश्च ।

दृष्ट्वा कूजत्सुवेणुं यदुपतिममितामोदपूर्णान्तरङ्गा
धन्या वृन्दावनेऽस्मिन् सपदि सखि यथाशक्ति संपूजयन्ति ॥ ४४ ॥

वयं तत्पदभाजोऽपि तद्गोकुलकृताशयाः ।
धन्यं वाऽधन्यमात्मानं नैव जानीमहे सखि ॥ ४५ ॥

( युग्मम् )

गोपदाभिहतिखेदमपीशो नैव यद्वनभुवः सहते स्म ।
तत्कथं सखि सहेत स दीनत्राणकार्यतनुखेदमहो नः ॥ ४६ ॥

भक्तत्राणनिमित्तकाखिल-लसल्लीलस्य मायेशितु-
र्यें लीलामनुवर्णयन्ति सुदृशस्तत्प्राप्तिमात्रस्पृहाः ।
तेषामेष महादयालुरचिरात् प्रत्यक्षभावं भज-
त्यत्रोदाहरणं स्फुटं व्रजगतास्तास्तादृशो गोपिकाः ॥ ४७ ॥

अनल्पमाकल्पमपि त्रितापं
सकृत्स्मृतो योऽलमपाकरोति ।
दिनानुतापापहरं तदीश-
वक्त्राब्जमासीदिति नात्र चित्रम् ॥ ४८ ॥

मुनिवरकृततादृक्पदविन्यासालोचनेन यः फलितः ।
लिखितः स युगुलगीतार्थः श्रीगोविन्ददर्शितपदार्थः ॥ ४९ ॥

यद्यपि नवं न गीतं मया प्रभो तत्तथोह-रहितेन ।
तद्गीतं त्वनुगीतं तदच्युतास्मिञ्जनेऽपि भव सदयः ॥ ५० ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने पञ्चत्रिंशोऽध्यायः ।। ३५ ।।

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

अथ तर्हीति : १०.३६.१.

श्रीशे परोक्षेऽक्षिगतामुपेयुषि
प्रायोऽन्तरायः स पुरस्तु निष्फलः ।
श्रेयःसु विघ्ना इति लोकजल्पितं
तर्हीति शब्दादवधार्यतेऽत्र हि ॥ १ ॥

मया जितं चेन्निखिलं समञ्जसं
न चेद्गतिर्माऽस्तु ममापि पूर्ववत् ।
इतीव संचिन्त्य तदा नु गोकुले
स गोपतिं तं वृषवर्ष्मणाऽऽययौ ॥ २ ॥

वृषात्मना संविशतोऽत्र गोकुले
भयं मम स्यान्न मनागरेः क्वचित् ।
उपेन्द्र एषोऽस्ति हि धर्मरक्षकः
स चेति तादृग्वपुषा किमाययौ ॥ ३ ॥

स्वधर्माच्च्यावयिष्यामि त्वां बलाढ्यमपि क्षणात् ।
अकम्पयदिति व्यक्तीकर्तुं तामचलामसौ ॥ ४ ॥

रम्भमाण इति : १०.३६.२.

अस्मत्स्वामिमनःप्रियां क्षितिमिमां गोपाङ्गनावद्वशी-
कर्तुं वाञ्छसि तस्य सम्प्रति फलं दास्यामि रे शिक्षणात् ।
इत्थं रम्भणकैतवात् कटु रटन्नीदृक्चरित्रा धरे !
त्वं चापीति स कंसशंसनमतिस्तद्बोधनायालिखत् ॥ ५ ॥

बालोऽयं यदि लोकबालसदृश-स्तर्ह्यस्त्यकिञ्चित्करः
स्याच्चेच्छ्रुत्युपदिष्ट-दिष्टपदभाक् पुष्टात्मशक्तिस्तदा ।
अस्मादप्यधिको भवाम्यलमिति प्राप्तो महानन्दितां
द्वाभ्यां पार्थिवमुद्धरन्नतिचलं बालं चकारैष किम् ॥ ६ ॥

---

१. पशुपालं कृष्णं च । २. इन्द्रः, धर्मः, वृषभश्च । ३. आनन्दी नन्दी च ।

बालपृष्ठोऽहमेषोऽपि श्रृङ्गाराध्युल्लसद्बलः ।
तद्युक्तमेतद् द्वन्द्वित्वं ममेत्यास स तादृशः ॥ ७ ॥

किञ्चित् किञ्चिदिति : १०.३६.३.

अपवित्रमलत्यागं विना न स्याद्वृषात्मना ।
सत्या मेऽन्यद्दशेत्याधान्मलमूत्रविसर्जनम् ॥ ८ ॥

दुर्मार्गार्पितचेतसापि सकृदप्यालोकितश्चेत् प्रभु-
र्बुद्ध्या हन्त यया कयापि तदपि स्यात्तन्मलोत्सादनम् ।
पश्यन् वैरधिया दुरध्ववसतिः कृष्णं सतृष्णो यदु-
त्सृज्यासौ मलमूत्रमन्तरगतं सद्योऽभवन्निर्मलः ॥ ९ ॥

पतन्तीति : १०.३६.४.

दाम्भिकोऽप्युच्छ्रितो धर्मः स्यान्नृणां गर्भमोचकः ।
सत्यश्चेत्तत्र किं वाच्यमेतद् व्यक्तमभूदतः ॥ १० ॥

तं तीक्ष्णश्रृङ्गमिति : १०.३६.५.

रजोगुण-तमोगुणाऽन्यतरभागपि प्राणभृ-
न्मुधाऽर्दयति सात्त्विकान् भुवि जनान् समुद्वेजयन् ।
अयं त्वघदतद्गुणद्वयविषाणमूर्तिः खलो
निरीक्ष्य परितत्रसुस्तमिति नात्र चित्रं हि ते ॥ ११ ॥

कृष्णेति : १०.३६.६.

तत्प्राणसङ्कटमवेक्ष्य तदा व्रजस्था
गोविन्दमेव शरणं ययुरेतदीड्यम् ।
स श्रीपतिः स्वविरुदावनदीक्षितस्ता-
नाश्वासयन्निजगिरेत्यपि युक्तमेव ॥ १२ ॥

वृषासुरमिति : १०.३६.७.

बाह्याभ्यन्तरसत्त्ववृत्तिकलितो यः स्यात् स एवावनौ
धर्मः प्रीतिकृदच्युतस्य न परो यो दाम्भिकोऽघाश्रितः ।

---

१. बालं पुच्छं वालाश्च । २. श्रृङ्गारः श्रृंङ्गाग्रं च । ३. निर्गतो मलो यस्मात्, पवित्रश्च ।

युक्तं सद्व्रजभीतिदं बहुरजःसंयोग मग्रे पदैः
कुर्वन्तं च वृषाधमं प्रभुरसौ हन्तुं यदैषीत्तदा ॥ १३ ॥
कृत्रिमाकृत्रिमैर्भावैर्भविता लोकवञ्चनम् ।
सर्वज्ञस्य पुरो युक्तं मृषा तद्वञ्चनाविधिः ॥ १४ ॥

बलदर्पहेति : १०.३६.८.

ये मद्भक्तभयावहा भुवि दुरात्मानोऽखिलानामपि
तेषां दर्प-बल-प्रमादहरणे यौ नित्यमुत्कण्ठितौ ।
तावत्रैव हि जागृतो मम भुजौ त्वद्धिंसनात्युत्सुकौ
जातौ सम्प्रति पश्य ताविति तलध्वानेन सोऽबोधयत् ॥ १५ ॥
दृष्ट्वैव मामभिमुखं ननु शूरराजं
यस्त्वं समुत्सृजसि मूत्रमले हि भीरो ।
निर्णीतमेतदसि वर्षवरो न वीर-
स्तद्योग्यशब्दकृतितः किमबोधयत् तम् ॥ १६ ॥
भक्तालिङ्गनहार्दभावविलसद्वक्षस्थलोऽधोक्षजो
यच्चक्रे द्विषतस्तदा निजभुजाभोगप्रसारं पुरः ।
नैतच्चित्रमनेककल्पजतदभ्यासस्य कृष्णस्य यत्
सामान्योऽपि हि जायतेऽल्पकलिताभ्यासानुसारिस्थितिः ॥ १७ ॥

सख्युरंसे इति : १०.३६.९.

धर्मस्कन्धा धर्मरूप इम एव मता मम ।
न त्वं वृषेति मित्रांसार्पितबाहुरबोधयत् ॥ १८ ॥
विभौ स्वशरणागतोद्धृतिमहे त्वमेहीति सद्-
वचस्यभिमुखं स्थितेऽपि च पुरस्कृतोरस्थले ।
मदाकुलविलोचनो यदयमभ्यधावद्रुषा
स एष महिमा क्रुधो निखिललोकसिद्धोऽवनौ ॥ १९ ॥

अग्रग्न्यस्तेति : १०.३६ १०.

रजस्तमःपुरस्कृतिं विना न रुष्टमन्तरम् ।
भवेदिहैशमित्यगात् पुरस्कृतस्वशृङ्गकः ॥ २० ॥

---

१. धर्मः वृषभश्च ।

कथमाकारयत्येष वीरं मां मन्दशब्दतः[1]।
इति रोषाद् वृषोऽधावदमन्दमशनिस्थितः ॥ २१ ॥

तस्मिन्नुपगते सोऽभूदचलस्थितिभागिति।
मुन्युक्ताऽस्योपमा युक्ता फलतः सा परं मुधा ॥ २२ ॥

यादृक् शस्त्रास्त्रवान् स्याद्रिपुरिह समितौ स्वेन भाव्यं तथैवे-
त्यालोच्यैवाजिधर्मं रिपुमपि सपदि प्रेक्ष्य शृङ्गैकशस्त्रम्।
मन्ये श्रीशस्तदानीं रणरसिकजन - स्तूयमानप्रतापो-
द्रेष्ट्राऽरिष्टासुरेण व्रजभुवि युयुधे प्रोल्लसद्बाहुशृङ्गैः[3] ॥ २३ ॥

गृहीत्वेति : १०.३६.११.

येन यस्य बलं भूरि निग्राह्यं तस्य तत्पुरा।
धीमतेति विचिन्त्येशो युक्तं जग्राह शृङ्गयोः ॥ २४ ॥

अष्टादशस्मृति - पुराणमयानि धर्म्या-
ण्यस्मिन् पदानि किल यानि मदीक्षितानि।
तेभ्यो बहिष्कृतगतिस्त्वयमस्त्यघात्मा
तावत्पदै-स्तदपवाहनतो - ऽन्वबोधि ॥ २५ ॥

षोडशपदोपलक्षित - सप्तदशाभिधपदं तु जीवित्वम्।
तद्रहितममुं कर्ताऽस्मीति स किमबोधयत्तथा कृतितः ॥ २६ ॥

मत्प्राप्त्युपायसारार्था विद्या अष्टादश स्मृताः।
नैकस्यामप्यधिकृतिरस्येत्यैशो - ऽथवाऽऽशयः ॥ २७ ॥

पुरस्कृत-रजस्तमःप्रकृतिरत्र यः स्यादसौ
न जातुचिदपि स्मृतिष्वधिकृतिं पुराणेषु वा।
लभेत वृषभासुरो[4]ऽप्यधिगतोपदेशोऽपि वे-
त्यबोधि विभुना तथापस्खलितस्तदा तादृशः[5] ॥ २८ ॥

---

१. अल्पः शनिश्च। २. वज्रं शनिभिन्ना च। ३. विषाणं प्राधान्यं च।
४. वृषेण धर्मेण भासुरः वृषभश्चासौ असुरश्च। ५. तादृशस्य।

सोऽपविद्ध इति : १०.३६.१२.

योऽष्टादश - बहिर्भूतो मया चाप्यवमानितः ।
वृषः स पुनरुत्क्रान्तोऽप्यफलः स्यान्मदाश्रितः ॥ २९ ॥

तमापतन्तमिति : १०.३६.१३.

अदभ्रगर्वेण मदङ्गरूपं निपीडितं प्रागमुनाम्बरं यत् ।
प्रभुः प्रतीकारमिवास्य कर्तुं तत्पीडनं चापि तथा चकार ॥ ३० ॥
लभते जनः स्वगुणतो गतिमधरामिह न तत्प्रदाताऽहम् ।
इति किं विशदीकर्तुं हरिरसुरं तं जघान तच्छृङ्गात् ॥ ३१ ॥
ये यथा मां प्रपद्यन्ते स्वाशयं व्यञ्जयन् प्रभुः ।
शृङ्गेण स्वं जिघांसन्तं शृङ्गेणैव जघान तम् ॥ ३२ ॥
मदतमोगुण - तद्गतिवासनामय - रजोगुण - रूपविषाणयोः ।
गलितमाद्विमवास तदन्यतो गतिमवाप सतामिति साधु तत् ॥ ३३ ॥

असृग् वमन्निति : १०.३६.१४.

पादस्पर्शव्यपगतमलं तं विधायासुरेन्द्रं
नाम्नाऽरिष्टं यमदिशि कथं प्रेषयामास कृष्णः ।
नैवं शक्यं क्वचिदपि जनैरित्यवोचन्मुनीन्द्रो
दुःसंस्काराहितमतिरसौ संजगाम स्वयं ताम् ॥ ३४ ॥
शरीरे रथसंज्ञा हि स्पष्टा श्रुतिषु यत्ततः ।
युक्तं तल्लयतोऽरिष्टो रथक्षयमगादिति ॥ ३५ ॥
प्रभोः पादस्पर्शप्रभव - मपुनर्भावमवनौ
फलं पूर्णं शास्त्रे निगदितमयं पुण्यजनवत् ।
अरिष्टोऽपि प्राप स्फुटमिति मुनिः पुण्यजनसं-
श्रितां काष्ठामेवावददिति न काचित् क्षतिरिह ॥ ३६ ॥
यद्वा धर्मालयं यातोऽसुरोऽसौ क्षममेव तत् ।
यैर्द्धर्मपदभागेव वृषः कोशसमीरितः ॥ ३७ ॥

---

१. यक्षाः, पुण्याश्च ते जनाश्चेति । २. यमः । ३. धर्मस्य पदं धर्मं इति पदं च ।

शान्तचित्तकृतो धर्म एवेश्वरपदान्वयी ।
तदन्यस्तु भवेद्वृक्षःपदस्थि रिति स्फुटम् ॥ ३८ ॥

एवं ककुद्मिनमिति : १०.३६.१५.

यद्गोकुले विहरतामपि भक्तिभाजां
नाशाय जातुचिदुपागतमप्यरिष्टम्[1] ।
वद्ध्वा दृढं परिकरं तदहं निहन्यां
मन्ये व्यबोधि विभुनैतदरिष्टनाशात् ॥ ३९ ॥

कारागारमभूदरिष्टमवनौ[2] यस्योद्भवेऽसौ कथं
शत्रोः स्वस्य सभासुरं बहुलसद्वर्णं च भ्रूङ्गोच्छ्रितम् ।
दृष्ट्वाऽरिष्टमनिष्टदं[3] बत तितिक्षेतेति मन्नः क्रुधि
तद्भग्नाकृति भग्नशृङ्गमकरोद्[4] यच्छत्रजित् साधु तत् ॥ ४० ॥

पापपुण्यपदवाच्यमरिष्टं यज्जघान वृषभासुरमीशः ।
तस्य बीजमुभयोरविनाशे स्यान्न मुक्तिपदयोग इतीह ॥ ४१ ॥

योऽरीष्टकारी प्रागासीत्तस्यैवैतोऽपकर्षणात्[5] ।
मन्येऽरिष्टं रिपोरेव निर्मितं प्रभुणा तदा ॥ ४२ ॥

अरिष्टं[6] कुर्वता नष्टं युगपच्छत्रमित्रयोः ।
सर्वक्लेशहृतौ तेन चातुर्यं दर्शितं निजम् ॥ ४३ ॥
वीक्ष्य विस्मयमापन्नाः सुराः सुरतरूद्भवैः ।
पुष्पैः किरन्तस्तत्स्तोत्रं तदा चक्रुरिति क्षमम् ॥ ४४ ॥

( युग्मम् )

अरिष्टे निहत इति : १०.३६.१६.

अरिष्टनाशोत्तरमेव नारदो
तत्तत्त्वतः कंसमवोचताखिलम् ।
निदानमस्येशविरोध्यरिष्टकं
विनष्टमालोक्य स हृष्टतां ययौ ॥ ४५ ॥

---

१. अशुभम् । २. सूतिकागृहम् । ३. दैत्यं सूतिकागृहं च । ४. प्राधान्यं विषाणं च । ५. भूमण्डलात् इकारस्य च । ६. दैत्यम् अशुभं च ।

न्यस्तौ स्वमित्र इति : १० ३६.१८.

विना रामं कृष्णागमनमिह चेन्मुष्टिकवधो
न कूटस्यापि स्यात् स तदुभयहन्तेत्यजलिपिः।
मृषा स्यादित्यूचे न्यसनमुभयोर्नन्दसदने-
ऽन्यथैकस्मिन् न्यस्ते कथमुभयविन्यासकथनम् ॥ ४६ ॥

निवारितो नारदेनेति : १०.३६.१९.

प्रियौ देहपुत्रावुभौ लोकसिद्धौ
स्वदेहावनार्थं यथा त्वत्प्रयत्नः।
तथाऽकारि तेनापि पुत्रावनाये-
त्यमन्तुं न हन्तुं त्वमेनं तु योग्यः ॥ ४७ ॥

पाशैर्बबन्धेति : १०.३६.२०.

कृष्णमर्यश्रीपाशावासाते एव तौ विचिन्त्य सुतम्।
ज्ञात्वेति तदघपूर्त्यै मुनिरनुमेने सकंसमतिपाशम् ॥ ४८ ॥

इमौ सपाशौ यदहं न कुर्या-
मपांशता स्वेषु ततः कथं स्यात्।
इत्यन्तरालोचित - तत्त्वधर्म-
स्तथा चकाराऽच्युतदर्शनोत्कः ॥ ४९ ॥

कृते ब्रह्मर्षिणा तत्त्वोपदेशो युक्तमेव सः।
चित्तं निगृह्य तत्साक्षात्कारायोत्कण्ठितोऽभवत् ॥ ५० ॥

अधिका भक्तोऽप्यासीद्भक्तिस्तस्य विभोः पदे।
यत्सर्वदैव तद्ध्यानबुद्धि-स्तद्गतमानसः ॥ ५१ ॥

पुरोऽपि तत्तच्चरितादिति स्फुटं
तदीयवृत्तिः प्रभुदर्शनोत्सुका।
तथार्षवाक्यादपि तद्विभाव्यते
तत्रैवमत्रांशतया निगद्यते ॥ ५२ ॥

१. लोहः श्रीः शुभावहविधिः श्रीश्च। २. मुक्तता।

प्रेषयामासेति : १०.३६.२१.

आगच्छत्विह शीघ्रं श्रीशो मदनुग्रहार्थमिति कंसः ।
तन्मिषतो निजमश्वं प्रायः समयोजयत्ततः स्वरथम् ॥ ५३ ॥
केशिप्रेषणमिषतस्तत्पदसक्तं निजं मनः कृत्वा ।
कंसः स तत्त्वबुद्धिः स्वशुभायोपादिशत् सुधर्मगतिम् ॥ ५४ ॥

आरभ्यतां धनुरिति : १०.३६.२६.

वीक्ष्य धनुः सूर्याश्रितमपीश्वरं तं च लब्धुमतिलोलः ।
समबलतया स चक्रे धनुरध्वरनियममुक्तदिने ॥ ५५ ॥
स्वधर्मे निधनाच्छ्रेयो नान्यधर्मावलम्बनात् ।
संचिन्त्यैवं धनुर्यागमेवोचे क्षत्रियर्षभः ॥ ५६ ॥
भूवलयं मम भूषणमित्येवं स्वं मदं बहिर्द्वारि ।
विनिधाय युक्तमाधात्यत्नं ह्यक्रूरयोगसंयमने ॥ ५७ ॥

इत्याज्ञाप्येति : १०.३६.२७.

त्यक्त्वा परान् यदुवरानपि लब्धवर्णा
नक्रूरमाह्वयदसौ क्षममेव तत्र ।
सामानुबोधितमती रिपुरप्ययत्न-
साध्यो भवत्यरमितीह सुराजनीतिः ॥ ५८ ॥

स्विष्टानिष्टमचिन्तयन् स्वमपरस्याभ्यर्थितं साधयेद्
दातारो भुवि सन्तु नाम बहवः सत्यं स दानव्रती ।
तस्माद्दानपतिः सदा भृशमुदासीनोऽपि दानव्रतं
मा भग्नं भवतु स्वमित्यलमलं कुर्यान्मदीयार्थितम् ॥ ५९ ॥
सत्यस्तत्पुरुषो भवेद्यदि तदा तत्रोग्रकर्मान्यथा
सिद्धो मामक एव मद्व्रतबहुव्रीहिस्मृतिश्चेद् भृशम् ।
न स्यान्मद्भयतश्च जातुचिदसौ कार्येऽत्र भेदाश्रित-
स्तद्योग्यो ह्ययमेव साम्प्रतमिति प्रायस्तमाहूतवान् ॥ ६० ॥
( युग्मम् )

१. संक्रमणविशेषः कार्मुकं च । २. सूर्येण सूरिभिश्चाश्रितम् । ३. न क्रूरः अक्रूरः, प्रसिद्धपुरुषश्च । ४. शालिविशेषः नास्ति क्रूरो यस्मादिति च ।

हठयोगान्विलोक्यास्मिन्विफलान् बहुशोऽपि सः।
श्रीशप्राप्त्यर्थमक्रूरयोगोद्युक्त इति क्षमम् ॥ ६१ ॥

मनस्वी तेजस्वी हिमभृति तपस्वी भवतु वा
तथा योगी यागी विरिपुरपरागी च सततम्।
रमाप्रेयःप्राप्तौ भवति न समो दानपतिने-
त्यसौ कृष्णाह्वाने ह्युचितममुमेवाधिकृतवान् ॥ ६२ ॥

ये याता बकपूतनाप्रभृतयोऽनश्वस्वरूपाः पुरा
तेऽप्यश्वंस्थितिमापिता मदरिणा केशी त्विहाश्वस्थितिः।
इत्यालोच्य स केशिनं प्रहितवांस्तत्साधु चक्रे च य-
ज्ज्ञात्वाऽक्रूरमनश्वरञ्जितगुणं तत्प्रेषणे गौरवम् ॥ ६३ ॥

नष्टेऽरिष्टे बलवति हरिप्राप्तिकामेन पुंसा
ज्ञात्वा श्रौतं गुरुवरमुखात् तत्त्वतस्तत्स्वरूपम्।
संयोज्य प्राक् स्थितमिह मनो दुर्ग्रहात्रं प्रसह्य
कार्यः पश्चात् कृतहितदशा शीघ्रमक्रूरयोगः ॥ ६४ ॥

सत्येवमच्युतप्राप्तिः पुंसो भवति वैभवे।
गूढोऽर्थोऽयं समाख्यातश्चरित्रेऽस्मिन्विभाव्यताम् ॥ ६५ ॥
( युग्मम् )

गृहीत्वेति : १०.३६.२८.

यन्मदिष्टं त्वदिष्टं तज्जानीह्यक्रूर निश्चितम्।
इति तद्विश्रम्भकृते पाणिना पाणिमस्पृशत् ॥ ६६ ॥

वैफल्यं क्रूरयोगानामालोक्य त्वामहं ब्रुवे।
अक्रूरस्तु त्वमेवैकः साधयाक्रूरकर्म तत् ॥ ६७ ॥

अतस्त्वामाश्रित इति : १०.३६.२९.

मदाश्रितस्त्वमद्यावध्यासीः सौम्याऽधुना त्वहम्।
त्वदाश्रित इति स्वेषु प्रतिष्ठां वितनोमि ते ॥ ६८ ॥

अहं कनीयानिति किं करोमि गरीयसस्ते हितसाह्यमेवम्।
न वाच्यमक्रूर यतः प्रसिद्धमुपेन्द्र एवेन्द्रहितर्धिकारी ॥ ६९ ॥

१. न श्वः स्थितिस्तां मृत्युमित्यर्थः, अश्ववत् स्थितिं च।

गच्छेति : १०.३६.३०.

अक्रूरगुणवंश्योऽसौ सौम्य एव न संशयः ।
तत्त्वद्वशो विना यत्नं स्यादक्रूरगुणान्वयात् ॥ ७० ॥

सत्यं गोदानदोऽक्रूर सदाऽसीति भवाधुना ।
शीघ्रं मद्रथमाश्रित्य मन्मनोरथपूरकः ॥ ७१ ॥

अश्वस्थित्या गतः केशी त्वं त्वक्रूरगुणाग्रणीः ।
तन्मदिष्टमकुर्वाणो नात्र श्वस्थितिमाचर ॥ ७२ ॥

ततश्चेति : १०.३६.३५.

जरादिघटिताकृतिं द्विमतिकं च मायामयं
स बाणमिह नारकं वदति तावदात्मात्मकम् ।
न यावदभिवीक्षितः प्रभुरनेन पुंसेत्यसा-
वुवाच वचनं जराद्युचितमेतदालोच्यताम् ॥ ७३ ॥

राजन्निति : १०.३६.३८.

मोदामोदनिदानमेकमवनौ जानन्न दृष्टं पुमान्
सिद्धिं प्राप्य न हृष्यतीशहृदयो न ग्लानिमेत्यन्यथा ।
अक्रूराग्रहसङ्गृहीतविषयो योऽक्रूरयोगोन्मुख-
स्तस्येशाप्तिरदुर्लभेत्यवगतार्थोऽक्रूरवाक् तत्क्षमम् ॥ ७४ ॥

त्वया यदुक्तं निखिलं समञ्जसं मयापि निस्तन्द्रमहो विधीयते ।
परं शुभं वाऽशुभमत्र यद्भवेज्जानाति सत्यं भवितव्यतैव तत् ॥ ७५ ॥

मनोरथानिति : १०.३६ ३९.

पुंस्यज्ञातप्रज्ञे लघुरिति गर्वोक्तिरगुरुतां फलति ।
स्वस्मिन्नेव निदर्शनमस्मिन् जागर्ति भार्गवो जगति ॥ ७६ ॥

यः शक्तः स क्वचिदपि विसदृश इति परमुपेक्षते नैव ।
लघ्वपि कमलोदरगतमर्कोऽनलसस्तिरस्करोति तमः ॥ ७७ ॥

तेजस्वी च महानप्यग्निर्यद्यपि तथापि न समेति ।
स्वपरप्रकाशकत्वं विनाऽतिलघुतूलवर्तिकां लोके ॥ ७८ ॥

यन्महदग्रे वदति क्षुद्रस्तद्भवति कीर्तिकृन्महताम् ।
व्याघ्रप्रसिद्धिकारी गोमायोर्भवति तत्पुरः शब्दः ॥ ७९ ॥
सेवाधर्मः सेवकाधीन एवं भर्तुर्धर्मो भर्त्रधीनः प्रसिद्धः ।
तत्राकारि प्राक्तनः पथ्यवाचा धर्मं पश्य स्वाम्यसीत्युत्तरस्थम् ॥ ८० ॥

उक्त्वैवमेतदुचितं च निशम्य धीमान्
विज्ञाय सर्वमिदमिष्टकृदच्युतस्य ।
नोवाच किञ्चिदपि भावि तदा प्रतस्थे
बाढं त्वदुक्त्यनुचरोऽहमिति ब्रुवन् सः ॥ ८१ ॥

एवमादिश्येति : १०.३६.४०.

येन केन प्रकारेण मनः कृष्णे निवेशयेत् ।
इत्यर्थज्ञौ हि तौ साधु स्वं स्वं स्थानमुपेयतुः ॥ ८२ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने षट्‌त्रिंशोऽध्यायः ॥ ३६ ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

केशी त्विति : १०.३७.१.

लोभे पराभवपदं गमिते हि शङ्ख-
चूडाभिधे वृषमये तदरिष्टरोषे ।
अक्रूरयोगज-सुखाय मनो दुरश्व-
सन्निग्रहो व्रजजुषामभियुक्त आसीत् ॥ १ ॥

यो बुद्ध्यादिचतुष्टयाङ्घ्रिशिखरैः कृत्स्नां महीं क्षोदयन्
सर्वासीमजवः स्ववृत्तिकलित-स्वाराज्यदीव्यत्सुखः ।
सङ्कल्पोक्ति - विभीषिता -ऽखिलजगज्जाल - स्वभावस्तमो-
भूः पञ्चेन्द्रियनायकः स दुरतिक्रम्यो मनोऽश्वः स्फुटम् ॥ २ ॥

नानावृत्तिभिरीश्वरं स मृगयन् व्यर्थं निजं गोकुलं
भूयस्त्रासयतीत्यवेक्ष्य भगवांस्तद्वेगतो वेगवान् ।
शब्देन प्रणवात्मनेन्द्रियचरस्त्वासीत्तदा चिन्मयो
वृत्त्यग्राह्य-महागुहाग-हरिवत् तद्युक्तमाम्नायतः ॥ ३ ॥

तादृक्शब्दैकलक्ष्योऽथ स तदभिमुखीभूय वेगाददन् सन्
शून्यं सर्वाक्षिगाम्यन्यचरणयुगतः स्प्रष्टुकामो बभूव ।
ब्रह्म प्रत्यक्स्वरूपं यदिह तदुचितं ह्यस्ति यच्छ्रौतघोषः
पराङ्मुख्येन वृत्तेर्भवति सुविदितं ब्रह्म नैवान्यथेति ॥ ४ ॥

एवमक्रूरसंयोगसाधको दर्शितो विधिः ।
दिगध्वना पुरोऽप्येवमूह्योऽर्थः सूक्ष्मदर्शिभिः ॥ ५ ॥

कम्पयन्निति : १०.३७.२.

गन्धर्वराट्[1] स्वरविशेषरतिर्मृदङ्गो-[2][3]
द्भास्यो लसद्घनरवो विलसत्प्रवालः ।[4][5]

---

१. अश्वाः सुरगायकाश्च । २. शब्दः षड्जादयश्च । ३. वाद्यभेदः मृद्युक्तेनाङ्गेन उद्भास्यश्च । ४. सान्द्रः वाद्यविशेषश्च । ५. पुच्छं वीणादण्डश्च ।

स्थाने तुरङ्गमहितो जनरञ्जनाय
नृत्यन् व्रजं यदकरो - दतनुप्रकम्पम् ॥ ६ ॥

तमिति : १०.३७.३.

गोकुलं तु निखिलं मदधीनं सिद्धमित्यवगणय्य तदश्वः ।
गोकुलेश्वर - ममार्गयदीशं युक्तमात्मनिहितेक्षणबुद्धिः ॥ ७ ॥

स्वयं त्वमृग्योऽहमिहास्मि सर्वदा
कृतप्रयत्न - स्त्वयमात्मवीक्षणे ।
तद्वासनापूर्तिरलं भवत्विति
प्रत्यक्षतामाप स गोकुलस्थितः ॥ ८ ॥

रूपोद्रेकतिरस्कृत - द्विजवरो भुञ्जन्नहित्वं पुरा
गन्धर्वः समवेक्ष्य यं पुनरपि प्राप्तः सगन्धर्वताम्[2] ।
अत्याश्चर्यमिदं यदीयचरणद्वेषेण मातङ्गतां[3]
प्राप्तोऽश्वोऽपि हरेस्तदुद्धृतिकृते युक्तस्तु सिंहध्वनिः ॥ ९ ॥

भवति स चरणस्थिरप्रहारः[4]
प्रभुरपि सोऽपि च राधिकोल्लसच्छ्रीः ।
चपलतरगति - श्चमत्कृतिश्च-
स्तदुचितमास तदा द्वयाभिमुख्यम् ॥ १० ॥

यद्रूपेक्षणलज्जया समभजद्वायुर्विरूपस्थितिं
यल्लक्ष्मश्रवणानुतप्तहृदयोऽप्युच्चैःश्रवस्त्वं हयः ।
मन्ये यद्गतिलाघवेक्षणजनिव्रीडाभरादन्वहं
यत्कार्श्यं[1] समगान्मनः कणभुजाऽणुत्वेन तत्कीर्तितम् ॥ ११ ॥

तस्याश्वस्याद्भुतगुणतया सस्पृहं लोकमानो
नैच्छच्छ्रीशो हतिमतिहठान्माधवो धर्ममूर्तिः ।
दोषोऽन्यस्य प्रसभहनने विश्रुतोऽनागसो य-
ज्ज्ञानन्नासीत् सदयहृदयस्तत्कृतागः प्रतीक्षः ॥ १२ ॥
( युग्मम् )

---

१. आश्वाः तु इति च्छेदश्च । २. अश्वतां गन्धर्वत्वं च । ३. गजश्चाण्डालश्च । ४. अत्र सर्वत्र चेति च्छेदः चादिसमस्तं च ।

स तमिति : १०.३७.४.

असु[1]रमनोऽधःपातं पदतः प्राङ्नीतवन्तमालोक्य ।
सुखयितुमथ कंसमनः स तं स्वपदतो जघान युक्तमिदम् ॥ १३ ॥
नाम्ना कृतितः स ख[2]लो नाम्नैवायं त्वतो न दुःसाध्यः ।
नैवमयं गणयत्विति तत्कृतिमकरोत्स्फुटां स निजपदतः ॥ १४ ॥

तद्वश्चयित्वेति : १०.३७.५.

अश्वपदैकपरीक्षा क्षत्रसदक्षा न चान्यजनजाते ।
जानन्नेवमिहेशश्चकार दोर्भ्यां तदश्वगतिमुच्चाम् ॥ १५ ॥
रे केशिन्मत्पुरतो धनुःशताध्वरचितोऽपि विफलः स्यात् ।
योगस्तत्र किमस्य तु गणनैकं[4]स्येत्यदर्शि तद्व्याजात् ॥ १६ ॥
यो लोके व्रजकम्पकृन्मम भृशं संत्रासयन् गोकुलं
पद्भ्यां मामपि ताडयन्नपि यदि स्यादात्मशुद्ध्युन्मुखः ।
तत्पादौ भृगुवद्दधामि करतो नास्नैव चेद्वाड[5]व-
स्तं दूरे विजहाम्यदो द्वयमबोधीशेन किं तद्द्वयात् ॥ १७ ॥
यः सङ्कल्पविकल्पवृत्तिचरणाभ्यां दुर्वहाभ्यां यदि
मां संस्प्रष्टुमगोचरं श्रुतिगिरां हन्तेहते वाडवः ।
तत्ताभ्यां तमनन्तधर्मकलिते मार्गे सुकर्मोच्छ्रुते
त्यक्ष्यामीति धनुः शतान्तरपदप्रक्षेपणादध्वनि ॥ १८ ॥
मुख[6]भञ्जनात्त[7]रूप लुप्तं भविता ततो हि तुरगोऽसौ ।
स्यादुरगः श्रीनाथस्तार्क्ष्यध्वज इति यथार्थगतिरुपमा ॥ १९ ॥

वक्त्रे भुजमिति : १०.३७.६.

सखलीनो वशोऽश्वोऽस्मिन्नान्यथेति विभावयन् ।
सुख[9]लीनं चकारेशः स्वबाहुं किमु तन्मुखे ॥ २० ॥

---

१. असुराणां मनः असुरम् अनश्चेति च्छेदश्च । २. दुष्टो रासभश्च । ३. यज्ञाः अध्वेति च्छेदश्च । ४. धनुर्यागस्य । ५. ब्राह्मणः अश्वश्व । ६. मुखे भा यस्य तत् मुखस्य भञ्जनं च । ७. स्वीकृतरूपं तकाररूपं च । ८. सर्पः उरसा गच्छति स च । ९. शोभनखलीनं सुखेन लीनं च ।

नाकेशः[1] केशिनो हन्ता भवेदिति धिया प्रभुः ।
तमिन्द्रदेवताकेन भुजेनाऽऽस्ये रुरोध किम् ॥ २१ ॥

यस्याश्वस्तस्य भूरेवं लोकोक्त्यसहनः प्रभुः ।
भूभृद्भुजं निजं तस्य मुखप्रोत्सादकं व्यधात् ॥ २२ ॥

सुकेशी[2] वारिसेनासु स्वाढ्याः[3] केशीति मानयन् ।
वामं बाहुं पुरश्चक्रे तस्य स्त्रीसदृशस्य सः ॥ २३ ॥

असुरो धनेन दृप्तो यस्माद् भूरि स्वसञ्चितेन ततः ।
असुरो[4] धनेन दण्ड्योऽयमिति च करदण्डमच्युतः किमधात् ॥ २४ ॥

दन्ता निपेतुरिति : १०.३७.७.

सम्प्राप्य दुर्जनमुखस्थितिमप्यभक्ष्य-
भक्षी द्विजो यदि भवेत्तदिहास्य दण्डे ।
राजन्य एव गदितो निगमैरितीव
तद्दन्तदण्डनकृते भुजमादिदेश ॥ २५ ॥

यो दुर्वर्णरुचिस्त्विह खलमुखवसतिश्चाभक्ष्यभुक्तिचणः ।
स त्वन्त्यजो द्विजस्तद्धननं दोषान्व्ययादिति स्पष्टम् ॥ २६ ॥

शुचयोऽप्यधिगतभगवद्धस्तस्पर्शा अपि द्विजा अपि ते ।
खलमुखसहवासफलं तदधःपातं क्षणेन संप्राप्ताः ॥ २७ ॥

भगवद्धस्तस्पर्शादनुतप्तास्ते द्विजा जहुः सद्यः ।
खलमुखसम्बन्धमतः कान्तात्खलतोऽन्त्यजो द्विजोऽपि वरम् ॥ २८ ॥

अयःस्थितिकरो बाहुः सर्वदैव सतां प्रभोः ।
तमानां पापिसम्बन्धात् तत्रायःस्थितिकार्यभूत् ॥ २९ ॥

अधितिष्ठतो दशाङ्गुलमवनिं व्याप्याच्युतस्य बाहुरपि ।
तन्मुखभुवं खलदुध्या व्याप्य स पञ्चाङ्गुलः क्षममतिष्ठत् ॥ ३० ॥

---

१. इन्द्रः निषेधद्वयात् केशी च । २. अप्सरोविशेषः । ३. स्वेषु आढ्यः सुकारेण आढ्यश्च । ४. असूनां रोधनम्, असुर इति च्छेदश्च । ५ ग्राह्यभागः हस्तश्च । ६. दुष्टवर्णः रजतं च । ७. चाण्डालादिः अन्त्ये जकारो यस्येति च । ८. बाहुर्दूषणं च । ९. शुभावहविधिः, लोहं च ।

समेधमानेनेति : १०.३७.८.

गोकुलार्तिकृतस्तस्य मुखरोधं व्यधाद्विभुः ।
तद्युक्तमेव यत्सोऽपि तेनासीद् व्याकुलेन्द्रियः ॥ ३१ ॥

इन्द्रियेषु सबलो हृदयाश्वः पञ्चधारचितवेगविवर्तः ।
वृत्तिरोधनमिहास्य विरोधीतीश्वरः स्फुटमधान्मुखरोधात् ॥ ३२ ॥

निजभुजतन्मुखरोधाद्विकलीभावं तदाकृतिं नयता ।
मन्येऽच्युतेन विशदीकृतं स्वरूपं तदस्य कौतुकिना ॥ ३३ ॥

बाह्याक्षाणि तु नैव जातु विषयीकुर्वन्ति मामीश्वरं
चेतोऽपि द्विषदाकुलं यदि च तन्मद्दूरतस्तिष्ठति ।
तादृक् चेदपि निग्रहेण मयि संप्राप्तं तदाऽऽसनं
कुर्यां तत्क्षण इत्यबोधि तुरगाक्षेपास्यरोधादिह ॥ ३४ ॥

आमूलोत्तर - साराढ्य-पञ्चशाखागमो मुखे ।
यस्य तस्य संसाध्यास्तिरिति युक्तमिहेरितम् ॥ ३५ ॥

तद्वादिवादनं वीक्ष्य जगद्गुरुरधोक्षजः ।
युक्तं चक्रेऽस्य सिद्धान्तं पञ्चशाखोपदेशतः ॥ ३६ ॥

यदा भवति संलीनं मनो निर्वासनं प्रभौ ।
त्यजत्यन्तर्मलं कृत्स्नं व्यक्तं मलविसर्जनात् ॥ ३७ ॥

योऽसावङ्गुष्ठमात्रः श्रुतिसमभिहितस्तं महान्तं प्रपश्यन्
रुद्ध्वैव प्राणवायुं स्थितिमिह लभते त्यक्तसङ्कल्पवृत्तिः ।
रेण्डं कृत्स्नं विसृज्यातनुगतिलसितो भुक्तिपाकप्रभूतं
सिद्धः स्याद्विष्णुराता - ऽनुपदमपगता - मूलबीजोऽखिलज्ञः ॥ ३८ ॥

---

१. पञ्चधारा गतयो यस्मिन् पञ्चधेति च्छेदश्च । २. तस्याकारस् प० अकाराकृतिस् तदेति च्छेदश्च । ३. हस्तः पञ्चाः विस्तृताः शाखा यस्मिन्निति च । ४. ध्यानं सम्यगाधिश्च । ५. वादं वदनसम्बन्धि च । ६. सिद्धश्चासौ अन्तश्च तं सिद्धान्तं च । ७. हस्तो वेदश्च । ८. समीपे दानात्, प० स्पष्टम् । ९. रे अण्डमिति लेंड्मिति च ।

अस्मिन् श्रीशचरित्रे भुवमिममृषिरर्थमवददिति भाति ।
अश्लीलं लेण्डपदं सकलपदज्ञोऽन्यथा कथं ब्रूयात् ॥ ३९ ॥
( युग्मम् )

तद्देहत इति : १०.३७.९.

बहुबीजा मनोमूर्तिरमला स्याद्यदा तदा ।
युक्तमेव महाभोगकरापाकर्षणं[1] प्रभोः ॥ ४० ॥
पञ्चखेनैव षडरिध्वंसं विदधता मया ।
बाहुनैष हतो दैत्यश्चित्रं नात्रेत्यविस्मितः ॥ ४१ ॥
केशिनस्तु[2] पुरुषा यदाश्रये केशिनो[3] भुवि भवन्त्यनेकशः ।
चित्रमेतदधिगम्य तं पुरा केश्यसौ हि यदकेशितां गतः ॥ ४२ ॥
अघारिनाममालासु केशिसूदन इत्यदः ।
प्रविष्टमधिकं नामेत्यानन्दादस्तुवन्सुराः ॥ ४३ ॥
कुर्वन्तं वीक्ष्य तं शत्रुमनोऽपि सुमनोऽधिकम् ।
सुमनोवर्षुका एव युक्तं श्रीशं तदाऽस्तुवन् ॥ ४४ ॥

देवर्षिरिति : १०.३७.१०.

मत्तास्विकस्थितिमनेन निवेद्य शत्रो-
र्वृद्धौ वृथैव पितरौ निगडीकृतौ मे ।
एवं प्रभोर्मनसि जातुचिदागतं स्यात्
तन्मार्ष्टुमुद्यतमनाः सरहस्तमागात् ॥ ४५ ॥

त्वमात्मेति : १०.३७.१२.

नहि तादृगुरुट्शान्तिर्भवति विना तादृशीं नुतिं च नतिम् ।
आलोच्यैव - मतीतानागत - नुतिमृषिरवोच - दुचितमिदम् ॥ ४६ ॥

स त्वमिति : १०.३७.१४.

तत्त्वं रूपमलं ह्यवाङ्मनसगं प्राहुस्तवाधोक्षज
श्रुत्यर्थानुभवार्कफुल्लहृदयाम्भोजा हि वाचंयमाः ।

---

१. महाभोगकरं कर्म, विस्तृतः करश्च । २. जटिनः । ३. संन्यासिनः ।

पश्यन्नेवमशेषघोषजनुषां हृत्कोषपोषावहं
रूपं वृत्तिविशारदं त्वहमितः किं वा दधाम्यन्तरे ॥ ४७ ॥

मुनिवर यदगास्त्वं तत्पुरे स्वैरवृत्त्या
मनसि किमपि बीजं न्यस्य वा तस्य पुण्यात् ।
यदकलुषजनेषु प्रायशस्तद्विधानां
गतिरिति विभुचित्तं तर्कयन्नात्मनाऽऽह ॥ ४८ ॥

न स्वैरवृत्तितस्तस्य पुण्याद्वा किं तु दुर्मतेः ।
पुण्यावशेषवीक्षार्थं तत्क्षत्यै च गतोऽस्म्यहम् ॥ ४९ ॥

दिष्ट्या ते निहत इति : १०.३७.१५.

हन्ता हनिष्यस्यपि चासुरान् परान्
परं त्वहंतामयमूर्तिरेष हि ।
हयाकृतिर्हन्त हतोऽद्य यस्त्वया
निरामयास्तेन मया सहामराः ॥ ५० ॥

चाणूरमिति : १०.३७.१६.

या कंसाय निवेदिता यदुपते त्वद्गोकुलावस्थिति-
स्त्वत्प्राणौ पितरौ च यत्सनिगडौ कारागृहं प्रापितौ ।
आलोच्यैव समग्रतः कृतमिति श्लोकौ स तत्प्रत्यये
ज्योतिर्वित्त्व - मनागतार्थकथना - दाविश्चकारात्मनः ॥ ५१ ॥

तत्त्वाख्यानं तुल्यमाख्याय कंसे-
शाभ्यामभ्यः सूचितोऽक्रूरयोगः ।
शत्रौ मित्रे या प्रवृत्तिः समाना
स ख्यातो यत्सद्भिरक्रूरयोगः ॥ ५२ ॥

यावदहङ्कृतिलासो गोकुलवासः सुखावहस्तावत् ।
तद्विग्रहे तु मधुरावस्थितिरुचितेति तत्र गतिरुक्ता ॥ ५३ ॥

लीलाविग्रहनिर्मितं धृतरसं सद्वैतमद्वैतदृग्
विद्वद्भिस्सयकृद्विलासमनिशं भुङ्क्ते ह्यनङ्गस्थितः ।

---

१. शत्रोर्मनः, शत्रन् अनश्चेति च । २. मथुराप्रिया च ।

स्वैरं तिष्ठति गच्छति प्रविशति स्नात्यश्नाति क्रीडति
भुङ्क्ते चैवमहो जडस्थितिकृतावासः स देहाश्रितः ॥ ५४ ॥
त्रिस्थलीस्थायिनश्चैवमस्य वैभवविस्तरः ।
वर्णितो मुनिना योऽस्मिन् स चिद्गुपदेशकृत् ॥ ५५ ॥

( युग्मम् )

एवं यदुपतिमिति : १०.३७.२५.

वन्दे श्रीगोविन्द त्वत्पदपद्मं सुसद्म पद्मायाः ।
वृन्दावनानुरक्तं साधुमनोलिस्तुतं विविकरसम् ॥ ५६ ॥

इत्यानस्य पुनः पुनः सुरमुनिर्दिग्लक्षिताङ्घ्र्यम्बुजो
गायं केशव वासुदेव नृहरे नारायण श्रीपते ।
श्रीमद्विष्णुपदादृते न शरणं मे किञ्चिदप्यन्यदि-
त्युक्त्वोत्थाय तदैकमात्मनि मुदा दध्यौ परं चाऽऽश्रयत् ॥ ५७ ॥
वायुप्रेरितवल्लकीगुणभवन् - मञ्जुस्वरानुस्वरो-
द्गीतानन्त - मुकुन्द - कृष्ण - भगवद् - गोविन्दनामावलिः ।
हस्तोद्बोधिततालमात्मविहितानन्दानुमोदस्फुर-
द्रोमाऽसौ सहसा सनातनगुरुं नत्वा ययौ सत्पथम् ॥ ५८ ॥

भगवानपीति : १०.३७.२६.

दैत्यहन्ता मुनिस्तोत्रपात्रमप्यच्युतस्तदा ।
त्यक्त्वा गर्वं शिशुक्रीडोऽभूदहो भक्तवश्यता ॥ ५९ ॥

एकदेति : १०.३७.२७.

निलायनं नेत्रपिधानमत्र हि
तदात्मकेलिस्तु समाधिरेव सः ।
यथाधिकारं व्यधुरेव तं मुदा
तदा तु तत्केलिमिपाच्चिरायुषः ॥ ६० ॥

मयपुत्र इति : १०.३७.२९.

यद्व्योमचरितं केशिनिग्रहोत्तरमीरितम् ।
युक्तं मनोनिग्रहतः पुंसो व्योमावलम्बनम् ॥ ६१ ॥

---

१. स इति सदेति च्छेदश्च । २. विष्णुचरणः, आकाशश्च ।

क्षणमात्रं योगिनां हि शून्यस्थितिरलं ततः।
श्रीशापरोक्षानन्दाप्तिर्व्यक्तं व्योमगुहा-पदात् ॥ ६२ ॥

सिद्धेष्वप्यत्र केचिद् बहिरबहिरहोरात्र - मक्षावनोत्काः
केचिद्बाह्यैकदम्भा विषयरसभुजस्त्वन्तरे मोषवृत्त्या।
अन्ये त्वानन्दभोगापरिचितमनसो मेषवन्मार्गभाज-
स्तत्राद्यान्नैव माया स्पृशति तदपरान् किञ्चिदन्यांस्तु पूर्णम् ॥ ६३ ॥

शून्याकारः स मायाप्रसर इह पुनस्तान् प्रपञ्चाद्रिदर्यां
प्रक्षिप्यैवाऽऽवृणोति प्रचुरतरतमोभाजि सद्यस्ततस्ते।
स्युश्चेच्छ्रीनाथपादाम्बुजरतिमतयस्तं निरस्याच्युतस्तां-
स्तस्याः शीघ्रं प्रमोच्य प्रकटयति निजानन्दसान्निध्ययोगम् ॥ ६४ ॥

तस्मात्त्राता सर्वदा सर्वतोऽपि सर्वत्रापि श्रीश एको दयालुः।
निश्चित्यैवं तत्पदाब्जावलम्बः कार्यः पुंसेत्यर्थ ईदृक्चरित्रे ॥ ६५ ॥

( विशेषकम् )

ताहक् चेतोनिग्रहेऽनागतार्थ-
दृक्संसिद्धिः स्यात्ततो व्योमयोगात्।
तूष्णींवासो धीगुहायां ततः श्री-
शप्तानन्दः सिद्ध इत्याशयो वा ॥ ६६ ॥

क्रीडासक्तोऽपि न त्वं स्वान् विस्मरस्यच्युतान्वहम्।
मद्रक्षणोदितदयो न मां त्यज विभोऽधुना ॥ ६७ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने सप्तत्रिंशोऽध्यायः ।। ३७ ।।

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥

एवं विहारै रममाणचित्ताः सन्तः स्वसन्तोषजुषो वसन्ति ।
सन्तः स्वघोषे खलु नान्दनाश्नि ह्यक्रूरयोगोऽर्थत एव तेषाम् ॥ १ ॥
अक्रूरोपीऽति : १०.३८.१.

आनन्दभाजनमिदं पदमेकमेव
लोकेशमुख्य - सुरपूजितमच्युतस्य ।
जानन्नहं न सहसा परिहासभूमिं
भूमौ श्रयामि लघुभूपतिपादसेवाम् ॥ २ ॥

यस्य देहे यदा व्यक्ता भवत्यक्रूरयोगिता ।
स एवं चिन्तयन् याति पथि कृष्णेक्षणोत्सुकः ॥ ३ ॥

किं मयाऽऽचरितमिति : १०.३८.३.

को वाऽकारि जपस्तपः किमु कृतं तीर्थं किमासेवितं
किं वा दानमदायि सद्व्रतविधिर्यागोऽपि योगोऽपि वा ।
यस्यैतत्फल - मिन्दिराधिप - पदाम्भोज - प्रसादेक्षणं
प्रादुर्भूत - मभूतपूर्व - ममरब्रह्मेश - सच्चेतसाम् ॥ ४ ॥

ममाद्येति : १०.३८.६.

दुर्दिष्टं नष्टमद्याखिलमपि निखिलैर्दुर्ग्रहैः सद्ग्रहैर्वा
संत्यक्तं प्रातिकूल्यं विलयमुपगताः सर्व एवान्तरायाः ।
साङ्गानुष्ठानमद्याकृतमपि सुकृतं सङ्गताः स्वेष्टयोगाः
सर्वेऽप्यद्यानवद्या यदहमिह हरिं चक्षुषा लक्षयामि ॥ ५ ॥

कंसो बतेति : १०.३८.७.

अहो ह्यद्यतनस्य नाम किमहं श्रेयस्करत्वं ब्रुवे
यस्मिन्नीदृशशासनादुपकृतं कंसेन तेनारिणा ।
नैकं केवलमेतदेव धरणौ सर्वारिचक्राण्यपि[1]
मय्यध्वन्युपकुर्वते हरिपदाब्जस्पृष्टरेण्वर्पणैः ॥ ६ ॥

---

१. शत्रुचक्राणि अराविशिष्टपदाङ्कानि च ।

अरिणा कंसेन रथं दत्तमवेक्ष्यारिचक्रमपि मन्ये ।
तदनुगुणाधिकरेणूत्करमिह मे संभ्रमात्समर्पयति ॥ ७ ॥
सुरेशप्रजेशोरगेशादिजुष्टैरभीष्टैरजोभी रमेशाङ्घ्रिमृष्टैः ।
अपि स्यन्दनो मय्यमन्दोपकारी निजैरेव योऽङ्गैर्मदङ्गं धिनोति ॥ ८ ॥
मनोज्ञभावं भजतां हयानां वदन्तु केचिद्रथवाहकत्वम् ।
कृष्णे क्षणोद्भूतमनोरथस्य निर्वाहकत्वं त्वहमत्र वच्मि ॥ ९ ॥

द्रक्ष्यामीति : १०.३८.९.

यान् श्रीशोऽनिशमीक्षते स्वरमणीचञ्चत्कटाक्षेक्षितान्
ये वा श्रीशमशङ्कितेन मनसा पश्यन्त्यवश्येन्द्रियाः ।
तेऽमी फुल्लदृशः कुरङ्गशिशवः पश्यन्त एवादराद्
यद्गच्छन्ति भृशं प्रदक्षिणतया स्पष्टं मदिष्टं ततः ॥ १० ॥

यस्येति : १०.३८.१२.

यल्लीलायितजन्म - कर्म - गुणभृद्वाग्लोकसिद्धाप्यहो
निःसीमं शुभमाशुतैव तनुते तं त्वद्य साक्षादहम् ।
द्रक्ष्याम्यत्र पदाम्बुजे निजशिरो धास्यन् वचोऽगोचरं
लप्स्याम्यच्युतदेहसङ्गजसुखं शिष्टं किमिष्टं ततः ॥ ११ ॥

चन्द्रस्तापोपशान्तौ मिहिर इव तमोऽपाकृतौ दोषनाशे
वैद्यो रक्षोविनाशे रघुरघजलधिप्राशने द्रागगस्त्यः ।
कल्पः स्वेष्टप्रदाने नयनसुखकरो मित्रवत्पात्रभूतः
पूर्णानन्दस्य नन्दव्रज इह भविता दृक्पथोऽस्यद्य धन्यः ॥ १२ ॥

चतुरागमवेदिनोऽपि धातुर्यदलभ्यं किल पङ्कजो मुरारेः ।
तदहो सुलभं किरातजातेः किमु धन्येयमधन्य एव वासः ॥ १३ ॥

रूपाण्यादाय तत्तत्तरुमृगपतगाम्भश्चराणां समन्तात्
सोत्साहा अध्यतिष्ठन् सुरमुनिनिकरास्तद्विदाऽधोक्षजेन ।
आहूता नामभिः स्वैर्व्रजभुवि बहुशस्तेन मन्ये तदानीं
नो चेत्तन्नामधेयैर्व्यवहृतिरवनावेषु कस्मात् प्रसक्ता ॥ १४ ॥

---

१. अधिका रेणवः अधीति च्छेदश्च गजाः ।

देशोऽयं श्रीशपादाम्बुजकलितरजोराजिसाम्राज्यशोभो
देशोऽयं श्रीशहस्ताकलितसुमलताद्यागमोद्भासमानः।
देशोऽयं श्रीशरत्युत्सुकयुवतिकृता-ऽनेकपुष्पाल्पतल्पो
देशोऽयं श्रीशकेलिश्रितसितसिकतालङ्कृतः संविभाति ॥ १५ ॥

भूभागोऽयमलङ्कृतः सरलित-द्रुप्रान्तहिन्दोलकैः
स्वाच्छन्द्यादनुकल्पितैरभिनवैर्नानाविधैः क्रीडनैः।
भूभागोऽप्ययमूर्जितस्तरुदलै - राभुक्तदध्योदन-
स्वल्पानेककणैः प्रतिक्षणमहो वातागमोद्भ्रामिभिः ॥ १६ ॥

न तादृग् भूभागो य इह हरिपादाब्जरहितो
न तादृग् वा वृक्षो हरिकरमृदुस्पर्शविकलः।
न वा तादृग् जन्तुर्हरिसदयवीक्षा-विरहित-
स्तदेतेषां भाग्यं युगपदुपलब्धं कथमहो ॥ १७ ॥

यस्मिन् क्रीडितमिन्दिराधिपतिना देशः स धन्यो न किं
ते वा धन्यतराः कथं न तरवो येषां फलेप्सुः प्रभुः।
ते वा धन्यतमाः कथं न हरिणा भुक्तं त्वहो यैः समं
धन्याद् धन्यतराच्च धन्यतमतोऽप्ययास्मि धन्यो न किम् ॥ १८ ॥

अत्रेमे पृथुनलभूभृतो[1] विभान्ति
नाना-सद्द्विजकलिता[2]-ऽऽगमोपदेशाः[3]।
देशेऽस्मिन् बहुमुनयस्तपस्विनोऽपि[4]
तन्मन्ये हरिचरणाप्तिरेव हेतुः ॥ १९ ॥

धन्यास्ते किल केकिनो जितघनां पश्यद्भिरैशीं तनुं
यैरालक्षि न लास्यकर्मणि निजेऽनध्यायकालः क्वचित्।
धन्यास्तेऽपि चकोरकाश्च पिबतां तद्वक्त्रचन्द्रद्युतिं
येषां नोदयमागता हृदि मनाग्राकाऽमयोर्भेदधीः ॥ २० ॥

---

१. पृथवो नलास्तृणजातिविशेषा येषु ते, राजविशेषौ च। २. ब्राह्मणाः पक्षिणश्च। ३. वृक्षा वेदाश्च। ४. वृक्षविशेषा ऋषयश्च।

भो भोः पक्षिगणः सदागमजुषः श्रुत्यर्थवाचोऽखिलान्
युष्मानेष विशेषतोऽतिकृपणोऽक्रूरोऽहमभ्यर्थये ।
यूयं चाप्युपदेशिनोऽहमपि वोऽन्तेवासितामागत-
स्तन्मे तं कुरुतोपदेशमतनुश्रीर्यैः श्रुतः श्रीपतेः ॥ २१ ॥

पादाम्भोजजुषां प्रणम्रवपुषां सत्सङ्गमासेदुषां
नामानन्दपुषां जिताखिलरुषां तत्त्वोल्लसच्चक्षुषाम् ।
रूपारूपनिरूपणेष्वविषयोऽप्यग्रे सतां मूर्तिमान्
श्रीशः सञ्चरतीत्यहं किमधुना स्यां वा तदन्तर्गतः ॥ २२ ॥

यत्त्यक्ता दृषदात्मता पदरजो लब्ध्वा पुनर्दुर्लभं
स्यादेवेत्यविभाव्य मुन्यवलया नैतत्कृतं साध्विति ।
आलोच्यैव शिला मुहुर्मुहुरिमास्तद्रूपतोऽवस्थिता
मन्ये तत्पुनराप्तये त्वितरथा तच्चैतदेकं रजः ॥ २३ ॥

विध्वस्ताखिलपातकैर्बहुतपः - शुद्धान्तरङ्गैरपि
दुष्प्राप्यः सकृदेव यः किल करस्पर्शः स लक्ष्मीपतेः ।
यत्पृष्ठोदरकन्धरं प्रतिपदं प्रत्यङ्गमेवाप्यते
गोभिस्तद्विधिवर्णने विधिरपि स्याद्वा समर्थः क्वचित् ॥ २४ ॥

यत्राम्युद्भवपद्मभूरपि तपःसिद्धोऽपि यस्य प्रभोः
शुश्रावैकमगोचरस्य च तपेत्येवोक्तवर्णद्वयम् ।
क्रीडाकौतुकिभिः सगोपशिशुभिः साकं रमानायको
ब्रूते स्वैरमहर्दिवं तदिह ते कस्याधिकेडया न वै ॥ २५ ॥

आबालस्थविरं जना इह गताः श्रीशाल्लभन्ते सुखं
यादृक् श्रीपतिरप्यनन्तगुणितं प्राप्नोति तेभ्यस्ततः ।
एतत्पुण्यफलं किमच्युतपदावासोऽत्र किं वा प्रभो-
रस्यैवातुलपुण्यमूर्तय इमे नैतत्तु निर्णीयते ॥ २६ ॥

कुण्ठोऽष्टश्रु[2]तिरप्यनष्टमतिरप्यष्टादशालोकने
षट्तत्त्वार्थविवेचने च चतुराम्नायेषु यत्राजनि ।

---

१. शिष्यताम्, समीपस्थितिं च । २. ब्रह्मा ।

कर्तुं तद्व्रजवासिभाग्यगणनासीमां समीहेत यः
स स्वस्फीतिशिरोऽवधूननकृते वन्ध्यासुतं वाञ्छतु ॥ २७ ॥
कस्मादीशो वशीभूतः कस्मात्तैर्वा वशीकृतः ।
इत्यन्योन्यविवेक्तारावुभौ तावेव नेतरे ॥ २८ ॥

अथावरूढ इति : १०.३८.१५.

तापापहं पापहरं शिवङ्करं
दधास्यहं मूर्ध्नि पदं दयोदधेः ।
स्पर्शोऽपि यस्याजनयत् सुमित्रता-
महेश्च तार्क्ष्यस्य च नित्यवैरिणोः ॥ २९ ॥

समर्हणमिति, न मयीति : १०.३८.१७-१८.

इन्द्रेऽग्रजे रिपुपदे च बलौ स्वदासी-
भूतासु चास्वपि समप्रसृतोपकारः ।
स श्रीपतिर्न मयि शत्रुमतानुगेऽपि
कार्कश्यमेष्यति मनस्यखिलान्तरज्ञः ॥ ३० ॥

अप्यङ्घ्रिमूल इति : १०.३८.१९.

यद्यप्यस्मि समन्तुरस्मि च महापापैकराशिर्भृशं
कंसादेश-निशापिशाच-विवशोऽप्यन्याय-विन्यासभूः ।
दीनार्तिप्रशमैक-सद्व्रतजुषा दृष्टयेक्षितः स्यां यदा
शिष्टं स्यान्न तदैकमेष्वपि ततः स्पष्टं प्रभोर्दलभे ॥ ३१ ॥
पुण्यं स्वल्पमजीर्णमेव वृजिनं सिद्धं न चोग्रं तपो
यस्याऽसौ कथमीशदर्शनचणोऽक्रूरोऽजनि क्रूरधीः ।
स्वस्वास्याब्जनिवेशिताङ्गुलिदलं देवादिकानामपि
स्यामद्याहमहो सुविस्मयजनेर्हेतु - र्ह्यसाधारणः ॥ ३२ ॥
सान्निध्यं पदयोरुपेयुषि मयि श्रीनेतुरब्जप्रभा-
दृग्दोषं शमयेन्मदीयमिह किं चित्रं यदक्रूरगा ।
चित्रं कोटिसुधांशुकान्तिललितं दृष्ट्वा यदास्याम्बुजं
दृग्दोषं शमयाम्यलं प्रतिपदं लोलाङ्गुलीमोटनैः ॥ ३३ ॥

सुहृत्तममिति : १०.३८.२०.

यत्संस्पर्शसुखं रहस्यनुपदं जानाति सैका रमा
तेनालिङ्गनमाचरिष्यति भुजद्वन्द्वेन तद्वक्षसा ।
धन्यत्वं किमु तद्वदामि किमु वा पावित्र्यमात्मोदितं
यावत्तीर्थपदस्य तस्य वपुषः सङ्गैरनङ्गप्रदैः ॥ ३४ ॥

लब्धाऽङ्गसङ्गमिति : १०.३८.२१.

आगत्याऽऽरात्सत्वरं मत्पुरस्तात् ताताक्रूरेत्येवमाभाषमाणम् ।
पश्यामीशं तं यदा तन्न किं स्यां सर्वज्येष्ठब्रह्मपूज्यप्रतिष्ठः ॥ ३५ ॥

न तस्य कश्चिदिति : १०.३८.२२.

निजपादगतार्थिचिन्तितार्थप्रदकल्पे न यथारिमित्रभावः ।
सदयेऽपि विभौ तथैव कामं शरणायातजनावनस्वभावे ॥ ३६ ॥

मदवश्यशिक्षको यो मदवश्यो नैव स स्वयं भवति ।
इति सिद्ध एव तादृक् प्रभुस्ततो मद्वशोऽत्र का शङ्का ॥ ३७ ॥

धन्यत्वं मम चक्षुषोऽद्य भगवद्वक्त्राब्जसंवीक्षणात्
तद्वेदप्रियहार्दवाक्श्रवणतो भूयस्तरां कर्णयोः ।
अङ्गस्यापि तदङ्गसङ्गसुखतः प्रत्यङ्गवृत्तेरपि
तद्वीक्षाविषयत्वतो व्रजमिमं धन्यं हि मन्ये सदा ॥ ३८ ॥

याऽपाशांतासीत्सुहृदात्तमोचनेष्वस्माकमेतावदसौ दयावशः ।
तां भञ्जयन्नाशु न किं करिष्यति पित्रोरपाशत्वमथास्मदुक्तितः ॥ ३९ ॥

समग्रगोत्रांभरणं रमेशपादाम्बुजातध्वजराजमानम् ।
व्रजं त्वमेनं वृजिनं विहातुमक्षिस्ववीक्षाविषयं कुरुष्व ॥ ४० ॥

तं वीक्ष्य सततानन्तनेत्रोत्सवविधायिनम् ।
स्वानन्दातिशयोद्रेका - दवर्णयदनेकधा ॥ ४१ ॥
सूर्यमण्डलमेवेदं व्रजरूपेण तिष्ठति ।
कस्यात्रानुमतिर्न स्यान्मध्ये नारायणे स्थिते ॥ ४२ ॥

---

१. निराशता । २. पृथ्वी ।

उदयैककृतावासो निस्तमस्कगतिः सदा।
अतस्तदन्यो मन्येऽहमचरोऽयं प्रभाकरः ॥ ४३ ॥
सहस्र-गोप्रसारेण समयो व्रजसूर्ययोः।
एको लसत्पराग श्रीरन्यो यात्यपरागताम् ॥ ४४ ॥
सकलावनिसुन्दर्या नासैवैषा व्रजावनिः।
यदत्र राजते नित्यं मुक्ताभरणमुत्तमम् ॥ ४५ ॥
पश्यतां तिष्ठतां वापि कृष्णरूपकरोऽनिशम्।
शुचिरप्येष तन्मन्ये हेतुर्नीलाम्बराश्रयः ॥ ४६ ॥
क्रीडत्कृष्णं विलोक्यैनं प्रशंसाघोषघोषितः।
देवादिभिस्तदाद्येष घोषाख्यां समगाद् व्रजः ॥ ४७ ॥
क्वचित्तीर्थं क्वचित्क्षेत्रं क्वचित्सन्तः क्वचित्प्रभुः।
सर्वेऽप्यविकला यत्र नासावनुपमः कथम् ॥ ४८ ॥
नित्योल्लासि यशोदयाश्रितमहो गोपाललीलागृहं
सत्यानन्दसुखाखिलर्धिरनघा यत्रानिशं राजते।
तद्वृन्दावनमत्र गोकुलमलं श्रेयस्कृदीशाश्रितं
प्रागश्राव्यधुना व्यलोक्यजनि तच्छ्रुत्यक्षिमैत्र्यं दृढम् ॥ ४९ ॥
एवं विचित्रतरशोभमवेक्ष्य कामं
घोषं स्वतोषपरिपोषित - चित्तवृत्तिः।
मेने किरीटमखिलावनिमण्डलस्य
श्रीकृष्णसन्मणि - विराजित - मौलिभागम् ॥ ५० ॥

इति संचिन्तयन्निति : १०.३८.२४.

सश्रीशं गोकुलं देही विशत्येवं यदा तदा।
अस्तं याति जगच्चक्षुरित्यर्थकमृषेर्वचः ॥ ५१ ॥
पूर्णाक्रूरगुणोल्लासो नैति शोभां विना निशाम्।
युक्तमेव तदा तस्यां सोऽभूद्गोकुलशोभनः ॥ ५२ ॥

---

१. धेनवः किरणाश्च। २. परागशून्यत्वं प० पश्चिमदिग्गामित्वम्। ३. कृष्णः श्यामं च। ४. पवित्रः शुक्लश्च। ५. बलरामो नीलवस्त्रं च। ६. अक्रूरस्य गुणाश्चन्द्रश्च।

पदानि तस्येति : १०.३८.२५.

अत्राजानुपदं स्थितं समपदं प्रोड्डीय चात्र स्थितं
मण्डूकप्लुतितोऽत्र चात्र च तिरःप्रक्षिप्तपद्भ्यां गतम् ।
अत्राद्रावि सवेगमत्र च शनैरिङ्गत्पदं चात्र च
क्रीडाश्रान्ततयाऽऽसितं भगवतेतीक्षोत्सुकाद्दभ्भव ॥ ५३ ॥

तद्दर्शनेति : १०.३८.२६.

दृष्ट्वाऽरिचक्रकलितोद्धतसंभ्रमं मां
मा केऽप्यरिष्ट वकवद् गणयत्वनन्तः ।
इत्यात्मदृक् तदरिचक्र[1]शताङ्कवासं
सन्त्यज्य सद्व्रजसदाचरणो बभूव ॥ ५४ ॥

सर्वस्मिन्नपि गोकुले स हि तदा दिग्देवताऽधीशितुः
श्रीनाथस्य पदान्यवेक्ष्य विलसत्पद्मादि-लक्ष्माण्यलम् ।
तज्जानन्दविवृद्ध - सात्त्विकमहाहार्दात्मकिर्जवाद्
विस्मृत्य क्षणमात्मभावमवनौ तद्भाज्यलोडीन्मुदा ॥ ५५ ॥

श्रीशाङ्घ्रिसंस्पृष्टरजः प्रभूतं
सुखं यदादौ शिर एव लेभे ।
सर्वेषु गात्रेषु शिरः प्रधानं
साधूक्तमेतद्वचनं हि साधु ॥ ५६ ॥

सद्धंसव्योमयानेक्षणललितगतिः[2] सूर्य[3]भूत्यम्बुजातो-
ल्लासी तत्कीर्तिसा[4]रस्वत - मधुररस - प्रेमभृच्चित्तवृत्तिः ।
यद्ब्रह्मेवास्मि सम्प्रत्यतनुजनिपदावेक्षणोत्कण्ठिताक्ष-
स्तद्युक्तं व्याहरामि स्वपदमिति विभोः पादपद्मं प्रपन्नः ॥ ५७ ॥

ददर्श कृष्णं राममिति : १०.३८.२८.

एवं यो भक्तिपूर्णो भवति भुवि जनः स स्वयं स्वात्मनीशौ
पश्यन्नाकाशवर्णौ सुमहितचरितौ नीरजस्कौ प्रसन्नौ ।

---

१. शत्रुचक्रम्, अराविशिष्टानि चक्राणि यस्येति च । २. हंसयुक्तविमाने पक्षे परमहंसहृदयाकाशयानस्य हरेरीक्षणम् । ३. सूर्यश्रीकं कमलं पक्षे रमुनोदकम् । ४. ब्रह्मपत्नीसम्बन्धी वाग्जालं च ।

आद्यौ हेतू जगत्याः सुकृतमयतनू सद्व्रजं शोभयन्ता-
वुत्प्लुत्य स्यन्दनात्तत्पदसुखनिहितं स्वं करोत्याप्तकामः ॥ ५८ ॥
श्रुतिश्रुतो दृष्टिदृष्टो मनसाऽऽलिङ्गितो दृढम् ।
शिरसाऽपि पदस्पर्शं करोम्यस्येत्यधावत ॥ ५९ ॥

भगवद्दर्शनाह्लादेति : १०.३८.३५.

अदृष्टश्रुतपूर्वस्य दर्शनं भुविः वस्तुनः ।
सिद्धमानन्ददं त्वेतत् साक्षादच्युतदर्शनम् ॥ ६० ॥

तव पदे निहितं हि शिरोऽधुना स्पृश करेण हरे करवालतः ।
इति मनःस्थितमर्थमुदीरयन् क्षतित एव तदा न वचोऽब्रवीत् ॥ ६१ ॥
व्यक्तं लोकदृशाक्रूरकर्मकर्तुर्ममाधुना ।
अपोपहासयोः पात्रं स्यात्स्वनामेत्यनुक्तवान् ॥ ६२ ॥

भगवानिति : १०.३८.३६.

सप्रेमभावं तमवेक्ष्य कृष्णः शुद्धान्तरङ्गं शरणं प्रपन्नम् ।
संसारिचक्रादपि ते न भीरित्यावेदयंस्तत्करतोऽस्पृशत्तम् ॥ ६३ ॥
संप्रेषितो यदरिणाऽयमिहापि सारि-
चक्रेण मामुपगतः सहसा रथेन ।
इत्थं विभाव्य भगवान् स सहस्र[1]धारि-
चक्रेण तं निजकरेण तदा चकर्ष ॥ ६४ ॥
पाणौ यथा मम ममत्वमनेकधाऽरि-
चक्राङ्कितेऽपि नहि नश्यति तादृशोऽपि ।
तद्भत्स्वयीति स विबोधयितुं तमेव
तस्मै निदर्शनमदर्शयदात्महस्तम् ॥ ६५ ॥
न केवलं तदा तेन लब्धो ह्यभयदः करः ।
किन्तु तन्मिषतः सर्वो निर्व्याजसुहृदाशयः ॥ ६६ ॥

सङ्कर्षण इति : १०.३८.३७.

गोकुलान्तर्गृहसुखं योगादेवेति तत्क्षमम् ।
गृहप्रवेश-मुख्योपचारोऽस्मिन् रामकर्तृकः ॥ ६७ ॥

१. सहस्रधाराविशिष्टं सहस्रधेति च्छेदश्च ।

तस्मा इति : १०.३८.४०.

भक्त्या ह्यनन्यगतया यदि मां प्रपन्न-
स्तस्यातिगौरवमहं प्रविधाय साक्षात् ।
भोग्यं च भो[1]गिविहित प्रवितीर्य संसृ-
त्यध्वश्रमानपि हरे हरिणेत्यबोधि ॥ ६८ ॥

अस्मात्पूर्वमनेहसो मम सदृङ् नैवापरो दुर्भगो
यन्नीतो निरयातिशायिनि गृहे कंसस्य कालो वशात् ।
अस्मादुत्तरमप्यनिन्द्यसमयान्नानो भवेद्भाग्यवान्
मत्तुल्यो यदहं हरेरपि जगत्पूज्यस्य पूज्योऽभवम् ॥ ६९ ॥
इति सप्रेम सानन्दं कंसागारस्मृतिविक्लवम् ।
तदह्नि गोकुले लोलमासीदक्रूरगोकुलम् ॥ ७० ॥
( युग्मम् )

पप्रच्छ सत्कृतं नन्द इति : १०.३८.४१.

लाभोऽक्रूर स एष एव नितरां प्राक्पुण्यपाकोऽप्यसा-
वेतद्भाविसमीप्सितामलफलं चिह्नं प्रसादस्य च ।
यत्कंसेन दुरात्मना निजगृहे यूयं विपक्षाश्रिता-
अप्यद्यावधि संविधाय करुणां प्राणार्पणै रक्षिताः ॥ ७१ ॥

इत्थमिति : १०.३८.४३.

यस्मात् सनन्दकुशलप्रश्नादध्वश्रमं जहौ ।
तत्क्षेमप्रश्नसदृशं नान्यत् सुखकरं भुवि ॥ ७२ ॥
भगवद्गोकुले यस्य लग्नं गोकुलमादरात् ।
को नामाध्वश्रमस्तस्य सर्वतः सुखशालिनः ॥ ७३ ॥

श्रीशकलपतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

१. भोगवान् बलरामश्च ।

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥

सुखोपविष्ट इति : १०.३९.१.

भवन्ति ये संसृतिवर्त्मसंभवाः प्रायो मृगैवार्थमुदीरयन्ति ।
मनोरथास्तेऽपि हरिप्रसादतः सत्याः सतां स्युः श्रमहारिणश्च ॥ १ ॥

सायन्तनाशनमिति : १०.३९.३.

तदा तदज्ञानतमोविनाशनं प्रभुर्विधायैव स कंसचेष्टितम् ।
प्राञ्ज सायन्तनभुक्तितस्त्विदं स्फुटं विभात्यस्य च माधवाह्वयात् ॥२॥

अयमवितथमस्मै सर्वमेवास्मदीयं
मुनिगदितमुदन्तं यद्वदेत्तर्हि तज्ज्ञः ।
अयमनुबमनाः स्यात्स्यान्न यानेऽनुकूलः
कच्चिदिति तमपृच्छत्प्राय एकान्त ईशः ॥ ३ ॥

तात सौम्येति : १०.३९.४.

यो जगत्तात - तातोऽपि तातेत्यक्रूरमब्रवीत् ।
न तस्यैवास तच्चित्रकारि किन्तु विधेरपि ॥ ४ ॥
पूर्ववत् पुरतोऽप्यस्याऽस्मासूपेक्षा भवेत् किमु ।
इति तत्संशयोच्छित्त्यै सोऽब्रवीद्भद्रमस्तु वः ॥ ५ ॥

किं नु न इति : १०.३९.५.

प्रमातृसहजे तमोमयतनौ सदज्ञानिता-
पदे सति भवामये हृदि सुहृत्सुखाशाहतिः ।
स्फुटैव जगतीति किं समनुबोधयन् देवकी-
सुतः स्वयमवर्णयत् सुहृदि कंसदुश्चेष्टितम् ॥ ६ ॥

मा माया सैव तुला यस्येत्यर्थाच्च जीवसहवासात् ।
अज्ञानमेव मातुल - प्रमातृसहजाभिधानतो ध्वनितम् ॥ ७ ॥

अहो अस्मदिति : १०.३९.६.

क्लेशोदयो मद्भक्तानां मत्कृतेऽत्रेति जानतः ।
वदतश्चेश ते तत्र यदुपेक्षा तदद्भुतम् ॥ ८ ॥

दिष्टयेति : १०.३९.७.

पूर्णाप्तकामस्य ममास्तु कस्मात् त्वद्दर्शनेच्छेति वदेश न त्वम् ।
स्वीयेक्षणं काङ्क्षितमेव मह्यमेव त्वयैवोक्तमहं त्वदीयः ॥ ९ ॥

पृष्ट इति : १०.३९.८.

कंसारिणा कुमतिकंसमतानुगामी
प्रेमप्रसादवचसाऽऽदरणीय एवम् ।
कस्यापि नात्र भविताऽनुमतिर्दयालो
निर्व्याजसर्वमतिसाक्ष्यसि तत्त्वमेव ॥ १० ॥

अधुना यदि मामुरीकरोषि तदिहैवेश वसामि सर्वकालम् ।
अभयं भवतो न यावदाप्तं भयमेतस्य दुरात्मनस्तु तावत् ॥ ११ ॥

अकार्यमपि हिंस्रमप्यवकलय्य कर्माधुना-
ऽनवद्यवदुरीकृतं सदय यन्मया निस्त्रपम् ।
न हेतुरपरोऽस्य तु स्फुटतमैव सार्वत्रिकी
यदत्र परतन्त्रता निरयतोऽधिक - त्रासदा ॥ १२ ॥

कं[1]सं भावितदुर्नयं नृपमुपासीना भवन्तोऽधुना
संदिष्टं क्षपयन्ति कृष्ण भवतः प्रश्नोक्तिरेवोत्तरम् ।
कंसस्यान्तकरं विहाय भगवंस्त्वां गोकुलक्षेत्रगं
कंसस्यान्तकरं वजेयुरवने केदार[2]पालाः सखे ॥ १३ ॥

नाप्तान् पश्यति नो सखीनपि न वा बन्धून्न सम्बन्धिनो
वृद्धान्वा पितृसन्निभान्न पितरं साक्षान्नृशंसाग्रणीः ।
यत् केनाप्युपदिष्टमिष्टमपि तन्नाकर्णयत्यंहसां
राशिः किन्त्वतुलस्मयामयमनाः स स्वैरमाचेष्टते ॥ १४ ॥

सर्वान् वः समजीजयत् कथमसावेकः समं सङ्गतान्
मा पृच्छ त्वमिदं यदत्र भगवंस्त्वत्पादमेकं विना ।
त्रैलोक्यं युगपत्समागतमपि स्थातुं न तस्याग्रतः
शक्तं का पुनरीश सौम्यजनुषामस्माकमस्मिन् गतिः ॥ १५ ॥

---

१. कमिति च्छेदः, कंसं च । २. कर्षकाः, के इति च्छेदश्च ।

यः स्वस्मिन्मन् यमानो विरिपुरहमिति स्वैरवृत्तिप्रचारः
प्रायो गोविप्रसाधूनसुरमतिरसौ द्वेष्टि देवान् मुनींश्च ।
दीनानस्मांस्तु नित्यं गणयति नितरां तार्णपर्णाग्रतुल्यान्
हेतुस्तत्रैक एवाच्युत वयमखिलास्तावका इत्यगूढः ॥ १६ ॥
एक एव विशेषोऽस्ति तस्यास्माकं च संप्रति ।
स हि भीत्या वयं प्रीत्या पश्यामस्त्वामहर्निशम् ॥ १७ ॥
देव त्वदीयपादाब्ज - वीक्षामृत - जिघृक्षवः ।
सर्वेऽपि त्वां दिदृक्षामो जीवं जीवाः सुधाकरम् ॥ १८ ॥
तदौषधीश - वंशेन्द्र धन्वन्तरिकृतस्तुते ।
दृशैवामृतवर्षिण्या सर्वान्नः कुर्वनामयान् ॥ १९ ॥
हे श्रीकृष्ण यदूद्वहाच्युत विभो हे नाथ हे श्रीपते
हेलालोडितपालिता-ऽसुरसुरप्राग्भार भूभारहृत् ।
हे दीनावनदीक्षितावनिपते लक्ष्मीपते संकटा-
दस्मान्मोचय नस्त्वदेकशरणान्नित्येव भूयर्थना ॥ २० ॥
समग्रविश्वासनविश्वनायक तदुत्स्मयासुश्वसनापहारतः ।
तथा दिशाश्वासनमद्य शाश्वतं निजं यथाऽऽश्वासनमाभजामहे ॥२१॥
यच्चावश्यकमन्यथा न भवतीत्यादिष्टमीश त्वयै-
वास्मात्सागसि मय्यपीह सरुषं दृष्टिं वृथा मा कृथाः ।
किं चानन्तदुरन्त-दैत्यनिवह - प्राणप्रहाणोद्यतं
त्वामन्यायविधानमेव रिपुगं चक्रे पुराऽग्रेऽपि च ॥ २२ ॥
त्वत्पादनीरजसुधासरिति प्रभोऽहं
तद्गर्ववागनलतप्तहृदद्य मंक्तुम् ।
प्राप्तोऽस्मि तत्रभवतः कृपया तदेतत्
संपादितं तदिति वृत्तमपि व्यभाणि ॥ २३ ॥
यत्कृत्यं सदसाधु वा कृतमलं तत्सर्वतः सेवको
यः स्वस्वामिपदे निवेदयति निर्व्याजं स राज्ञः प्रियः ।
स्यादेवेत्यखिलेशकृत्यमखिलं विज्ञापितं सन्मया
त्वं वेत्स्यत्र न संशयो मम मनाक् सर्वज्ञ तत्पाहि माम् ॥२४॥

श्रुत्वेति : १०.३९.१०.

शृण्वन्नेव - मशेषमुत्पथगतं तद्वृत्तमक्रूरतः
क्रोधागाध - रसावलिप्तहृदयो - ऽप्यद्यानवद्ये व्रजे ।
तद्व्यक्तीभवनं न चोचितमिति त्रैलोक्यनाथस्तदा
स्वं रामोऽपि सहास्यमास्यमकरोत् सन्दिष्टदत्तेक्षणः ॥२५॥
यो दुर्मतिर्द्विजान् द्वेष्टि देवान्साधूंश्च गा अपि ।
तत्पापमेव तं हन्तुमलमित्यकरोत् स्मितम् ॥ २६ ॥
अहो राज्यस्मयो नाम महादुरितकारणम् ।
प्रायश्चित्तं न तस्यास्ति यस्तद्वानिति सस्मितः ॥ २७ ॥
न यद्यपि सुहृच्छत्रू ममात्र समदर्शिनः ।
तथापि तौ ध्रुवं स्यातां यौ भक्तप्रियदुर्हृदौ ॥ २८ ॥
एवं प्रहसिताच्छ्रीशो व्यक्तीकुर्वन्निजाशयम् ।
सोत्साहमूचे पितरं श्रीशः स्वीयावनोत्सुकः ॥ २९ ॥
( युग्मम् )

प्रकृतोपयोगि किमपीह मयाऽस्मै व्रजनायकाय कथनीयमितीव ।
किमसौ प्रभुस्तदुदितार्थगशेषहृदयः सशेष इह तं प्रबभाषे ॥ ३० ॥
व्यजिज्ञपत्तदा राज्ञाऽऽदिष्टं सेवार्थमच्युतः ।
उपायनानि गृह्णीध्वमिति तद्भागतः क्षमा ॥ ३१ ॥
तावदज्ञाततत्त्वार्थो नन्दस्तत्र न संशयः ।
द्रक्ष्यामः सुमहत्पर्वेत्यन्यथैवं कथं वदेत् ॥ ३२ ॥

जानन्नेव विभुः स कंसचरितं जानन् स्वकीयस्थितिं
जानन्नारदतोऽपि तात्त्विकमिहाक्रूरागतेः कारणम् ।
श्रुत्वाऽक्रूरत एव तत्र पितरं नन्दं यदश्रावयत्
तेनाज्ञानमलं व्यबोधि बहुधा तादृग् व्रजाधीशितुः ॥ ३३ ॥

गोपानिति : १०.३९.११.

ज्ञात्वा तादृक्तदीयाशयमिह मनसा कारणे कार्ययोगं
ज्ञात्वा चाज्ञानराजाङ्कितमखिलमिदं भोग्यमागोरसादि ।

१. सबलरामः । २. वक्ष्यमाणनन्दवाक् ।

युक्तं सोत्साहवृत्तिर्व्रजपतिरखिलं घोषमुद्घोषशब्दै-
रन्वर्थं प्राग्विधाय प्रकटितमकरोज्ज्ञप्तये स्वाशयं सः ॥ ३४ ॥

यो जातोऽक्रूरयोगोऽसौ सपद्यज्ञानहार्यपि ।
सञ्जातः समयापेक्षी यदज्ञाननियोजितः ॥ ३५ ॥

गोप्यस्ता इति : १०.३९.१३.

सगुणरूपनिरीक्षणतोषिता अभिलषन्त्यगुणं नहि वृत्तयः ।
स्फुटमिदं श्रुततद्गतयोऽप्यमूर्युवतयो जनितार्तिभरा यतः ॥ ३६ ॥

अज्ञाननाशादपरोक्षभाजामपि च्युतं स्यात् सगुणेक्षणं नः ।
इति स्मृतेशाङ्गसुखाः पुनस्ताः तदा तथासन् श्रुततत्प्रयाणाः ॥ ३७ ॥

योऽक्रूरयोगोऽयमिह व्रजे स प्राक् क्रूरयोगोऽलमिवासुखाय ।
प्रायो भवेन्नेति विनिश्चितार्था अप्यार्तिभाजः स्मृततत्स्वभावाः ॥ ३८ ॥

स्रंसद्दुकूलेति : १०.३९.१४.

यस्याङ्गसङ्गस्पृहयालुना मया
जघन्यवासोऽपि मनाङ् न लक्षितः ।
अस्मात् स चेद्गच्छति किं ततोऽनये-
त्यासीत् श्लथं तद्वसनं तदा किमु ॥ ३९ ॥

यत्स्रंसनं रागिवरेण्यमान्यं कामर्धिकारीति पटः स तस्याः ।
आसीच्छ्लथो युक्तमिहाच्युतस्य भूयो व्रजावस्थितिकामवृद्ध्यै ॥४०॥

यत्करार्पणतः श्रीमानहमासमिह ध्रुवम् ।
तद्वियोगे कथं स्यादित्यभूत् सश्लथवृत्तिकः ॥ ४१ ॥

अनङ्गसङ्गोऽप्यतनुप्रसङ्गोऽप्यनेन साकं बहुधाऽनुभूतः ।
सुखेऽपि दुःखेऽपि च तुल्यवृत्त्येत्यभूत्तथा तद्विशदं विधातुम् ॥ ४२ ॥

यावदस्य व्रजे वासस्तावद् वासोऽपि नः शुभः ।
आलोच्यैवं तदा युक्तं वासः शिथिलवृत्त्यभूत् ॥ ४३ ॥

---

१. हस्तो ग्राह्यभागश्च ; २. अनङ्गेन संगोप्यः स चासौ तनुप्रसङ्गः, अनङ्गसङ्ग इति च्छेदः, अङ्गसङ्गो नेति तनुप्रसङ्गो नेति च ।

अक्रूरयोगेऽभ्युदिते न को वा
वामाङ्गसङ्गे श्लथभावमीयात् ।
युक्तं तदा तद्वसनं तथाऽऽसी-
च्चित्रं त्वधोगं च क्षुदकपदार्हम् ॥ ४४ ॥

सवलयः किल तस्य दुरात्मनो विभुवियोगनियोजितचेतसः ।
द्रुतमहो भवितेति विबोधयन् सवलयः कृशतामगमत् करः ॥ ४५ ॥

कृष्णरूपजुषो नित्यं सुमनोऽधिकशालिनः ।
केशाभिख्याश्च हृद्ग्रन्थिस्तेषां श्लथ इति क्षमम् ॥ ४६ ॥

अन्याश्चेति : १०.३९.१५.

आपरोक्ष्यं परोक्षेऽपि येन तं मार्गमाश्रये ।
इत्युज्झितबहिस्तन्त्रा काऽप्यपश्यत् तमन्तरे ॥ ४७ ॥

स्मरन्त्यश्चेति : १०.३९.१६.

सम्बन्धिनोरेकतरापरोक्षे सिद्धा परस्याप्यपरोक्षतेति ।
अस्मार्षुरेका भगवद्गुणांस्तास्तद्गुण्यखण्डस्मृतये गुणज्ञाः ॥ ४८ ॥

समेता इति : १०.३९.१८.

अक्रूरयोगो हि कलिप्रधानः संदृश्यते तद्भयमेकचित्ताः ।
भवाम सख्यो बहुधार्थदक्षाः शक्तिः कलौ यद्गदिता समूहे ॥ ४९ ॥

अहो विधातरिति : १०.३९.१९.

धातस्त्वं चतुराननोऽसि चतुराम्नायार्थविज्ञासि तत्
चातुर्यं तव सर्जने हि जगतां यद्वर्ण्यमानं बुधैः ।
प्रायो भाति तदीदृगेव यदिह श्रीशेन नः सङ्गमं
निर्माय द्रुतमस्य भञ्जनविधा-वप्यात्तयत्नोऽस्यहो ॥ ५० ॥

अस्माकमीशसुखसङ्गमनन्तराय-
मस्मिन्नवेक्ष्य सहसे न यदेतदत्र ।
श्रीमत्सरस्थितिनिवासितया प्रसिद्धो
यस्तस्य ते हतविधे ननु युक्तमेव ॥ ५१ ॥

---

१. यज्ञनाशः । २. श्रीमच्च तत्सरस्तत् स्थिति कमलम्, श्रीरिति च्छेदश्च ।

यदस्मासु श्रीशानवरत-रतोत्साहमतिषु
दयामेकां स्रष्टुं न खलु निपुणः कीदृशमपि।
सृजास्येतत्सर्वं जगदिति वृथैवेह वहसे
प्रतिष्ठां हे स्रष्टः किमति वितथार्थां त्रिभुवने ॥ ५२ ॥
बालोऽहं जगदीशितुर्भगवतो मत्वेति चित्ते विधे
मैवापार्थविहारवान् भव तथा लोके यथा बालकः।
युक्तं तत्र हिताहितैकविधुरे सर्वागमोद्भासिते
त्वय्येतत्तु पितामहे त्रिजगतः स्यादेव हास्यास्पदम् ॥ ५३ ॥

यस्त्वमिति : १०.३९.२०.

परोक्षस्यापरोक्षाय यतन्ते सकला विधे।
अपरोक्षेशपारोक्ष्यकृत् त्वमेवैक ईक्षितः ॥ ५४ ॥
अधिवससि सत्यलोकं सत्यमतो ब्रूहि सत्यवनविषये।
अङ्गीकृतोग्रकर्मा[1] भवसि विधे जगति समदृगपि कस्मात् ॥ ५५ ॥
त्यक्त्वा जडांशममृतग्रहण-प्रवीणान्
हंसान् विमानपदवीं[2] नयतो विधेऽस्मिन्।
संतस्थुषश्च अंडजातपदे[3] स्फुटं ते
धीवैभवं सदसदर्थ - विवेचनायाम् ॥ ५६ ॥

क्रूरस्त्वामिति : १०.३९.२१.

दत्तापहृतिजो दोषः प्रायश्चित्तातिगो[4] यतः।
तद्युक्तं न स ते चित्ते हरतो दत्तमक्षिनः ॥ ५७ ॥
विधिरसाधुरसाधुतरा वयं भृशमसाधुतमोऽपि रमाधवः।
इदमनार्यमयोग्यमसाधु चेत्यलमहो कतमोऽपि न पश्यति ॥ ५८ ॥

न नन्दसूनुरिति १०.३९.२२.

आभिर्मदर्थं संत्यक्ताः सुहृदाप्तजना इति।
आलोचयन् स सङ्कोचादपि पश्यति नाच्युतः ॥ ५९ ॥

---

१. उग्रस्य शङ्करस्य कर्म, उग्रं च तत्कर्म चेति। २. अपमानो विमानं च।
३. जडसमूहः कमलं च। ४. चान्द्रायणादि, प्राय इति च्छेदश्च।

तासामिति १०.३९.२४.

नानाहाव विभाव-भावविभव व्यक्तस्वभावाः स्त्रियो
दृष्ट्वा मोहितधीरसौ यदुपतिः कस्मादकस्मादपि ।
अस्मांस्तत्र सखि स्मरिष्यति पुनर्यानस्य[1] वार्ता पुन-
र्दूरे वैति विचारतः किमधुना यद् ग्राम्यता नः स्फुटा ॥ ६० ॥

आगोपाङ्गनमा च पण्डितमिति [2]न्यायेन मूर्खज्ञयोः[3]
सीमाभूमिरबोधि तत्र हि वयं मूर्खत्वसीमाभुवः ।
एवं संविदऽताप्यनेन निजपद्दास्यं प्रति प्रापिताः
लाभः सोऽयमलौकिकः सखि परित्यागस्तु सिद्धो हि नः ॥ ६१ ॥

मैतद्विधस्येति : १०.३९.२६.

प्रतारकः[4] सम्प्रति विप्रतारकद्[5] प्रतारणप्रेप्सुरिदं च चाद्भुतम् ।
प्रतारकास्मन्नयनप्रतारणामक्रूरनाम्ना[6] कुरुतेऽयमित्यहो ॥ ६२ ॥

क्रूरकरादिह[7] चक्षुःप्राप्तिर्दृष्टा श्रुता च युक्तमतः ।
सख्यक्रूरकरादिह प्रसज्जते चक्षुरपहरणम् ॥ ६३ ॥

क्रूरकरादक्रूरः क्रूरकरः सत्यमेव सखि यस्मात् ।
क्षणदाभिख्ये[8] समये सोऽयमिव क्वापि नैव तापयति ॥ ६४ ॥

अक्रूरकृष्णयोगो[9] भूर्यनुभूतः पुराङ्गतापघ्नः ।
कथमयमधुनाऽपूर्वः सखि दुःसहतापकृद् भवति ॥ ६५ ॥

अपूर्वत्वादपूर्वं[10] तच्चेष्टितं स्फुटमेव यत् ।
नामद्वयमतो युक्तमक्रूरः क्रूर इत्यपि ॥ ६६ ॥

क्रूराक्रूरगुणौ[11] दृष्टौ पूर्वाशायाः प्रसादकौ ।
तदन्योऽयं कुतः प्राप्तः पूर्वाशारुचिहारकः ॥ ६७ ॥

---

१. पुनरागमनस्य । २. नीत्या । ३. मूर्खश्च ज्ञश्च तयोः । ४. तारको वञ्चकश्च । ५. विशेषेण वञ्चकाः, विप्राणां तारकः कृष्णश्च । ६. कनीनिका वञ्चकानि च । ७. सूर्यात् । ८. रात्रिः, उत्सवप्रदा च । ९. कर्मधारयो द्वन्द्वश्च । १०. नवीनत्वात्, अकारपूर्वकत्वाच्च । ११. सूर्य-चन्द्रौ ।

शस्तः स चाक्रूरगुणो जगत्यलमण्डमतापकृत् सत्सु सुमित्रंणुले।
प्रवेशतो यो हि ततोऽतिमञ्जुलं तेजः सुधासारमुपैति नापरः ॥ ६८ ॥

सँदोषः सकलङ्कश्च प्रागँक्रूरगुणस्त्वया।
ज्ञात एवेति किं भूयस्तदाम्रेडितया गिरा ॥ ६९ ॥

क्रूरस्तत्पुरुषत्वतोऽयमवनौ निर्णीत एवेति किं
सख्यस्मिंस्तव विस्मयावहमभूत् क्रूरत्वमुग्रक्रियम्।
क्रूरः किञ्च तँमस्थितिः स च जगँच्चक्षुः पिधानं करो-
त्यत्रास्मल्लघुचक्षुषामपह्नति - र्नास्मिंस्तदप्यद्भुतम् ॥ ७० ॥

दोषोत्प्रभगुणकलनं करोत्यसाविह तममंयो यः स्यात्।
सात्त्विकभावप्रसरा यद्भयमिह तत् त्यजाऽऽलि तद्वार्ताम् ॥ ७१ ॥

अनार्द्रधीरिति : १०.३९.२७.

त्यक्तः स्वाप्तजनो न जातुचिदपि त्यक्तोऽस्य सेवाक्रमो
जातः पत्युरनादरः पुनरसौ जातो न पत्युः श्रियः।
क्रान्तं वर्त्म कुलागतं यदुपतेः क्रान्तं न दृक्सूचनं
सत्येवं स च वज्रसारहृदयो जातः कथं संप्रति ॥ ७२ ॥

भुवि वारिवहस्वरूप एष स्फुटमेवालि स चञ्चलान्तरोँऽस्ति।
नहि पूर्वमिदं मनागबोधीत्यनुतापस्य निदानमेतदेव ॥ ७३ ॥

अप्येष गच्छतु जनोऽप्यनुयातु चैन-
मंस्मद्गतिर्भवतु वा भुवि याऽपि काऽपि।
नात्रार्थये किमपि धातरिदं तु याचे
नैतद्विधं कुरु पुनः सदयाभिधानम् ॥ ७४ ॥

किमक्रूरो निन्द्यो नयति यदयं प्राणसुहृदं
किमीशो वा वाच्यो यदिममनुगच्छत्यदयवत्।

---

१. चन्द्रः। २. सुहृत् सूर्यश्च। ३. रात्रिः, दूषणं च। ४. चन्द्रः, अक्रूरस्य गुणश्च। ५. शित्वात् कंससम्बन्धिपुरुषत्वाच्च। ६ राहुः, अज्ञानं च। ७. सूर्यो लोकनेत्राणि च। ८. चन्द्रो दोषोल्लासिगुणाश्च। ९. राहुः, तमोगुणश्च। १०. चञ्चलं विद्युच्च।

अवद्या वा गोपा यदिममनुकूलाश्च निखिला

विधिर्वा नोऽवद्यो यदघटितनिर्यत्नघटकः ॥ ७५ ॥

यदक्रूरः क्रूरोऽजनि निजजनो निर्दयमनाः

त्रुटिः कालः कल्पः कुलिशकठिनः श्रीपतिरपि ।

यदन्नं यत्पेयं निखिलमविशेषेण विषव-

न्न जानीमो हेतुं परमिह विनैकेन विधिना ॥ ७६ ॥

कं देवं परिपूजयामि विहितं किं वा चरामि व्रतं

कं वा सङ्ग्रहमर्चयामि नियमं कं वा दधामीष्टदम् ।

त्यक्तात्यक्तपदार्थयोर्विनिमयं कुर्यां कयोर्वा सखि

येन स्यात् सततं रमेशविहृतिर्निर्विघ्नमस्मिन् व्रजे ॥ ७७ ॥

निवारयाम इति : १०.३९.२८.

यद्वारणं रिपुरपि प्रसभं विदध्या-

दग्रे विधाय निजवेश्मनि वारणं सः ।

तद्वारणं वयमिहैव वताऽद्य कुर्मः

कः शक्नुयात्सखि निवारयितुं जनो नः ॥ ७८ ॥

वस्त्वप्राप्तमदुर्लभं यदि तदानन्दाय सञ्जायते

दौर्लभ्ये च न खेदकारि भवति प्राप्तं तु यातं यदि ।

स्यादेवाद्भुततापकृत्त्रिजगतीत्यूचुस्तदा गोपिका

धन्यास्तेऽश्रुतमाधवास्तनुभृतोऽधन्या वयं न्यायतः ॥ ७९ ॥

धन्याधन्यत्व-पर्याप्तिभूमिका गोपिका इह ।

श्रीराङ्गसङ्गतः पूर्वं तद्वियोगादनन्तरम् ॥ ८० ॥

यस्यानुरागेति : १०.३९.२९.

साकं येन निशाऽनिशं निमिषवन्नीता तथा वासरो-

प्युच्चै - र्यन्मुखकञ्ज - मञ्जुमुरली - धीरस्वराकर्णनैः ।

तस्मिन् गच्छति गोकुलात्प्रियतमे किं वा पुरः कुर्महे

भूरेषाऽपि निजान्तरं न दिशति प्रोद्बुद्धसापत्न्यधीः ॥ ८१ ॥

---

१. गजम् ।

एवं ब्रुवाणा इति : १०.३९.३१.

रासेऽच्युतान्निदमभूद्रुदितं पुरैवं
संस्मृत्य ता रुरुदुरीशपदाप्तिकामाः ।
साध्वन्यथेष्टगमने निगमे निषिद्धं
कुर्युः कथं रुदितमीप्सितकृष्णभव्याः ॥ ८२ ॥

रुदितं गमने निषिद्धमस्मिन्निति संचिन्त्य चिरन्तना हि गोपाः ।
पुनरत्र निवासमेव कुर्युर्भविता भूरि ततोऽस्मदिष्टमर्थात् ॥ ८३ ॥

श्रुत्वाऽपि रोदनमिमे हठतो गृहीत्वा
श्रीशं गता यदि तदाऽपि न चास्त्वभव्यम् ।
इत्थं विचिन्त्य रुरुदुर्बहु सुस्वरं य-
च्छास्त्रे न्यषेधि तदसुस्वरमेव गर्ह्यम् ॥ ८४ ॥

याऽस्मत्प्रियेष्टसुखसङ्गमभङ्गकृत् स्यात्
किं वा तयाऽऽत्मगतया निज-जातिभाजा ।
इत्थं तदैकमतयो निखिला विचिन्त्य
तत्तादृशीं जहुरिदं क्षममात्मलज्जाम् ॥ ८५ ॥

इन्द्रस्त्वं च गवामसीह स कथं सन्त्यज्य ता गच्छसि
नन्दं तात इति ब्रुवंश्च सहसा जातः कथं माधवः ।
दाम्ना बद्ध इति प्रथामुपगतः सत्प्रेमबद्धः कथं
गोविन्देति च माधवेति च तदा दामोदरेत्युज्जगुः ॥ ८६ ॥

स्त्रीणामिति : १०.३९.३२.

ब्रह्मेशदुर्लभानपि मनोरथार्था-नपूरयद् यस्य ।
तद्रथमतुलदयालुः समारुरोहेति नाद्भुतं किञ्चित् ॥ ८७ ॥

तास्तथेति : १०.३९.३५.

आसां मद्विरहाग्नितप्तमनसां तापोपशान्तिस्तथा
कार्या संप्रति मद्वचो नहि यथा स्यादप्रमाणं पुरः ।
इत्यन्तर्विहिताशयोऽत्र च पुनर्दूतात्मनात्मागम-
मायास्ये इति दौत्यकैरिति पदैरुचेऽच्युतः प्रायशः ॥ ८८ ॥

पुनरत्राहमायास्य इत्युक्तिरनुपेयुषः ।
श्रीपतेरन्यथा चिन्त्यप्रामाण्या स्यादितीक्ष्यताम् ॥ ८९ ॥
( युग्मम् )

यावदिति : १०.३९.३५.

आरजोध्वजदृष्टिं तं पश्यन्तीभिः प्रदर्शितः ।
विश्वव्याप्तेशसद्रूपसाक्षात्कृतिविधिर्ध्रुवम् ॥ ९० ॥

ता निराशा इति : १०.३९.३७.

बाह्यान्तरैकवृत्त्या कलिता विकलाच्युतस्वरूपाणाम् ।
विरहो नाम तदासीत्तासां जनचर्मचक्षुरभिवर्ण्यः ॥ ९१ ॥

अक्रूरः स्वात्मयोगाद्रथगमधिपतिं संविधायाऽसुवेगाद्
वृत्तीनां गोष्ठभाजामविषयपदवीं प्रापयन् कौशलेन ।
कुर्वन्निष्पापवासं तदनु निजरथं योजयन् वृक्षखण्डे
पीत्वा कृष्णामृतं श्रीपददृगनुभवी स्यात्स सूर्यात्मजां ते ॥ ९२ ॥

ता यावच्छक्ति गत्वा तदविषयतया चित्रवन्निर्मनस्का-
स्तस्थुः श्रीशोऽपि तादृक्कृतगमनतया सूर्यजायामघघ्न्याम् ।
संयोज्य स्यन्दनं तं विहित-तदुदकप्राशनो वृक्षखण्डे
तस्थावेतच्चरित्राद् ध्वनितमिदमिहेत्यूह्यतां योगिवर्यैः ॥ ९३ ॥

तत्र प्राग्वासनातो यदि भजति समुत्थानमीशं रथस्थं
पश्यत्यामन्नभावे सति तु सविशदं पश्यतीदृक् स्वरूपम् ।
इत्थं सिद्धानुभूतिस्थितिरथ च विभोरीदृशी वैभवश्री-
रित्यर्थं ज्ञापयित्रा निगदितमृषिणैवमीदृक् चरित्रात् ॥ ९४ ॥
( विशेषक म् )

निमज्ज्येति : १०.३९.४१.

यथा शरीरे भुवनेऽपि तादृशस्वरूप एवास्म्यहमित्यधोक्षजः ।
प्रबोधयन् यद्रथगं स्वरूपकं तदेव तस्मै भुवनेऽप्यदर्शयत् ॥ ९५ ॥
उपाधिभेदादुपधेयभेदः प्रसिद्ध एवेति समञ्जसं तत् ।
रथे यथा तौ भुवने तथा तावेकावपीशौ यदपश्यदेषः ॥ ९६ ॥

भूयस्तत्रेति : १०.३९.४४.

योऽहं शरीरे भुवने च सोऽहं
शेषे च सोऽहं भुवने च योऽहम् ।
यस्तत्र सोऽहं भुवि सर्वशक्ति-
रित्यच्युतस्तत्क्रमशो व्यतानीत् ॥ ९७ ॥

यः सर्वभावरहितः स हि निर्विशेषं
तद्रूप-मश्रुतिवचोविषयं प्रवेत्ति ।
अक्रूर एष भुवनोदितधी रथस्थ-
सद्वासनो ह्युचितमैक्षत सद्विशेषम् ॥ ९८ ॥

सव्यं पादं प्रसार्याखिलदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरभुजमितरं नागभोगे निधाय ।
पाणिभ्यां तत्पराभ्यां प्रतिभटशमनायावहन् शङ्खचक्रे
श्री-भू शुश्रूषिताङ्घ्रिर्निजविहितनुतिः शर्मदद्यान्मुकुन्दः ॥ ९९ ॥

एतदाकारकध्याने गोचरीभूय सौख्यदः ।
अक्रूरवृत्तेः स्यामेवं भुवनेऽबोधि विष्णुना ॥ १०० ॥

विलोक्येति : १०.३९.५६.

मायावितानपरिकल्पनशिल्पिनोऽस्य
दृष्ट्वैवमात्मसुखदं सदयस्वरूपम् ।
ताटस्थ्यमाप पलमेकमसौ कंमग्न-
स्तद्रूपनिर्णयवितीर्ण-निजान्तरङ्गः ॥ १०१ ॥

स वेद तच्छ्रीभगवत्स्वरूपं शुद्धं चिदानन्दरसावदातम् ।
यस्मिन्नकस्मादुदिते ह्यविद्या सद्यः समस्तप्रसराऽस्तमेति ॥ १०२ ॥

तदाऽक्षितो वाष्पमिषेण निर्ययु-
र्बहिः परानन्दरसैकविन्दवः ।
शरीरवृक्षोऽपि च माधवोदयात्
सपल्लवो रोममिषादभूदलम् ॥ १०३ ॥

---

१. सन् विशेषो यस्य, पक्षे सन्तौ गरुड-शेषौ यस्मिन् । २. जलम् ।
३. कृष्णो वसन्तश्च ।

तत्तादृशस्तस्य तदा पुरस्थं सद्रूपमालोक्य विशेषशोभि।
अमेयमोदातिभरेण निम्नं मनस्तदाऽऽसीन्नमनानुकूलम् ॥ १०४ ॥

गिरेति : १०.३९.५७.

भक्तानुग्रह - भक्तेष्टदानोत्कण्ठित-चेतसम् ।
भक्त्यानन्द-रसोद्रेक-रुद्धकण्ठः स तुष्टुवे ॥ १०५ ॥

श्रीशकल्पतरुक्रोडा० ॥

इति श्रीमन्नासिकनिवासि - कविवर - हरिसूरिविरचिते
भक्तिरसायने एकोनचत्वारिंशोऽध्यायः ।। ३९ ।।

## ॥ अथ चत्वारिंशोऽध्यायः ॥

एवं यदा सावशताङ्गसंस्थितः केऽवस्थितं वैभवमैशमीदृशम् ।
समीक्षते योगविदुक्तयोगतः स्फुटं तदासीदघमर्षणेन के ॥ १ ॥

नतोऽस्मीति : १०.४०.१.

यतः सर्वलोकोऽखिलो भूतसङ्घः
सुरा वाऽसुरा वेन्द्रियाद्यर्थजातम् ।
स यस्यास्ति धाता विभो लघ्वपत्यं
ततस्त्वां विनाऽऽद्यं कमन्यं प्रपद्ये ॥ २ ॥

त्वां योगिन इति : १०.४०.४.

केचित्त्वा मनसा यजन्ति जपतः केचित् त्रयीविद्यया
वैतानैः कतिचित् कति क्रतुवरैरौपासनैः केचन ।
ज्ञानैः केऽपि च केचनाऽन्यविधितो - ऽनेकात्मनैकात्मना
तादृक् संस्तवमपीश पूरयसि तद्वाञ्छामहो वैभवम् ॥ ३ ॥

त्वामेवेति : १०.४०.८.

केचिच्छिवं गणपतिं सवितारमन्ये
तत्तद्गृहीत-समुपासन - भूरिदीक्षाः ।
भक्त्या स्तुवन्त्युचितया वयमित्यहन्ता
तेषामपीत्थमुचिता यदशेषगस्त्वम् ॥ ४ ॥

सत्त्वं रज इति : १०.४०.११.

आब्रह्मस्थावरान्तानां स्वभावा यत्स्वभावतः ।
गुणे गुणत्वमपि यद्योगात् तस्मै नमोऽस्तु ते ॥ ५ ॥

आलस्यग्रस्तचेताः प्रतिपदमखिलान् भिन्नभिन्नाभिमानाद्
ध्यातुं स्तोतुं प्रणन्तुं विधिशिवविबुधान् भूर्भुवःस्वर्निविष्टान् ।
त्वामेवानन्यबुद्ध्या सकलमयतनुं स्तौमि नम्रोऽर्चयामि
तत्तद्रूपैः स्वरूपैरपि भव सकलाधीश तन्मे प्रसन्नः ॥ ६ ॥

ब्रह्मेन्द्र - रुद्र - चन्द्रार्क - मर्यादादर्शिने नमः ।
काल - कर्म - स्वभावैकसाक्षिणे ते नमो नमः ॥ ७ ॥
नमः श्रीवासुदेवाय पद्मनाभाय ते नमः ।
नमोऽखिलजगज्जात - ताततातय ते नमः ॥ ८ ॥

नमः कारणमत्स्यायेति : १०.४०.१७.

नमः सत्यव्रतोत्साहा - ऽऽदृतमीनादिवर्ष्मणे ।
आम्नायागस्यरम्यात्मस्थितये ते नमो नमः ॥ ९ ॥
नमो भक्तक्लेशहन्त्रे नमस्ते पुरुषोत्तम ।
विश्वम्भराखिलाधार श्रीगोविन्द नमोऽस्तु ते ॥ १० ॥

भक्तानामवनाय दुष्टदितिजध्वंसाय हंसात्मको-
प्याद्त्तेऽनुयुगं विचित्रविभवां क्रीडामकामोऽपि यः ।
स त्वं तत्र न संशयो वरदयालावण्यदुग्धाम्बुधे
तन्मां दीनमनाथमङ्घ्रिशरणं पाहि भ्रमाहेर्भयात् ॥ ११ ॥

नोत्सहेऽहमिति : १०.४०.२७.

सकृदपि त्वयि चेन्निहितं मनः
सदय तस्य वशो भवसि ध्रुवम् ।
तदिदमेव परन्त्वतिदुर्घटं
यदिह तत्पवनादपि दुर्ग्रहम् ॥ १२ ॥

यस्यान्तं न विधिर्मनाङ् मुनिरपि प्रापाऽर्थतः शब्दतो
यस्यांशे सकला व्यवस्थितिरियं वर्णाश्रमाणामपि ।
वेदो निःश्वसितं स यस्य गदितं तस्याखिलेशस्य ते
साक्षाद्रूपमनोऽवधारणकृते सर्वेश्वराऽहं कियान् ॥ १३ ॥

सोऽहमिति : १०.४०.२८.

वैरानुबन्ध्यनुमतागमनोऽपि गोपी-
खेदप्रदो निज - निकामसुखेन्दु - राहुः ।
अक्रूर ईदृगपि दिव्यदृगास यस्मात्
सिद्धः प्रभो तव दयाविभवः स्वभावः ॥ १४ ॥

कर्ता भर्ता च धर्ता स्थिरचरजगतामार्तिहर्ता निजानां
ध्वान्तस्तोमापहर्ताऽसति सति च दृशैवाऽपकर्तोपकर्ता ।
दाता त्राताऽवदातोल्लसदतुलगुणः सर्वतन्त्रस्वतन्त्रः
श्रीगोविन्दैक एव त्वमसि तदधुना पाहि मामङ्घ्रिलग्नम् ॥ १५ ॥
विशेषरूपं भुवनोल्लसत्परं दृशा यदा यो भृशमन्तरङ्गया ।
पश्यत्यशेषापगताघसंहतेस्तस्येदृशी स्यात् स्थितिरित्यबोधि हि ॥१६॥
ब्रह्माशयविहारा ये सदैवाक्रूरवृत्तयः ।
ऋचोऽघमर्षणीः सार्था भुवनेऽनुभवन्ति ते ॥ १७ ॥
कंसादस्य कथं भविष्यति नृशंसाद्भयादितीह भ्रमं
दूरीकर्तुमनाः कृपालुरखिलशोऽक्रूरचेतोगतम् ।
नैतादृग्भुवनेष्वतुल्यविभवः कोऽप्यन्य इत्यात्मधी-
द्वारेत्येवमदर्शयद्धि भुवने तत्त्वस्वरूपं तदा ॥ १८ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ अथ एकचत्वारिंशोऽध्यायः ॥

स्तुवत इति : १०.४१.१.

योमत्पदाम्बुजरतिः स मदिष्टरूपं
पश्येज्जडेऽप्यपगता-ऽखिलमोहजालः ।
सत्प्रत्ययाय स जले किमु दर्शयित्वा
तस्मै स्वरूपमथ तद्रथगस्तथाऽऽसीत् ॥ १ ॥

येन त्यक्तं गोकुले सन्ममत्वं वृत्तीनां चाकामताऽकारि भूयः ।
स्यादेवास्य ब्रह्मदृष्टिर्जडेषु स्पष्टैवात्राऽक्रूरकृत्यं प्रमाणम् ॥ २ ॥

बालाविमाविह कठोरमतिः स कंसः
तत्स्यात् पुरः कथमिति भ्रमितान्तरं तम् ।
जानन् हरिः सकलसूक्ष्मदृगन्तरङ्गे
चक्रे नटानुकरणं हरिजातरङ्गे[1] ॥ ३ ॥

यद्रूपमस्य हि मया विशदीकृतं तद्-
बीजं भयभ्रमनिराकृतिरेव सा तु ।
जातेत्यवेक्ष्य नुतिमध्यकृतावहित्थो-
ऽनुक्त्वा प्रसादवरदोक्तिमसौ तदाऽऽसीत् ॥ ४ ॥

सोऽपीति : १०.४१.२.

अन्तर्हितं[2] तदनुरूपमलोकदृष्ट-
मन्तर्हितं क्षणत एव निरीक्ष्य सोऽस्मिन् ।
आवश्यकाऽऽहितमतिः क्षममेव भूयः
कृत्वा मनोरथशतं रथमारुरोह ॥ ५ ॥

सद्योगिनापि हि सता जनसङ्ग्रहार्थ-
मावश्यकं विधिगतं तु विधेयमेव ।

---

१. हरिजा यमुना तत्तरङ्गे, पक्षे हरौ जातानुरागे इत्यन्तरङ्गविशेषणम् ।
२. अन्तरिति पृथक् ।

दृष्टेशवैभवपदोऽपि चकार यस्मा-
दक्रूर एष विहितं किल नित्यकर्म ॥ ६ ॥
अकुर्वन् कुर्वते चात्र करिष्यन्त्यघमर्षणम् ।
अन्वर्थं तु तदेवेड्यं यदक्रूरकृतं जले ॥ ७ ॥
नित्यं श्रीपतिदर्शनसुखशाल्येको हि जगति साधुजनः ।
क्षणमेव तु योगविदो ह्युभयत्रापि प्रमाणमक्रूरः ॥ ८ ॥

तमपृच्छदिति : १०.४१.३.

यदा शताङ्गसङ्गतान्तरङ्गवृत्तिवर्तन-
स्तदा यदि प्रभोरुदासितं पदं हि विन्दति ।
स योग एव योगिभिर्गलन्मदैरुदीरितः
स चास्य पूर्णतामगान्नवेत्यपृच्छदच्युतः ॥ ९ ॥

अद्भुतानीति : १०.४१.४.

भुवनान्तर्हितं देहस्थितं चैकं प्रपश्यतः ।
किं वाच्यमद्भुतं नामेत्यूचेऽक्रूरः समञ्जसम् ॥ १० ॥
तत्त्वज्ञोऽपि विकल्पेन श्रीशोऽवोचत्स चोत्तरम् ।
पर्यायेणेति सुव्यक्तं ह्द्यं हृद्येव धारयेत् ॥ ११ ॥

मार्ग इति : १०.४१.७.

मार्गे[1] प्रियानयनहारिणी संस्थिता ये
दृष्ट्वा हरिं मदनसुन्दरमिन्दुवक्त्रम् ।
तेऽपि स्वदृष्टिमपहर्तुमलं न शेकुः
के वा परे न सुदृशो बत तद्वशाः स्युः ॥ १२ ॥
मार्गगा अपि सन्नागा अपि ते हरि[3]पज्जुषः ।
अत्यद्भुतमिदं यद्वा युक्ता निर्वैरता तदा ॥ १३ ॥

तान् समेत्येति : १०.४१.९.

यः सतामपरित्यागस्तदेवाऽऽत्मव्रतं हरिः ।
दर्शयन् पाणिना पाणिग्रहाद्दिव्यमहो व्यधात् ॥ १४ ॥

---

१. मार्गो मृगसमूहश्च । २. श्रेष्ठाः गजाश्च । ३. कृष्णः सिंहश्च ।

नृशंसकंसमतभागसाविति रुषैव माम्।
त्यजतीति भ्रमोच्छेदायैवोवाच हसन्निव ॥ १५ ॥

भगान् प्रविशतामिति : १०.४१.१०.

साक्रूरवृत्तिरहमत्र विशामि चेत्त-
न्न स्याद्धतिः खलमतेरिति चिन्तयानः।
क्रूरत्वमल्पसमयं परतो व्यगृह्णात्
तत्प्रेषणेन किमु भक्तदयालुरीशः ॥ १६ ॥

अस्मदानयनकार्यकारिणोऽक्रूरसंनियतमेव भूपतेः।
दर्शनं कृतनिवेदनं च ते तत्र नास्मदुपयोग इत्यलम् ॥ १७ ॥

अत्र स्थितेऽस्मिन् भृशमेष कंसो
मन्येत सर्वं मम कृत्यजातम्।
एतत्प्रयोज्यं तदनीतियुक्त-
मित्यब्रवीत्तं पुरतो व्रजेति ॥ १८ ॥

अक्रूरवृत्तिरहमस्मि निसर्गतोऽस्मिन्
कंसोऽप्यसौ यदि भवेत्तदितः शिवं स्यात्।
नाद्यापि किञ्चिदपयातमितीव्यनीति-
स्तत्प्रेषणात् स्फुटमबोधि सुसामपूर्वा ॥ १९ ॥

नाहमिति : १०.४१.११.

सामान्योऽपि न सामान्यविरहं सहते पुमान्।
सोऽक्रूरः श्रीशविरहासहिष्णुर्युक्तमेव तत् ॥ २० ॥

आयास्य इति : १०.४१.१७.

भक्तत्राणं खलध्वंसः कार्यमेतद् द्वयं मम।
अन्त्यं विना न चाद्यं स्यादित्यूचे युक्तमच्युतः ॥ २१ ॥

एवमुक्त इति : १०.४१.१८.

श्रीशन्यस्तमनाः सनातनपदद्रष्टा तदानीमसा-
वक्रूरो विमला इवेति वदतस्त्वेवं मुनेराशयः।
आज्ञप्तं नृप यद्यथा हि भवता सम्पादितं तन्मये-
तीदृग्वृत्तिविवर्त एव स ययौ सद्यो नृपस्यालयम् ॥ २२ ॥

अथेति : १०.४१.१९.

आसीत्कालो वैरिणोऽद्यावधीष्टो
जातः कामं सोऽधुनेष्टो ममेति।
ज्योतिश्चक्षुर्लक्षयन् वारिजाक्षः
सन्मित्राढ्यः प्राविशत्तां तदानीम् ॥ २३ ॥

अनेकरत्नद्युतिचित्रतोरणां पुरीं हिरण्यप्रचुरां सुशोभनाम्।
मुदान्विता गोपगणा मुहुर्मुहुर्निरीक्ष्य हर्षादभितोऽन्ववर्णयन् ॥ २४ ॥

अम्बरं च मनुजा न केवलं स्वीयपुर्युपरि चापि पश्यत।
व्यापकत्वमविवादमस्य तद् बोधयन्स्पृशति स ध्वजोऽम्बरम् ॥ २५ ॥

स्फुटा यौतप्रोतस्थितिरिह गुणानामियमहं
न चान्यद्रूपं मे जगदपि तथा ब्रह्म विततम्।
जनानेवं सत्यापयितुमबुधान् स ध्वजपटः
स्पृशत्यद्धाऽनन्तं पदमपि च विष्णोः प्रतिदिनम् ॥ २६ ॥

देहाहङ्कृतिनक्रभाजि विचलद्दुष्टाक्षमीनोत्करे
वेलोद्यद्विषयोदके प्रतिपदं दुःखैकशैवालके।
मग्नान् संसृतिसागरेऽखिलजनानाकारयत्यन्तिके
पूरूर्ध्वध्वजपाणिभिर्द्रुतमिहायातेति मन्यामहे ॥ २७ ॥

केचिच्छुक्लगुणावलम्बनपराः केचित् त्रिदण्डान्विताः
काषायाम्बरधारिणोऽपि कति वा मुक्तालियुक्तश्रियः।
यद्वासेन जडा अपि ध्वजापटा नित्योल्लसद्वृत्तयो
विष्णोर्भ्रान्तिपदे जगत्यनुपमां तामाढ्यभूमिं नुमः ॥ २८ ॥

यस्यां सन्ततमहिलाऽऽकलितानुभवाध्वजस्थितिश्चित्रम्।
दर्शनतो मनुजानां फलितानुभवाध्वंजश्रमं हरति ॥ २९ ॥

एकः स्वरिन्दुः स क्षीणश्चित्रमत्र सुधामृतः।
पूर्णश्रियो विराजन्ते चन्द्रशाला गृहे गृहे ॥ ३० ॥

---

१. अं वासुदेवं वरं श्रेष्ठम् आकाशं च। २. अध्वजश्चासौ श्रमः।
३. शिरोगृहाणि चन्द्राणां शालाश्च।

चमत्कृतिरियं त्वन्या न दृष्टा जातु न श्रुता ।
यत्रोल्लसन्तो दृश्यन्ते निर्जले कामकेतवः ॥ ३१ ॥
स जनश्च ससत्यश्च सतपस्को महस्थितिः ।
युक्तं सौख्यप्रदो नित्यं विहारोऽपि हरेस्तथा ॥ ३२ ॥
प्राकारो गोगणो वाप्यो गृही च वनिताजनः ।
सर्वोऽप्ययं लसद्वारश्चित्र[3]मेकपदान्वितः ॥ ३३ ॥
प्रथितरिपुनिवासाऽप्यत्र सैव प्रशंस्या
भवति सकलभव्योद्वेय सौभाग्ययोग्या ।
लसितहरिपदा स्याद्या पुरी देहरूपा
स्फुटमिह मथुरैषा तादृगर्थं प्रमाणम् ॥ ३४ ॥

ददर्शेति : १०.४१.२०.

पश्यन्नेवमगाधनीरपरिखान् द्राघिष्ठगाढोन्नतान्
प्राकारानथ गोपुराणि विपणी रथ्याश्च रथ्यान्विताः ।
हर्म्याण्युन्नतिभाञ्जि हेमखचितप्रासादसौधान्यपि
गोपैरुद्गतकौतुकैः स सबलस्तामाविवेशाऽच्युतः ॥ ३५ ॥

आपूर्णकुम्भैरिति : १०.४१.२३.

पुरीप्रवेशावसरे हि याऽऽसीदनन्तमाङ्गल्यपदार्थवीक्षा ।
तयोस्तु सैवाऽभवदिष्टमृद्धे - र्निदानमव्याहतमिष्टसिद्धेः ॥ ३६ ॥
अहो स्वजनवात्सल्यं श्रीपतेः सदयात्मनः ।
तत्र तत्र चरन् पद्भ्यामात्मानं तानदर्शयत् ॥ ३७ ॥

तां सम्प्रविष्टाविति : १०.४१.२४.

नरवद्वपुर्दधानौ देववदद्भुतकृती प्रविष्टौ तौ ।
नरदेववर्त्मना तामित्युक्तं युक्तमेव तन्मुनिना ॥ ३८ ॥
साधारणस्य यदि वृत्तिरिहाजनीश
दृक् सापि तर्हि मुदिता भवतीति युक्तम् ।

---

१. मत्स्याः स्त्रीनेत्ररूपा इति भावः । २. जनादय ऊर्ध्वलोकविशेषाः, पक्षे स्पष्टम् । ३. द्वारं पुच्छम् उदकं बालकाः केशा इति प्राकारादिषु यथायथं योज्यम् ।

निःसीम-हार्दसुहृदां मथुराजनानां
यत्तादृशः समभवन्ननु वृत्तयस्ताः ॥ ३९ ॥

मनांसीति : १०.४१.२७.

गोपीवद्वनिताभिराभिरपि चेन्मन्प्राप्तिकामात्मकः
सङ्कल्पो विहितस्तदा तु मदितस्तत्पूरणं दुर्घटम् ।
आलोच्यैवमथाच्युतश्चतुरधीः सङ्कल्पशून्यां स्थितिं
तासां कर्तुमुपाजहार सहसा तद्धेतुभूतं मनः ॥ ४० ॥

दृष्ट्वेति, प्रासादेति : १०.४१.२८-२९.

श्रौतं वस्त्वपरोक्षतां यदि गतं सर्वत्र सिद्धस्तदा-
ऽऽनन्दो दुःखविनाशनं च मनसः पूर्णा रसावस्थितिः ।
प्रोद्यत्सन्महसा मतः सुमनसां तन्मुख्यशोभाजुषां
युक्तः सत्सुमनःसमर्पणविधिर्युक्तं च हार्दार्चनम् ॥ ४१ ॥

रजकमिति : १०.४१.३२.

तदा तत्पुरवास्यन्तरङ्गरङ्ग - कृदीक्षणः ।
श्रीरङ्गो रङ्गकारं यदपश्यद्युक्तमच्युतः ॥ ४२ ॥

राजकार्यमुदितार्थतरङ्गं यस्तु पश्यति सुराट्पथवृत्तिः ।
सिद्ध एव भुवि तस्य जयोऽग्रे श्रीश इत्यकृत राजकवीक्षाम् ॥ ४३ ॥

कुचेलमित्रः समयाचताम्बराण्यरं स्वतो रङ्गकृतं यदच्युतः ।
क्षमं तदेतन्महतामपि स्फुटं सुदुर्लभं वस्तुनि सस्पृहं मनः ॥ ४४ ॥

पीताम्बरं दधानः कृष्णो नीलाम्बरोल्लसितः ।
अनुरक्ताम्बरहृदयो यदयाचत धौतमेव तद्युक्तम् ॥ ४५ ॥

सत्त्वगुणोत्समवासो मत्प्रीतिकृदेतदर्थ्यहं च भृशम् ।
इति बोधयन्ननन्त-स्तादृशतत्प्रार्थनां पुरश्चक्रे ॥ ४६ ॥

---

१. राज्ञः कार्यं राजकश्रेष्ठं च । २. रजक एव राजकः, राजसमूहश्च । ३. सुदामा । ४. नीलवस्त्रं बलरामं च । ५. स्थितिर्वस्त्रं च ।

देह्यावयोरिति : १०.४१.३३.

निःशेषवासोऽर्पणवासना चेद् देह्यादरेणाऽहमुरीकरोमि ।
नो चेत्संशेषान्मुदितस्ततः स्यामित्यावयोरुक्तित इत्यबोधि ॥ ४७ ॥

त्वमसि यदि तथागतः प्रबुद्धः खलु तदवेहि सदर्हतः सदा नः ।
इति बत न तदा तु युक्तमस्यार्पणमधुनेति विबोधितं तथोक्त्या ॥ ४८ ॥

अर्थिनि मय्यसुरेशः प्राप श्रेयः कुदानतोऽप्यतुलम् ।
तव तद्भवितेत्यार्थिकमकलुषभुवनोज्ज्वलार्पणादवनौ ॥ ४९ ॥

निष्कमस्त्येव मे कण्ठे त्वं पटार्पणमाचर ।
त्वत्स्वामिनं ततो निष्कपटवृत्त्योद्धराम्यलम् ॥ ५० ॥

गुणवत्स्थितिर्न युक्ता दुर्जनकरगेति निजकराकलिताम् ।
कर्तुं तथा तमूचेऽन्यथा किमूनं सदा रमाभर्तुः ॥ ५१ ॥

स याचित इति : १०.४१.३४.

श्रुत्वैवं वाचमैशीं प्रकुपितहृदयः श्वाससंफुल्लघोणो-
ऽवोचत् काप्रार्थनेयं सुमतिभिरभितः प्रोच्यते नष्टशङ्कम् ।
देयादेयव्यवस्था निवसति नहि किं राजकोक्तौ प्रसिद्धा
यद्वा सिद्धोऽस्ति लोकेष्वनुचितवचनं पाकबुद्धेर्विपाकः ॥ ५२ ॥

कान्ता निजाऽपि बत केनचिदर्थ्यमाना
देयेति भाति भवतो मतमत्र यद्वा ।
अज्ञातराज्यपदवी - रमणीसुखस्य
भ्रान्तस्य गह्वरगतेर्ननु युक्तमीदृक् ॥ ५३ ॥

विलसद्गुणवासो हि राजकेष्वेव राजते ।
कथं त्वयाऽर्थ्यते नित्यं कम्बलाम्बरधारिणा ॥ ५४ ॥

अधिकंपटरङ्ककारोऽप्यच्युतरूपं न वेद चित्रमिदम् ।
अथवोचितं तदस्मिन् वेद्यं तस्यैव यो धृतविरागः ॥ ५५ ॥

---

१. सबलरामात् सावशेषाच्च । २. तथागतादयो जैनार्थकाः, पक्षे स्पष्टम् । ३. बलिः । ४. कुत्सितदानं भूदानं च । ५. कपटशून्या निष्कं पटश्चेति । ६. अधि अधिकेति च च्छेदः । ७. अच्युतस्य रूपम्, अच्युतं च तद्रूपं चेति च ।

वासोऽन्तरङ्गभुवि यस्य तपस्विवर्यैः
संप्रार्थ्यते जगति तेन बतार्थितेऽपि।
नादायि यच्च रजकेन तदात्मवासः
तन्मूर्खधीविलसितं किमितोऽपि वाच्यम् ॥ ५६ ॥

तद्वागभ्रविमर्द-निह्नुतकृपा-पूर्णेन्दुरूचे प्रभु-
स्तं पश्यन् प्रदहन्निवातिपरुषाऽमर्षार्चिषा चक्षुषा।
रे रे मूर्खनिरर्गलप्रलपनप्रागल्भ्यधाष्ट्र्याधम
मामुद्दिश्य किमात्थ रे त्वमधुना सद्राजकार्याश्रितम् ॥ ५७ ॥

रे रे राजकनीतिशास्त्रनिपुणप्रज्ञाभिमानिन् वद
त्वं तावत्कुमते मया निजकृते किं रे भवान् याचितः।
श्रेयोऽदस्तव रोचते यदि तदा कुर्वं तदित्थं मया
प्रोक्तेऽप्येतदरुन्तुदं यदवदः स स्वामिजस्ते स्मयः ॥ ५८ ॥

सोल्लुण्ठं त्वपभाषणं यदवदस्त्वं कामिनीदानमि-
त्यत्राप्यज्ञ तवैव सिद्ध्यति महत्यज्ञानिता जाल्मता।
यद् दारैर्विहितार्पणैरपि धनैरात्माऽवनं चेद् बुधैः
कार्यं सन्ततमित्ययं त्रिभुवने जागर्ति घण्टाध्वनिः ॥ ५९ ॥

एवमिति : १०.४१.३७.

तत्तादृगश्राव्यपदाक्षराणामुत्पत्तिमूलं गलमेव मुख्यम्।
निश्चित्य चित्ते सरुषा तदेशो व्यखण्डयत्कण्ठतलं किमस्य ॥ ६० ॥

मदक्षरं मुख्यमनेन नीतं जघन्यभावं तरसा स्वनाम्नि।
रुषेति तत्कं हि कराग्रमेवाऽऽजहार चक्रे च तदा रजःस्थम् ॥ ६१ ॥

मद्वाचक - पदस्थान - कण्ठस्थानेन दुर्हृदा।
माऽस्तु संसर्ग इत्याराद् द्वैधीभावं निनाय किम् ॥ ६२ ॥

---

६. वस्त्रं निवासश्च। १. श्रेष्ठं प्रथमं च। २. निन्द्यत्वम् अन्तिमत्वं च।
३. रज इति वर्णस्थं धूलिस्थं च। ४. अ इति पदम्।

अ[1]न्तस्थोष्मोद्धारं विना न संस्थां[2] लभेत मत्तोऽयम् ।
इति तं[3]च्छिर एवारं जहार हित्वाऽन्यहत्युपायविधिम् ॥ ६३ ॥

अरि[4]णाऽरिशिरोभङ्गो युक्तोऽपि न तथा कृतः ।
नायं सुदर्शनस्पर्शमर्हतीति ततोऽध्वनि ॥ ६४ ॥

देह एव सुखरूपभाग् जनेष्वित्यसद्ग्रहममुष्य दुर्हृदः ।
त्रोटयन्निव स माधवो व्यधात् कं[5] पृथक् रजकस्य कायतः ॥ ६५ ॥

विना नयं राज्यगमङ्गजातं निरर्थकं स्यान्नृपतेर्यथैव ।
अङ्गानि सर्वाणि विनोत्तमाङ्गं व्यर्थानि तत्रैवमुदाजहार ॥ ६६ ॥

मलिनान् गुं[6]णिनो विधाय शुद्धान् भुवने रञ्जयतीति भूरि पुण्यम् ।
तदद्दष्टगतं विभाव्य कृष्णः स्वकरेणास्य शिरोऽस्पृशात् क्षमं तत् ॥६७॥

भव्यामोदनिदानमाश्रयकृतां दृष्ट्वा सुवाचां[7]म्बरं
को नामाम्बरमर्पयेन्न मनुजो निर्णिक्तनेत्र[8]स्थितिः ।
जाल्मोऽसौ रजकस्तु योऽम्बरमुपाश्रित्यापि कंसाम्बरं
न प्रादादिति युक्तमेव हृतवानीशः स कंसा[9]म्बरम् ॥६८॥

कंसाद्यनेक - रिपुशासन - लक्षितार्थं
स्वाभीप्सितेष्टदतया जनगीयमानम् ।
श्लो[10]कं स्वकं सुरसभावगतं मनस्वी-
व्याख्यातुमाद्यमहरत् किमु तत्प्रतीकम् ॥ ६९ ॥

गोविप्रानलदेवताऽतिथिजनान् यो नित्यमुद्वेजय-
त्यार्तत्राणपराङ्मुखे नरपतौ तस्मिन् भृशं सत्यपि ।
तच्चाराजकमेव राज्यमवनौ मन्तव्यमित्याशयं
व्यक्तीकर्तुमसावं[11]राजकमधात् तं राजमार्गे प्रभुः ॥ ७० ॥

---

१. अन्तस्थश्चासौ ऊष्मा गर्वः, व्याकरणोक्त-वर्णसंज्ञाविशेषौ च । २. न्याय्यमार्गं मूर्तिं च । ३. एतद्वर्णयोः पूर्वोक्तसंज्ञावत्त्वम् । ४. चक्रेण । ५. सुखं शिरश्च । ६. पटान् गुणवतश्च । ७. सुगन्धिद्रव्यं वि० अमिति च्छेदः कृष्णम् । ८. वस्त्रं नेत्रं च । ९. कंसवस्त्रं कमिति च्छेदश्च । १०. पद्यं यशश्च । ११. राजशून्यम्, रजक एव राजकस्तच्छून्यं च ।

आलोच्यैव निजं हितं मतिमता यत्किञ्चिदप्यादराद्
दत्तं चेन्मम तोपकारि सफलं स्यादन्यथा त्वीदृशम्।
व्यक्तीकर्तुमना वितीर्णवसना गोपीः पुराऽतोषय-
न्नाऽदादेष कुधीरतोऽस्य हृतवान्प्राणान्स वस्त्राणि च ॥ ७१ ॥
यान्त्यर्थिनैवाऽफलवाञ्छितेन सहासवो दातुरिति प्रसिद्धिः।
स्मृत्यर्थसारानुमतेति कृष्णो निमित्तमासीत्तदसुप्रयाणे ॥ ७२ ॥
गुणिनो यो रञ्जयति हि भुवि सोऽरञ्जयति सकलगुणवत्सु।
नायं तथेति कृष्णो र[1]ञ्जयति स्म क्रुधा स्वरागेण ॥ ७३ ॥
युष्मन्निपातनकृते रचितो हि तेन
कंसेन रङ्ग इति सङ्गतिरत्र मास्तु।
युष्माकमेव-मवलेरित-दत्तचित्त-
स्तद्धीहृतेः स हतवान् किमु रङ्[2]कारम् ॥ ७४ ॥
तस्यानुजीविन इति : १०.४१.३८.
भ्रष्टे प्रधाने ह्यङ्गानां वैफल्यमनुजीविनाम्।
सिद्धमेवेति तद्युक्तं यत्ते सर्वेऽपि दुद्रुवुः ॥ ७५ ॥
मच्चिन्तनादहरहः स विशुद्धभावः
कंसस्तदावरण - माहरणीयमाशु।
आलोचयन्निति दयालुरनर्घ्यवासो
व्याजात् तदावरणमेव किमाजहार ॥ ७६ ॥
अप्रार्थितान्यपि मया जनताभिराभि-
र्नै[3]त्राणि रक्त-सित-कृष्णमयानि मह्यम्।
स्वान्यर्पितान्यलमसावभियाचितोऽपि
नादादिति प्रभुतया जगृहे स तानि ॥ ७७ ॥
वासो नादायि येनेह वासस्तस्य कथं भवेत्।
तद्धत्या वस्त्रहृत्या च निर्वासँ[4]श्रीः कृतस्ततः ॥ ७८ ॥

---

१. रञ्जयति अरमिति च्छेदश्च। २. रङ्गस्थानकर्तारं तन्नामानं च।
३. वस्त्राणि नयनानि च। ४. वसतिर्वस्त्रं च।

वसित्वेति : १०.४१.३९.

भूमौ चेद् गुणिनः पुरातनमलादुन्मत्तहस्तं गताः
सद्भिस्तर्हि निहत्य तं द्रुतममूनादाय भूर्यादरात् ।
स्थाप्याः स्वप्रियभूषणेष्विति विभुः सम्बोधयंस्तत्क्षणे
हत्वा तं रजकं ततः पटचयानादाय चाभूंषयत् ॥ ७९ ॥

अराजकमिदं पुरं प्रथममाशु कृत्वा ततः
सुराजक - विचारणोल्लसित - मुग्रसेनाश्रितम् ।
करोमि कुतुकादिति प्रभुरबोधयत् प्रायशः
प्रसह्य रजकाहतेरथ च शिष्टनेत्रार्पणात् ॥ ८० ॥

दुर्जनकरस्थिता अपि ये रंञ्जनमेवमापु - रतुलगुणम् ।
ते वन्द्या गुणिन इति भ्रुवमादधुरात्मशिरसि ते निखिलाः ॥ ८१ ॥

ईदृग्गुणकं मायावरणं मयि कल्पयन्त्यनल्पदृशः ।
इति दर्शयन् परात्मा प्रावरणावृतमहो व्यधादङ्गम् ॥ ८२ ॥

इदानीमहं गोपवेषोऽस्मि तस्माद्
विशेषत्वमेभ्यो न मय्यच्युतेऽपि ।
इति श्रीपतिश्चिन्तयन्नम्बराणि
दधाराविशेषं समं शेषगोपैः ॥ ८३ ॥

प्रीतिकृच्छत्रुवासोऽपि यदासोन्मित्रवासिनः ।
व्यक्तीकृता ततः स्वस्मिन् शत्रुमित्रैकनेत्रता ॥ ८४ ॥

ततस्तु वायकः प्रीत इति : १०.४१.४०.

गुणघटनाचणधीर्यः स एव गुणिसत्कृतौ मुदं वहति ।
युक्तं स तन्तुवायः पटयोजनमुचितमाहतोऽरचयत् ॥ ८५ ॥

ये यत्नेन मया कृताः सुगुणिनस्तानेष निर्णेजको
भूयो मज्जनपूर्वकं हि लगुडाघातेन जीर्यद्गुणान् ।
कृत्वोवाच जनेषु निरुपमलं शुद्धा मयेमे कृता
नाशस्तस्य कृतोऽमुनेति समभूत् प्रीतः स किं वायकः ॥ ८६ ॥

---

१. भूषाः कृतवान् । २. वस्त्राणि नायकश्च । ३. रञ्जनं अरमिति च्छेदश्च । ४. वस्त्रं निवासश्च ।

नानालक्षणवेषाभ्यामिति : १०.४१.४१.

अरूपमम्बरं[1] पादः सरूपं त्वङ्गभूषणम् ।
इति लक्षणवेषाभ्यां युक्तमीशोऽभिशोभितः ॥ ८७ ॥
अनेकगुणवान् श्रीशः पटोऽपीति समत्वतः ।
युक्तमेवापतुस्तत्र शोभामत्युज्ज्वलां मिथः ॥ ८८ ॥
अशेषं भगवद्रूपमलङ्कर्तुं[2] च वीक्षितुम् ।
नेशः कोऽपीत्यसौ श्रीशे संशेषे नेत्रमादधे ॥ ८९ ॥
स्वयं हि षड्गुणः पत्नी त्रिगुणेति किमच्युतः ।
अत्युज्ज्वलं नवंगुणं[3] पटं स्कन्धे तदाऽऽदधे ॥ ९० ॥

ओतप्रोतस्थितिर्मे जगति भवपटे वर्ण्यते सिद्धवर्यै-
रार्यैरन्यैश्च मय्यप्यनुघटकतया वर्ण्यते स प्रपञ्चः ।
तत्त्वार्थस्त्वेष यो मामभिलषति यथा तद्दृशा तादृशोऽस्मि
नो भूषा नाप्यभूषा मम किमपि परा सच्चिदानन्दभूम्नः ॥ ९१ ॥

स्वदृक्प्रियं तयोर्वेषमकल्पयदसौ तदा ।
स्पष्टमेतेन समभूत् प्रागुक्तरसमानता ॥ ९२ ॥

( युग्मम् )

सदैव मधुरावन्यामहं गुणवदाश्रितः ।
यथार्थयोजकस्तत्र कश्चिदेवेति बोधितम् ॥ ९३ ॥

शक्तिश्चेत्स्वयमर्पणीयमखिलालङ्कारवस्त्रादिकं
श्रीकृष्णाय सदर्पितादरकृते स्याच्चेदशक्तस्तदा ।
कुर्यादाभरणाम्बरैः स्वकरतस्तद्गात्रगैरेव तत्
पूजां भक्तिभरात्ततोऽपि भगवत्तुष्टिः समिद्धं ततः ॥ ९४ ॥

सिद्ध्यत्यविकलं तत्र सर्वशङ्कापनोदकम् ।
प्रमाणमभवत् ता दृग्वायकाचरणं जने ॥ ९५ ॥

( युग्मम् )

---

१. आकाशः वस्त्रं च । २. सबलरामः सावशेषे च । ३. नवीनाः संख्या-विशेषश्च ।

तस्य प्रसन्न इति : १०.४१.४२.

गात्रं मदीयममुना निजनेत्रदान-
पूर्वं व्यभूषि वसनैरविशेषमेभिः।
इत्यात्मसंभृतमुदा हरिणा तदानीं
सोऽपि स्वनेत्रयुगुलाकलितो व्यधायि ॥ ९६ ॥

गलितविपदं कुविन्दं कृत्वा सुमनःपदे समावेश्य।
युक्ता सरूपताऽपि स्वीया दत्ताऽमुना[3] मुकुन्देन ॥ ९७ ॥

गुणगुणिसत्कृतिकृद्यो यत्कृतिरपि सत्प्रपञ्चविशदात्मा।
भगवत्प्रसादपात्रं स च भुवि भवतीत्यगूढमेवैतत् ॥ ९८ ॥

यद्दुर्लभं जगपि योगिमुनीश्वराणा-
माकल्पमात्ममनसः किल वेधसोऽपि।
सारूप्यमाप स हरेस्तदहो कुविन्दो
भक्तैरलभ्यमिह वस्तु न किञ्चिदस्ति ॥ ९९ ॥

ततः सुदाम्न इति : १०.४१.४३.

अनन्तगुणभूषितो भवति वासुदेवो यदा
निजावनकृते तदा व्रजति नाम दामस्थितिम्।
स्फुटं त्विदमभूद्यतो धृतपटः सुदाम्नो गृहो-
न्मुखोऽभवदिहाच्युतः ससुमनः समीक्षोत्सुकः ॥ १०० ॥

यत्राऽम्लानतया स्थितिः सुमनसामस्ति प्रशस्ताकृति-
र्यो वाऽहर्निशमुत्सुकस्तदवने तद्योजने सद्गुणैः।
तत्रावश्यमहं व्रजाम्यनलसः श्रेयः श्रियं दुर्लभा-
मप्यस्मै प्रदिशामि काममिति तद्गेहं ययौ बोधयन् ॥ १०१ ॥

यः सदा सुमनःसेवातत्परः सुमनोहरः।
तदागारमगादाशु वनमालीति साधु तत् ॥ १०२ ॥

---

१. वस्त्रं नेत्रं च। २. आपदं वीतिपदं च। ३. पक्षे मुकाररहितेन च।
४. कृष्णः वनस्य मालीति च।

सन्ध्यातोऽपि समर्थितो बहुसमाहूतोऽपि गीतोऽपि य-

श्चित्तेऽपि प्रतिमात्मना न विशति प्रायो मुनीनामपि ।

स श्रीशः स्वयमेव गेहमगमत् स्वैरं सुदाम्नस्तदा

तत्सत्यं यदचिन्त्यवैभवमहो पुंभाग्यमेतद्वचः ॥ १०३ ॥

सुमनः[1] श्रेष्ठसंप्राप्ति-रनेकसुमनोजुषः ।

युक्ता सापि मिथो योग्यैवासीत् सत्सु मनोहरा ॥ १०४ ॥

उल्लसत्सुमनो[2] वक्त्रामोदाभरण - भूषितः ।

सदारामप्रियः[3] श्रीशः सोऽपि[4] मैत्र्यमतः क्षमम् ॥ १०५ ॥

यस्य यज्जीवनं तस्मिँल्लब्धे तस्योत्सवोऽर्थतः ।

युक्तं तदा सुदामाऽऽसीन्माधवप्रेक्षणोत्सुकः ॥ १०६ ॥

गत्वा तत्सविधे प्रमोदहृदयः कृत्वाऽऽदरात्सन्नतिं

धृत्वा तत्करपल्लवं सविनयं साभ्यर्थनं सोत्सवम् ।

शंसन्नभ्युदयं विधेरनुपदं स्वीयैरनेकैर्वृतः

साऽऽनन्दं सखिभिस्तमन्तरमिवाऽनिन्ये स सद्मान्तरम् ॥ १०७ ॥

तयोरासनमिति : १०.४१.४४.

विन्यस्य धीमान्भृशमासने प्रभुं

विधाय पूजां विधिबोधिताध्वना ।

सामोदमादाय पदाम्बुजोदकं

निजे परेषां च सिषेच मूर्धनि ॥ १०८ ॥

विधाय पुरतः स्थितिं विनयनम्रकार्यस्तदा

तथाऽऽह विहिताञ्जलिः कृततदङ्घ्रिपद्मेक्षणः ।

प्रसादसुमुखो भवेत् प्रभुरगाधमोदप्रदो

यथा च निजसेवकस्थितिरपि प्रकामं स्फुटा ॥ १०९ ॥

प्राहेति : १०.४१.४५.

दासीकृताष्टसिद्धे - र्वितीर्णनिखिलार्थ-पूर्णकामस्य ।

मत्पुण्यपाकतोऽन्यन्नहि जानेऽहं तवागतिनिदानम् ॥ ११० ॥

---

१. देवाः पुष्पाणि च । २. हर्षो गन्धश्च । ३. बलरामः आरामश्च । ४. मालाकारः । ५. वसन्तः कृष्णश्च ।

गार्हस्थ्यं मम धन्यमद्य फलिताः सद्ब्राह्मणोक्ताशिषः
पित्रोः सेवनमप्यदम्भविहितं निर्णीतमुद्यत्फलम् ।
मन्ये चाद्य कुलादिमं गतमलं स्वं चापि पुण्यास्पदं
यच्छ्रीशाहमनुग्रहोत्सुकधिया सम्भावितः श्रीमता ॥ १११ ॥

शुद्धं दानमदाय्यकारि सुतपः प्राजापि मन्त्रो वरः
साधोर्नित्यमसेवि पादकमलं वेदोऽप्यपाठ्यर्थतः ।
एतत्सर्वमकारि जन्मनि पुरा भूयो मयेति ध्रुवं
सौलभ्यान्निरणायि पादरजसो देवाद्यलभ्यस्य ते ॥ ११२ ॥

प्रमादं सत्सु गार्हस्थ्ये गाढान्धतमसं बुधाः ।
तत्र सूर्योदयं प्राहुः साधोरागमनं गृहे ॥ ११३ ॥

भयं द्वितीयादिति वेदडिण्डिमे
विप्रैः प्रसिद्धिं गमितेऽपि निर्भयाः ।
वयं चरामो यदिह प्रवर्तते
भयापहारी किल साधु-सङ्गमः ॥ ११४ ॥

स्त्री चेत् स्यान्न मनोरमा यदि तथा पुत्रो न चेन्नानुग-
स्तादृक् चेद् द्वितयं धनं न यदि तत् तच्चिन्तनव्यापृतिः ।
इत्थं क्लेशमये विवेचनधिया दृष्टे गृहस्थाश्रमे
को रज्येन्ननु वर्णयेदपि न चेत् साध्वङ्घ्रिपद्मागमः ॥ ११५ ॥

तावाज्ञापयतमिति १०.४१.४८.

निजागमनतः स्वामिन् सुकृतार्थः कृतो यथा ।
यया कयापि कर्तव्यस्तथाऽयमधुनाऽऽज्ञया ॥ ११६ ॥

एवं मनोज्ञतरवर्णपदार्थमाला-
माश्रुत्य तस्य गिरमुज्ज्वलभक्तिभाजः ।
श्रेयांसमात्मनि विदंश्च गुणावलम्ब
साधुस्रजं[1] स चकमे सुगुणावलम्बाम् ॥ ११७ ॥

१. साधूनां स्रक् साध्वी चासौ स्रक् च ।

कृतार्थ एवासि सखे निसर्गत-
स्त्वमत्र काऽऽङ्क्षा च तथाप्यदः शृणु ।
वनीपकानां[1] बत नः सदामता
सुखप्रदैका हि सुमाप्तिरुत्तरा[2] ॥ ११८ ॥
यस्योदये सुमनसां[3] भवति प्रकृष्टा[4]-
मोदो यतश्च भुवि पुष्पवदात्मशोभा[5] ।
नानागमप्रसृतिकार्यपि माधवोऽसौ[6]
पुष्पस्रजं स्वयमयाचत चित्रमेतत् ॥ ११९ ॥

इत्यभिप्रेत्येति : १०.४१.४९.

मत्सारूप्ये [सज्जनस्येव भूय-
स्तत्सारूप्येऽप्यस्ति मे संस्पृहेति ।
व्यक्तीकुर्वन् मालिकामर्थितां ता-
मादायाऽभूत् पुष्पमाली किमीशः ॥ १२० ॥
परमस्वादिमदान्तरमवेक्ष्य[7] नाम च वचश्च तस्येशः ।
प्रथममधान्निजकण्ठे[8] श्रुत्यन्ते परमितीह[9] योग्यतमम् ॥ १२१ ॥

इति तस्मै इति : १०.४१.५२.

नान्यत्तथा प्रियमनल्पमपि प्रदत्तं
मह्यं यथा तु सुमनोऽर्पणमित्यनन्तः ।
सम्बोधयन्प्रभुरदादभिवाञ्छितार्थं
तस्मै तदात्तसुमनाः सुमनःप्रदात्रे ॥ १२२ ॥
दामोदरः सुदामोदरमनघं[10] वीक्ष्य निजमिवाऽऽत्मानम् ।
समपूरयत् तदीप्सितमविकलमखिलं तदेति युक्तमिदम् ॥ १२३ ॥

१. याचका वनरक्षकाश्च । २. शोभना मा लक्ष्मीः, पुष्पाणि च । ३ देवाः पुष्पाणि च । ४. हर्षो गन्धश्च । ५. सूर्यचन्द्रौ लतादयश्च । ६. वसन्तः कृष्णश्च । ७. परः मकारो यस्मिन्, सुकार आदिमो यस्य तच्च दाकारोऽन्तरे यस्य तत्सुदामेति नाम, पक्षे उत्कृष्टस्वादप्रदमन्तरं यस्य तादृशं वचनं च । ८. नाममालारूपेण । ९. वचनम् । १०. शोभनदामोदरं सुदाम्नः उदरं च ।

विदात्मनाऽनेन दरिद्रशालिना
प्यकारि मह्यं सुगुणं सुमार्पणम्[1]।
कथं मया तन्न विधेयमीश्वरे-
णापोति चक्रेऽन्वयसंपदाश्रितम् ॥ १२४ ॥
अयं सुदामा दिदिशे मुदा निजा-
भिख्यां सदा[2]कारसुमार्पणेन मे।
आलोचयन्नेवं[3]मकुञ्चितां मुदा[4]-
भिख्यां मुकुन्दोऽपि ददौ निजां तदा ॥ १२५ ॥
या पुष्पिताऽऽगमगता मम वागतन्वी
सोद्यत्फला न भुवि किं त्वफलार्थवादा।
इत्थं मतेरतनुमोहमपाकरिष्णु-
स्तां तत्र विष्णुरकरोत् स्फुटसत्फलांसः ॥ १२६ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

१. पुष्पाणि सुष्ठु मा लक्ष्मीश्च। २. दाकारसहितौ सुमेति वर्णौ, सदाकृति पुष्पं च। ३. विस्तृताम् अकुमिति च्छेदः कुकाररहितां, चिन्तां सम्बद्धाम्। ४. मुदेति वर्णात्मकं नाम, मुदेति च्छेदः शोभां च।

## ।। अथ द्विचत्वारिंशोऽध्यायः ।।

अथ व्रजन्निति : १०.४२.१.

यो नानागुणसंभवावरणभृद्राजद्रजोन्तर्गुणां
वाक्पुष्पस्रजमाश्रितो मधुरसां पूर्मध्यवृत्तिः पुमान् ।
तस्यावश्यमविद्यया सह रतिर्दत्ताङ्गरागश्रिया
स्यादेतद् ध्वनितं तदध्वनि तथा कुब्जेशयोर्वर्तनात् ॥ १ ॥

व्रजन्नृपपथे प्रजाभृतिजनैर्निजैराश्रितो
द्विषत्पुरगतोऽप्यरि - प्रकृतिदत्तचित्तोऽप्यसौ ।
न चालमतिलङ्घने कुटिलचेटिकाया अपी-
त्यभूदिह ततो न किं स्फुटमलङ्घ्यदुर्गं स्त्रियः ॥ २ ॥

वामनोऽहमियं कुब्जा योगोऽयमधुनाऽऽवयोः ।
सर्वलोकाद्भुतकरः स्यादिति प्राहसद्धरिः ॥ ३ ॥

श्लाघ्यमप्सरसां रूपं गात्रं तु कुटिलाकृति ।
अहो विधातृचातुर्यमीदृगित्यहसद्धरिः ॥ ४ ॥

यन्नो विहाय रमसेऽङ्गनया यथाऽसौ
सौन्दर्यभू - रखिललोक - विलक्षणैव ।
प्रायो भवेदिति तु गोपसुतानुयोगे
हास्यं तदुत्तरमिति प्रभुणा व्यबोधि ॥ ५ ॥

सदा महानन्दरसप्रदस्य य-
न्ममापि पाटीररसार्थनोदिता ।
अहो विचित्रा समयानुसारिते-
त्यधोक्षजो विस्मयतो जहास किम् ॥ ६ ॥

या स्त्री सहासपरिहासमपि प्रकामं
श्रुत्वा वचो न कुपिता हृदये यदि स्यात् ।
वश्या भवत्यचिरमध्वनि सेति कृष्ण-
स्तन्निर्णयाय किमु तामवदत् तथैव ॥ ७ ॥

नादत्तमध्ध्यवनि सिद्ध्यति किञ्चनेति
निश्चित्य चान्दनरसं भृशमाजिघृक्षुः।
हासच्छलाद् रसमसावनुरागपूर्वं
प्रादात्तदा किमु मुदा निजमुख्यमस्यै ॥ ८ ॥
दृष्टाः स्त्रियोऽनुभूताश्च नाऽप्यङ्गभोगमनोरमाः।
अनङ्गभोगयोग्यासावेकैवैक्षीति विस्मितः ॥ ९ ॥
अनर्घ्य-ललनारत्न - राशिरञ्जित-चेतसः।
नाहमर्हेति यान्तीं स्वप्रीतिं हासाददर्शयत् ॥ १० ॥
अङ्गरागकराऽप्येषाऽनङ्गरागकरा भवेत्।
यथाऽचिरं तथा कार्यमित्युज्ज्वलमधात् स्मितम् ॥ ११ ॥

का त्वं वरोर्विति : १०.४२.२.

का त्वं सुन्दरि सुन्दरोऽयमपि वा कस्याङ्गरागः कृते
प्रश्नोक्ताविति यत्तदाऽखिलविदाऽप्यज्ञानिताऽङ्गीकृता।
तेन स्पष्टमभूदिदं यदबला विद्वांसमाकर्षय-
त्यज्ञानं समुदेति तस्य य इह स्यादङ्गरागेक्षणः ॥ १२ ॥
न श्रद्धा वर्धते लोके सत्फलश्रवणं विना।
श्रेयस्ते न चिराद्भावीत्यूचे युक्तमधोक्षजः ॥ १३ ॥
गन्धार्पणफलं विप्रैः सौमङ्गल्यमुदीरितम्।
युक्तमूचे तव श्रेयः स्यादितीशो हि तन्मुखः ॥ १४ ॥

दास्यस्मीति : १०.४२.३.

यस्या दास्यमहर्निशं विधि-शिव-स्वर्गाधिपाद्याः सुराः
कुर्वन्त्यद्भुतवैभवाप्तिमनसो दैत्याः सदैत्यार्जवम्।
साऽपि श्रीरलमार्जवं विदधती यस्याङ्घ्रिदासी सती
तस्यास्मिन् जगदीश ते त्रिभुवने कुब्जा न दासी कथम् ॥ १५ ॥
गात्रं विधातृकृतमेतदिति त्रिवक्रं
नामापि मे तदनुसारि भुवि प्रसिद्धम्।
चित्तं त्ववक्रमिह चक्रधरेत्यवेहि
प्रायोऽन्तरङ्गसरलाः सुदृशो भवन्ति ॥ १६ ॥

कौटिल्यमन्तरगतं न बहिः पुराऽऽसी-
दस्मिंस्तु वर्ष्मणि बहिष्कृतमेव नान्तः।
इत्थं द्विजन्मकलिताऽऽचरणावगत्यै
नामैव वक्रमिति साऽकथयत् किमीशम् ॥ १७ ॥

त्वद्रिपोर्नैव दास्यस्मि किन्तु वंशक्रमागता।
नातोऽवमानयेत्यूचे दासी भोजपतेरहम् ॥ १८ ॥

कृष्णातिवक्रगतयो भुवि गोपबाला
बाला अपीह समनुज्झित-वक्रभावाः।
संलालिताः शिरसि येन विहाय तं त्वां
वक्राऽहमन्यमिह कं जनमर्चयामि ॥ १९ ॥

युवामेवाङ्गरागानुलेपनार्हौ मतौ मम।
परस्तु दासी भावेनैवेत्यन्यतमतः स्फुटम् ॥ २० ॥

ततस्ताविति : १०.४२.५.

व्यक्तसत्त्वगुणश्रीको यदेशः स्याद्भवाध्वनि।
वीक्षणार्हः प्रसन्नास्यः शुभदृक् साध्विदं तदा ॥ २१ ॥

प्रसन्न इति : १०.४२.६.

सत्यङ्गरागाकलने परात्मा
करोति सङ्कल्पमिति श्रुतं तत्।
युक्तं ततस्तां सरलां विधातुं
सक्ताङ्गरागश्चकमे मुकुन्दः ॥ २२ ॥

नेशस्यास्ति निसर्गतः किमपि वा रागादिकं जीववत्
किन्तु स्वीयजनावनाय भवति स्वीयेच्छयेच्छाश्रितः।
एतत्स्पष्टमभूद्यदत्र पथि तद्भव्यप्रदस्तत्करात्
स्वीकुर्वन् रुचिराङ्गरागमकरोत् कर्तुं तथा तां मनः ॥ २३ ॥

तदङ्गरागभागपि प्रकाममीश्वरोऽप्यहं
न चेत्करोमि सुन्दरं त्वदङ्गमङ्गनोचितम्।
तदत्र शर्म लब्धये न कोऽपि रागमर्पये-
न्ममापि किं महत्त्वमित्ययं तथेहते स सः ॥ २४ ॥

सकलार्थदोऽपि हरिरेष यदैषीत्कुटिलाङ्गमेव सरलं प्रविधातुम्।
स्फुटमेव तेन समभूदिह भक्तलषितेष्टपूर्तिकरणं व्रतमैशम् ॥ २५ ॥

भवतिप्रधानपद शुद्धिरनर्घ्या
न विनाङ्गशुद्धिमिति बुद्धिमदीड्यः।
उचितं तदङ्गमृजुकर्तुमिहैषीत्
सकल - प्रधानपद - कामविशुद्ध्यै ॥ २६ ॥

पद्भ्यामाक्रम्येति : १०.४२.७.

पादसंपीडनं शूद्रधर्म इत्याकलय्य सः।
तदा तत्प्रपदे पद्भ्यां माधवः किमपीडयत् ॥ २७ ॥

ज्ञात्वा कामस्थितिं तस्याः प्रपदे तद्दिने प्रभुः।
तदुद्बोधाय विज्ञातानङ्गस्थिति - रमर्दयत् ॥ २८ ॥

वीरोऽस्मि वीरवन्द्योऽस्मि शूरवंशोद्भवोऽपि तत्।
योग्यश्चरणसंमर्दो मत्पदे तमिति व्यधात् ॥ २९ ॥

यदनया कृतमङ्गविलेपनं सकलभूमिसमर्पणमस्य मे।
फलतया प्रतिमूल्यमिवोचितं प्रभुरधादिति पादयुगार्पणम् ॥ ३० ॥

तस्याः पादद्वये स्वीयपादद्वयसमर्पणात्।
सम्पूर्णाङ्गीं भुवमिमां करोमीति विबोधितम् ॥ ३१ ॥

अधोगतेरर्दनमेव पद्भ्यामनुग्रहं चोर्ध्वगतेः करेण।
करोमि भूमाविति बोधयन्स द्वाभ्यां द्वयं तत्किमधात्सलीलम् ॥ ३२ ॥

नैतन्ममोपकृतितुल्यमतो ग्रहीष्ये
नेदं त्वृजूभवनमित्यनुचिन्त्य चेतः।
नैवं कुरुष्व कुटिलं त्विति सूचयन्किं
वक्रत्वभङ्गकृदसौ चिबुकं दधार ॥ ३३ ॥

कंसस्यैव तदम्बराणि रजकोढान्यङ्गरागोऽप्ययं
तुल्यौ तत्परिचारकावपि युवां तुल्योऽहमर्थी द्वयोः।

---

१. चरणः चेति च्छेदश्च। २. चरणद्वयं चतुर्थांशद्वयं च, एवमग्रेऽपि।

तत्रासीत् सुदुरुक्तिरत्रभवती सर्वाङ्गरागप्रदा
सारल्यं त्वयि सिद्धमेव चिबुकोद्धृत्या शशंसाच्युतः ॥ ३४ ॥

त्वद्रूपमोहितधिया हि मयाऽङ्गराग-
स्तुभ्यं ह्यदायि निखिलोऽपि तदेतदागः।
ज्ञात्वा करिष्यति नृपः किमु वेति भीतिं
नैवावहेत्यभयदश्चिबुकं दधौ किम् ॥ ३५ ॥

द्विषत्पुरगतां पुरा प्रियतमामवापं क्षणा-
दहं हनुमदाश्रयादिति किमु स्मरन् श्रीपतिः।
जिघृक्षुरचिराच्छ्रियं रिपुपुरस्थितामादधात्
तदा हनुमदाश्रयं तदधिकाननप्रेक्षकः ॥ ३६ ॥

वासः स्रगाभरणचन्दन-धारणेन
कीदृङ् नवीनमतिसौष्ठवमागतं मे।
द्रष्टुं तदास्यमुकुरे विमलेऽब्जशोभे
तन्मूलदण्डचिबुकं करतो दधौ किम् ॥ ३७ ॥

मुख्याङ्गसेवनमृते परमङ्ग जातं
स्वां वक्रतां त्यजति नेति विभाव्य नीतिम्।
कर्तुं तदङ्गमखिलं सरलं परात्मा
तन्मुख्यमङ्गमभजच्चिबुकं करेण ॥ ३८ ॥

यत्प्राक् चकार भवती वनवासदानं
मह्यं मयापि गणितं भृशमिष्टकृत्तत्।
प्राग्भुक्तवन्यवसतेर्न ममाऽधुना तु
देयं मुधेति सदयं चिबुकं दधार ॥ ३९ ॥

रसापहरणं पुरा कृतमनागसोऽस्य प्रभो-
र्मया कुटिलया फलं तदुपभुज्यतेऽस्य स्फुटम्।
विधाय सुरसार्पणं पुनरनामया स्यामिति
हृदि स्थितमवेदि ते चिबुकमेतदर्थं दधे ॥ ४० ॥

---

१. हनुर्विद्यते यस्य तन्मुखं मारुतिश्च। २. रावणः अधिकमिति च।

करास्बुजं येन पुराऽवलम्बितं
श्रियो गजेन्द्रस्य च सोऽयमुज्ज्वलः।
मुखाम्बुजं काङ्क्षति ते समुत्सुकः
करो मयेत्याशयतस्तथा दधे ॥ ४१ ॥

मह्यं प्राग् बलिना रसार्पणमिह प्राकारि जातः कर-
स्तेनार्द्रो न शरीरमत्र तु रसस्पर्शेन सार्द्रं वपुः।
तद्दातृत्वगुणा त्वमेवमहमप्यर्थी च सत्यस्तवै-
वेति द्व्यङ्गुलचिह्नितं विशदयन्नुत्तानपाणिं व्यधात् ॥ ४२ ॥

एकत्र कोटौ ता गोप्यस्त्वमेकाऽन्यत्र तत्समा।
सूचयन्निति तत्किं वा दध्रे द्व्यङ्गुलपाणिना ॥ ४३ ॥

सा तदर्ज्विति १०.४२.८.

मत्पादभाजां न सतामपीह
संदर्शनं भुव्यफलं क्वचित् स्यात्।
तत्स्वामिनो मे सकलर्धिभाजः
कथं तथा स्यादिति तत्तथाऽधात् ॥ ४४ ॥

पुत्रेण यत्कृतमसाधु तदस्ततन्द्रः
कुर्यात् पिता भुवि यथा भविताऽनवद्यम्।
युक्तं विरञ्चिरचितं कुटिलाङ्गमस्या-
श्चक्रे ऋजु स्वकरतः स हि पद्मनाभः ॥ ४५ ॥

यन्नामस्मृतिरप्यस्मिन्मनोवाग्वक्रताऽपहृत्।
किमत्र चित्रं तद्गात्रमवक्रं तत्करादभूत् ॥ ४६ ॥

मृदुभाषणाङ्गरागार्पणनिजकरतद्विलेपनत्रितयात् ।
तुष्टः श्रीशोऽप्यादात्तत्प्रतिनिधिवत्त्रिवक्रतापहृतिम् ॥ ४७ ॥

सदसदपि फलं वाऽऽभोत्यलं स्वस्वभावा-
ज्जगति ननु जनुष्मान्नात्र हेतुः परेशः।
स्फुटमिह रजको यद्वर्ष्मनाशं स्ववृत्त्या
समलभत तथा सा दिव्यदेहं तु कुब्जा ॥ ४८ ॥

ततो रूपेति १०.४२.९.

सर्वेश्वरार्पितमनोज्ञतराङ्गरागा-
दाकण्ठमाप्रपद - मुज्झितवक्रभावः।
यस्तस्य सिद्धमवनौ सुरतानुरागि
चेतस्ततः किमु विचित्रमभूत्तथाऽस्याः ॥ ४९ ॥

यत्पदाब्जेक्षणक्षुभ्यत्कामा भवति सा रमा।
स्पृष्टाखिलतदङ्गा सा सानङ्गेति किमद्भुतम् ॥ ५० ॥

यया ऽङ्गरागो निखिलोऽर्पितस्तदा
सानङ्गरागाकलिताऽभवत् क्षमम्।[1]
सर्वोऽपि तादृग् यदि तादृशो भव-
त्यर्थे तु भेदः किल वासनावशात् ॥ ५१ ॥

मदङ्गरागाखर्वश्री-स्त्वमप्यसि पटेशवत्।
तत्साहाय्यं कुरुष्वास्मिन् पर्वणीत्याचकर्ष तम् ॥ ५२ ॥

परस्परवशीकृतावधिकृतः प्रशस्तो जनः
सकामनिगमे भवेद्य इह भिन्नलिङ्गाश्रितः।
तदत्र भगवद्वशीकरणकामुका सा तदा
चकार घटकं प्रभो रुचितमुत्तरीयाम्बरम् ॥ ५३ ॥

स्वनेत्रपात्रं गात्रं मे कृत्वाऽपि किमुपेक्षसे।
इति साशयगं चक्रे तन्नेत्रं[2] तन्मिषादलम् ॥ ५४ ॥

एहि वीरेति १०.४२.१०.

प्रागङ्गरागमादायानङ्गरागा कृता यतः।
अङ्गान्निष्क्रम्य मे वक्रभावोऽनङ्गाश्रितोऽजनि ॥ ५५ ॥

ये त्वां भजन्ति भगवन्भुवनेऽङ्गरागै-
स्तेषामनङ्गरस[3] - मासुलभीकरोषि।
श्रौतो मया श्रुत इहैवमनन्तघोष-
स्तत्प्रार्थनीयमिदमार्थिकमेव सार्थम् ॥ ५६ ॥

---

१. कामरागः अङ्गरागाकलिता नेति च। २. वस्त्रं नेत्रं च। ३. कामरसं ब्रह्मरसं च।

शृङ्गारवीरयोर्वैरमज्ञात्वा यद्याचत ।
कामं काममतः स्पष्टं जातोन्मथितमानसा ॥ ५७ ॥

एवं स्त्रियेति १०.४२.११.

दिव्यानि वासांसि मनोभिरामाः स्रजोऽपि निर्यत्नमिहोपलब्धाः ।
तथाङ्गरागोऽप्यधुनेति दिष्टानुकूल्यमालोक्य जहास किं वा ॥५८॥

यद्द्वितीयं रसमुज्ज्वलं बला-
दियं ग्रहीतुं ह्यबलाऽपि काङ्क्षति ।
निजं वितीर्याऽऽश्वधरोचितं रसं
वीक्ष्येति तत्कौशलमाजहास किम् ॥ ५९ ॥

वक्रतापहृतिरत्र चक्रिणो दुष्करेति वयमत्र तादृशाः ।
वीक्ष्य चक्रिचरितं तथाविधं सेर्ष्यमीशमुखदृक् स चाऽभवत् ॥ ६० ॥

वक्रे गौरवमेवमेव सरले यल्लाघवं चेति सद्-
वृत्तोदीरितपद्धति - र्भगवता - ऽकार्यन्यथाऽस्यां कथम् ।
आश्चर्यादिति पश्यतो हि हलिनो निःसंशयायेयमु-
द्वृत्ताऽस्यां लघुता ह्यनङ्गवचसा स्पष्टाऽजनीतीक्ष्यताम् ॥ ६१ ॥

गोप्यः प्रसह्य भगवन् भवतोपभुक्ता
इत्युक्तिरात्तशपथं यदवारि मे वः ।
तत्पश्यतेयमिह मां वशयत्यहं वै
तामेव निर्णयविधेर्विशदः प्रसङ्गः ॥ ६२ ॥

इत्याशयं विशदयन् कृष्णो रामस्य पश्यतः ।
दृष्ट्वाऽऽस्यमनुगानां च हसंस्तामिदमुक्तवान् ॥ ६३ ॥
( विशेषकम् )

एष्यामीति : १०.४२.१२.

समधिककुञ्जानिगदितमवश्यमहमाचरामि सर्वमपि ।
इति कृतसन्धस्य ममाऽनयाऽलमधुनाङ्गने त्वदर्थनया ॥ ६४ ॥

---

१. सर्वस्य कृष्णस्य च । २. ककुभो जाया येषां ते दिक्पतयः, समधिकेति च्छेदश्च ।

मुदाऽङ्गरागं निखिलं गृहीत्वाऽप्यनङ्गरागी यदहं भवामि।
कृतघ्नताभास इह प्रसज्जेदित्यच्युतस्तां मधुवाचमूचे ॥ ६५ ॥
यदा मदङ्गरागिणी त्वमङ्गरागलेपनं
करेण चाकरोस्तदा मदङ्गसङ्गमोऽजनि।
स्फुटाऽधुना त्वनङ्गसङ्गतिस्तदर्थ्यते किमु
नवीनमेवमच्युतो विनोदवाचमूचिवान् ॥ ६६ ।
अवक्रभावाकलिताखिलाङ्गो यो यस्य मत्प्रीतिकृतेऽङ्गरागः।
यदा कदाप्यस्य तु सिद्ध एवानङ्गो रसः सत्सुरतोदयश्च ॥ ६७ ॥
अविद्येवेत्वरी संसृत्यध्वगानां परायणम्।
समाधेश्चार्जितार्थानां हारिणीत्यच्युताशयः ॥ ६८ ॥
विसृज्येति : १०.४२.१३.
दिदृक्षुर्धर्मसंस्थां यः सुराजपथवर्तनः।
इत्वर्यनादरो युक्तस्तस्येतीशेन बोधितम् ॥ ६९ ॥
पराङ्मुख्यमविद्याया माध्व्या संपाद्य विद्यया।
यो व्रजेत्पथि सोऽर्च्यः स्यात्सत्पथस्थैरिति स्फुटम् ॥ ७० ॥
तद्दर्शनेति : १०.४२.१४.
श्रीशेऽध्यक्षे युक्तमेव निस्तुलानन्दचेतसः।
चित्रं तु सुदृशस्तत्र नात्मानमविदन् स्त्रियः ॥ ७१ ॥
ततः पौराननिति : १०.४२.१५.
यत्कृतेऽहमिहाऽऽनीतः शत्रुणोपागतोऽप्यहम्।
तत्कार्यं कार्यमित्यार्यानपृच्छत्तद्धनुः स्थलम् ॥ ७२ ॥
धर्मस्थितिमविज्ञाय धर्मवार्तां ब्रुवन्त्यमी।
विज्ञाय चेति विज्ञातुमपृच्छत् तन्मिषात्स तान् ॥ ७३ ॥
सर्वत्र धर्मत्रैगुण्यं तारतम्येन वर्तते।
इति व्यक्तमभूदैन्द्रधनुस्तौल्योपपादनात् ॥ ७४ ॥

---

१. अङ्गरागशून्यः कामरागी च। २. जारिणी। ३. ध्यानस्य सम्यगाधेश्च। ४. द्रव्याणां पुमर्थानां च। ५. धनुः धर्मश्च। ६. देहमीश्वरं च। ७. धनुर्धर्मश्च।

करेण वामेनेति : १०.४२.१७.

दक्षिणकरेण धर्मं भक्तोत्थितमादरेण गृह्णामि ।
वामेन चासुराणामबोध्यदस्तत्करेण तद्दधता ॥ ७५ ॥

यद्द्रव्यमध्वरविधौ भवति प्रधानं
तच्चेद् विनष्टमुत यातमिहारिहस्ते ।
तत्तत्फलं निगदितं यजमाननाश-
स्तस्माद् बभञ्ज किमु तद्धनुरध्वरार्हम् ॥ ७६ ॥

गुणवानपि चेन्मार्गणविमुखस्तत्तद्गुणं समाकृष्य ।
भग्नोदरं करोमीत्याशयमीशो व्यदर्शयद्धनुषि ॥ ७७ ॥

कुब्जाऽङ्गरागगुणतः सरला बभूव
जातं धनुस्तु सरलं गुणतोऽतिवक्रम् ।
आद्यादवाप पदमैशमसौ तदन्त्या-
न्नाशं परस्य विनियोजनमत्र वीजम् ॥ ७८ ॥

येनाऽयमुज्झितनयो विगणय्य देवान्
सम्पीडयत्यनुदिनं भुवि भूमिदेवान् ।
तत्पुण्यमस्य निखिलं शकलीकरोमी-
त्याधात् प्रभुर्विशदयन्किमु धर्मभङ्गम् ॥ ७९ ॥

धनुर्भङ्गं विधायैव पुरा लब्धा मया प्रिया ।
श्रियमत्र स्थितां तद्वल्लभेयेति तथाऽकरोत् ॥ ८० ॥

जित्वा काममनार्यमुख्यम बलां कृत्वाऽप्यविद्यां वशां
योऽस्मिन् स्वैरमनुव्रजत्यनुपदं स्वाज्ञाननाशेच्छया ।
ज्ञात्वा दुष्कृतनाशवच्च सुकृतध्वंसोऽपि तत्साधकः
कार्यः शीघ्रमिति व्यबोधि धनुषो भङ्गेन कंसारिणा ॥ ८१ ॥

मद्राश्यष्टमगामि - दुर्ग्रहततिर्मामत्रगं घातये-
दित्यालोच्य धनुर्न्ययोजि बहुशः कंसेन यागच्छलात् ।

१. शीलादि मौर्वी च । २. याचको बाणश्च । ३. परमात्मनः । ४. श्रीकृष्णस्य वृषभराशिः ।

इत्याचिन्त्य तदाऽच्युतः सबलतां स्वां सर्वतो निर्भयः
कुर्वन् व्यक्तपदां श्रितैः सह धनुः किं तद्बभञ्जाऽञ्जसा ॥ ८२ ॥
अनेकपर्वघटितो रसगर्भोऽक्षतत्तिकृत् ।
धमोऽत्रेत्यभवत् स्पष्टमिक्षुदण्डोपमानतः ॥ ८३ ॥
कर[2]तस्तद्धनुर्भङ्गमकरोत् करिवद्धरिः[3] ।
चित्रमन्यत्ततोऽप्यासीन् मधु[4]रैकरसाश्रितः ॥ ८४ ॥

त्रासमुपागमदिति : १०.४२.१८.

यद्बलाद्बलवानासीद् भृशं कंसो नृशंसधीः ।
तद्धर्मभङ्गमाश्रुत्य त्रस्तोऽभूदिति नाद्भुतम् ॥ ८५ ॥

अथ तानिति : १०.४२.२०.

वक्रः स्वभावगुणतो भग्नोऽप्यपरापकारकार्यैव ।
भवतीति स्पष्टमभूद् भग्नेनान्यापकारिणा धनुषा ॥ ८६ ॥
तद्धनुःशकलेनैव ताञ्जघान दुराशयान् ।
तेन स्वात्मन्यलिप्तत्वं श्रौतमाविष्कृतं ध्रुवम् ॥ ८७ ॥

ध[5]र्मः कीदृगपीह वाऽस्तु तमहं ज्याँ[6]भोगयोगान्वितं
दाक्षिण्येन विधाय भँ[7]क्तिपदवीं नीत्वा च तद् द्वारतः ।
धर्मोऽस्मत्कलितोऽस्मदीय इति च व्यर्थाभिमानग्रहान्
दुर्वृत्तान्नु शिक्षयामि चरितादस्मादिदं ध्वन्यते ॥ ८८ ॥

बलं चेति : १०.४२.२१.

धर्मबलं सैन्यबलं भङ्क्त्वा कंसस्य मुख्यबलमपि च ।
विजितप्रायो रिपुरिति युक्तं सानन्दमास निजसुखदः ॥ ८९ ॥

धँ[8]र्मस्थानमिह श्रुतिश्रुतमसौ पृच्छन् दिदृक्षुः परान्
पौरान् भूरि च शोधयन् स्वयमपि प्रायो व्रजेदध्वनि ।
दृष्टे तत्र निरीक्ष्य धर्ममलघुं तद्वायपुंरक्षितं
लोकैश्वर्यद-मात्तलील - मनुसन्धायाथ तस्याऽऽदरम् ॥ ९० ॥

---

२. हस्तः शुण्डादण्डश्च । ३. कृष्णः सिंहश्च । ४. मथुराभूमिः मधुररसश्च ।
५. धर्मो धनुश्च । ६. पृथ्वी मौर्वी च । ७. अनुरागो भङ्गश्च । ८. धर्मो धनुश्च ।

दाक्षिण्येन विधाय तं दृढगुणोल्लासि द्विदेशं ततः
सर्वेषामनुपश्यतां फलभुजां नेयो विभक्तेः पदम् ।
धर्मोऽधर्म उभावपि प्रविलयं नीत्वा दिशैवं ततो
ह्यज्ञानं विगताश्रयं गतबलं जेयं स्वजिज्ञासुना ॥ ९१ ॥
धर्मोऽनेन हि खण्डितोऽस्मदतुलश्रेयस्कृदित्याशयात्
प्राप्ताश्चेन्निजभञ्जनाय सरुषस्तद्रक्षिणस्तर्हि तान् ।
जीयात्तत्र विभज्यमानसुकृतांशेनैव सर्वांस्ततः
सानन्दं पुरसंपदीक्षणपरः कुर्याद्विहारं विभीः ॥ ९२ ॥
एवं सत्कृत-दुष्कृतांशरहितः स्वच्छन्दमानन्दतः
क्रीडत्यह्नि च निश्यपि स्थितिमवाप्यानन्दमुख्यां सुधीः ।
मूलाज्ञाननिराकरिष्णुमनसः पुंसोऽवगत्यै निजात्
तत्तादृक् चरितादबोधयदिदं श्रीशास्तदीक्ष्यं बुधैः ॥ ९३ ॥
( कलापकम् )

तयोरिति : १०.४२.२३.

विना कर्म न तत्साक्ष्युपयोग इति साम्प्रतम् ।
तत्क्रीडनादुपरते श्रीशेऽर्कोऽस्तमुपेयिवान् ॥ ९४ ॥

गोप्य इति : १०.४२.२४.

आवश्यकाहितधियो निखिलं विनिन्यु-
र्गोप्यो दिनं ननु दिशा तु यया कयाऽपि ।
रात्रौ तु तत्कृतरतिस्मृतयो यदार्ता
आसंस्तदीयविरहोक्ति - रतान्तरङ्गाः ॥ ९५ ॥

अवनिक्ताङ्घ्रीति : १०.४२.२५.

दुर्जनस्पृष्ट - भूभागरजःस्पर्शोऽद्य मत्पदे ।
नार्ह इत्यच्युतः स्वाङ्घ्री क्षालयामास साधु तत् ॥ ९६ ॥
सुकृत-दुष्कृत निष्कृतिकृद्रजो ह्यनलसो निखिलं परिमार्जयन् ।
विमलसत्त्वभुगस्तमितश्रमः किमवशिष्टमितस्त्विति चिन्तयन् ॥ ९७ ॥

---

१. शीलादयः मौर्वी च । २. विशेषभक्तिः, विभागश्च ।

तिष्ठेत् सुखं निशायामप्येवमज्ञानजित् पुमान्।
तत्तादृगात्मचरितादिति श्रीशो व्यबोधयत् ॥ ९८ ॥
( युग्मम् )

कंसस्त्विति : १०.४२.२६.

श्रुत्वाऽऽचारमुखेन सेवकजनक्लेशं धनुर्भञ्जनं
स्वामात्यं मतिमन्तमन्तिकगतं कंसः स सातङ्कधीः।
प्रोवाचेयमुपस्थिता रिपुकृतिः प्रत्यक्षमेतत्कथं
किं वाग्रे च विधेयमित्यपगतालस्यं हि पश्याधुना ॥ ९९ ॥
मन्त्री मन्त्रविदां वरः सुमतिमान् सप्रश्रयः साञ्जलि-
भव्यज्ञोऽज्ञपतिं व्यजिज्ञपदनु प्रेक्ष्याऽनुतापोदयम्।
राजन्नेवमिदं तदत्र भवता स्वान्तर्द्विषद्रोधने
भाव्यं यत्नवता मया पुरमिदं संरक्ष्यते बाह्यतः ॥१००॥

दीर्घप्रजागर इति : १०.४२.२७.

अज्ञानप्रसरो रात्रावेव भूरितरो यतः।
तद्युक्तमज्ञकंसस्य विचारः स्वप्नदृक् च सा ॥ १०१ ॥
मूलाज्ञानमिहोज्झिताखिलबलं ह्यस्तोन्मुखं स्याद्यदा
पश्यत्यात्मनि कल्पितं बहुविधं प्राग्वासनावासितम्।
नश्यद्दीप इव द्युतिं च विपुलां संदर्शयत्यर्थतो
दुःस्वप्नेक्षणतोऽस्य मञ्चरचनोद्योगाच्च भातीदृशम् ॥ १०२ ॥

व्युष्टायां निशीति : १०.४२.३२.

यस्मिन्नह्नि स दुर्जनो व्यरचयन् मल्लप्रधानोत्सवं
दुःखध्वान्तहतिस्तदादि समभूत्तेजःप्रसारोऽपि च।
कारागार - विहारवारिजलधेरुन्मज्जनं च स्फुटं
शूराणामिति सूर्यतादृगुदयोल्लेखादिहोन्नीयते ॥ १०३ ॥
मल्लरङ्गोऽयमिति वागासीत् सर्वसभासदाम्।
हर्यनुग्राहकत्वेन साऽन्वर्था तु सतामभूत् ॥ १०४ ॥

१. चाणूरादयः मां लाति गृह्णति स कृष्णश्च।

चाणूर इति : १०.३२.३७.

अहङ्कारमग्रे विधायान्तरङ्गे
निजाज्ञानराजा - वनारब्धयत्नाः ।
द्विषन्तो भवन्तीत्यभूद् व्यक्तमेतद्
यदेते तथाऽऽसन् पुरस्कृत्य नागम् ॥ १०५ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि - कविवर - हरिसूरिविरचिते
भक्तिरसायने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## ॥ अथ त्रिचत्वारिंशोऽध्यायः ॥

अथ कृष्ण इति : १०.४३.१.

आनीय व्रजतोऽपि मामिह समाहूताखिलोऽसौ खलो
भूयो ह्यस्तनमस्मदीयचरितं श्रुत्वाऽद्य नाह्वास्यति।
सापेक्षं च मयि स्थिते न भविता प्राक्चिन्तितोऽर्थो मना-
गित्यालोच्य स दुन्दुभिध्वनिमनाहूतोऽपि रङ्गं ययौ ॥ १ ॥

अनाहूतोऽध्वरं गच्छेदिति वा स्वयमुत्सवम्।
द्रष्टुमभ्याययौ तत्र स्वेष्टदृष्टिरधोक्षजः ॥ २ ॥

त्यक्त्वा धर्मबलस्पृहां बहिरहङ्कारं च कृत्वा रिपू-
नभ्यास्थाप्य सुशब्दघोषरुचिरे भूर्यन्तरङ्गे सुधीः।
यः स्याज्ज्ञानशितासिकाशितशयो घोषैकलक्ष्यः स्थितः
पर्यङ्के भृश मुत्तमाङ्क इह स्वात्माऽपरोक्षोत्सुकः ॥ ३ ॥

तस्यावश्यतयाऽध्यक्षोऽस्म्यहं विशदयन्निति।
कंसं तादृशमालोच्य योगीशस्तादृशोऽभ्यगात् ॥ ४ ॥

( युग्मम् )

रङ्गद्वारमिति : १०.४३.२.

एकोऽहङ्कार एवाख्यो ह्यन्तरङ्गे द्विषज्जुषि।
द्वारपाल इति व्यक्तं तत्र तादृगिभेक्षणात् ॥ ५ ॥

बद्ध्वा परिकरमिति : १०.४३.३.

जितौ धर्माधर्मौ विषमविशिखश्चाद्भुतबला
तथा नेयाऽहंता दृढपरिकरेण क्षयपदम्।
इतीशो जिज्ञासूनलमुपदिशन्नेव करिणं
स हन्तुं सङ्कल्पं कृतपरिकरः किंस्विदकरोत् ॥ ६ ॥

१. उत्कृष्टः सवो यज्ञः, पक्षे स्पष्टम्।

देहात्मवादक - तमोभृदहङ्कृतीनां
पुंसां पराजयकृते भुवि साधुनं तु।
तद्बन्धनं दृढमिति प्रभुणाऽन्वबोधि
तन्मध्यबन्धनकृता परितः करेण ॥ ७ ॥

युद्धादन्यत्र करिणो वधः शूरविगर्हितः।
युक्तं शौरिस्तदर्थं स पुरः परिकरं व्यधात् ॥ ८ ॥

क्षोणीक्षोदविचक्षणोऽरिनिवहो नेयः क्षयं मङ्क्षिवति
साकाङ्क्षेक्षणमर्थितः सुरवरैर्ब्रह्मादिभिः प्रागहम्।
तत्तेष्वेष महत्तमः कुवलयापीडेति नाम्ना विद-
ञ्छौरिस्तद्धतये स किं परिकरं वद्ध्वाऽस्ततन्द्रोऽभवत् ॥ ९ ॥

निजत्राणप्रेम्णा कुटिलगति - शिक्षाव्रत - विधौ
मयेतः सम्बद्धो दृढपरिकरो भूमिवलये।
इतीव स्वं भावं विशदयितुमीशोऽतिकुशलः
शयेन स्वेनाधात् कुटिलगतिकेशावकलनम् ॥ १० ॥

मद्रूपधारणकृतां मम कुञ्ज[3]राणां
नैवास्तु सङ्गतिरिहाऽधमकुञ्जरेण।
इत्याशयेन किमु केशचयान् स्वकीया-
नेकीचकार करपुष्करतो रमेशः ॥ ११ ॥

आहुः संसृतिमञ्जुरङ्गभवनं भूयोऽन्तरङ्गं ततो
ऽहङ्कारः पुर एव पुष्करबलोत्कर्षोऽतितर्षभ्रमः।
तिष्ठत्युन्मदवारणेन्द्रवदसावल्पो निवार्योऽप्यलं
नेयः संक्षयमीदृगित्यनुकृतिं चक्रे स्वविक्रान्तितः ॥ १२ ॥

अम्बष्ठाम्बष्ठेति : १०.४३.४.

अहं कुवलयापीडोऽयं गजोऽपीति तुल्यताम्।
मानयन्नयविन् मान्यः साम्नोवाच किमच्युतः ॥ १३ ॥

---

१. कटिबन्धं सेवकं च। २. भूवलयपीडकः तन्नामगजश्च। ३. गजाः केशाश्च। ४. भूवलयशिरोभूषणं तन्नामा च।

सन्तं वाऽसन्तं वा न चोग्रवाचा वदेद्विना मन्तुम्।
इत्यच्युतः स सत्पथदर्शी पूर्वं तथाऽवदद्युक्तम् ॥ १४ ॥
प्रायेणाऽस्मिन्नहङ्कारः सर्वत्रास्ति तथाप्यलम्।
व्यक्तः सङ्करजाताविल्यम्बष्ठ-पदतः स्फुटम् ॥ १५ ॥
नृशंसो नित्यमातङ्गाकलितावस्थितिश्च यः।
तस्य दण्डस्तादृगेवेत्यूचे युक्तं तदा विभुः ॥ १६ ॥

एवं निर्भर्त्सित इति : १०.४३.५.

आसत्यलोक-पददायिनि वासुदेवे
साक्षात्सुमार्गमभियाचति धीरवाचा।
नादादपश्यदपि न स्वहितं तदस्य
बीजं स्फुटं यदतिमन्दगतेः प्रसङ्गः ॥ १७ ॥
हरिरसावहमस्मि करिश्रितस्तदिह मद्बलमस्य पुरः कियत्।
अनवलोकनमेतदहङ्कृतिस्थितिफलं कलिपुंस्यपि तत्स्फुटम् ॥ १८ ॥
नीचः स्वभावतस्तत्र मदाऽहङ्कार-सम्भृतः।
क्रोधान्धकारसंपृक्तोऽप्यकार्यं तस्य किं भवेत् ॥ १९ ॥

करीन्द्र इति : १०.४३.६.

अप्यल्पपुष्पमिह भक्तसमर्पितं चेन्
मौलौ वहामि बृहदप्यसताऽर्पितं चेत्।
दूरं क्षिपेयमिति बोधयितुं तदाप्तं
सत्पुष्करं तदिभमाक्षिपदच्युतः किम् ॥ २० ॥
कर्तृत्वेनाकर्षति येन हि भवपथग-नरमहङ्कारः।
यस्तद्गलितः सोऽमुं निहत्य बुद्धिस्थितिं याति ॥ २१ ॥

संक्रुद्ध इति : १०.४३.७.

यातो न केवलमिहाफलतां प्रयत्नः
किं त्वं ततोऽपकृतिकार्यपि भूरि तस्मात्।

१. सङ्करजातीयः तत्संज्ञकश्च। २. चाण्डालो गजश्च। ३. गजः मूर्खश्च। ४. कृष्णः सिंहश्च। ५. करी कलिश्च। ६. सत्पुष्करं शुण्डाग्रं यस्य तम्, सत्कमलरूपं च।

नैषत् तथाप्युपरतिस्त्वधिकाभ्यसूया
जातेत्यभूत् स्फुटमहङ्कृतिशालि चिह्नम् ॥ २२ ॥

स्वल्पदृष्टिरहङ्कारः परोक्षाङ्घ्रिस्थितं प्रभुम् ।
यतते गोचरीकर्तुं युक्तं पुष्करदर्शनः ॥ २३ ॥

पुच्छे प्रगृह्येति : १०.४३.८.

कृत्स्नतत्त्वैरनास्पृष्टं पुच्छं यत्तत्र मत्स्थितिः ।
श्रुतिगम्या घ्राणदृश्या नेत्याघाच्चरितात् स्फुटम् ॥ २४ ॥

चतुर्विंशतितत्त्वेभ्यो बहिरेनं [1]करोम्यहम् ।
अधुनैवेति कंसावगत्यै तादृक् चकर्ष तम् ॥ २५ ॥

अगोद्धरणशीलेन कृष्टो [2]नागः सलीलया ।
सुपर्णेनेव कृष्णेन युक्तेयमुपमा ततः ॥ २६ ॥

ततोऽभिमुखमिति : १०.४३.१०.

अहमक्ष[3]ररूपेणा - ऽहङ्काराभिमुखस्थितिम् ।
कृत्वा तत्क्षोभकर्ता स्यां तत्पृष्ठः स्यां यथा पदे ॥ २७ ॥

तुल्यमेवायुधं द्वन्द्वयुद्धे शस्तमिति प्रभुः ।
अताडयत्तमुन्मत्तं श्रीशो ह[4]स्तेन हस्तिनम् ॥ २८ ॥

स धावन्निति : १०.४३.११.

दर्शयित्वा स्वनिम्नत्वाभासं मङ्क्षु जिगीषुणा ।
जय्योऽरिरुत्थितेनेति नीतिदृक् स तथा व्यधात् ॥ २९ ॥

एतद् दुष्टपदाघातदुःखं मा गणय क्षमे ।
अलं त्वां सुखिनीं कुर्यामिति तत्कृतितोऽध्वनि ॥ ३० ॥

ज्ञात्राऽपि बालवच्चेष्टाजुषा तत्त्वपरीप्सया ।
वर्तितव्यं क्वचिन्मूर्खच्छन्देनापीति बोधितम् ॥ ३१ ॥

---

१. वेदः कर्णश्च । २. गजः सर्पश्च । ३. नाशरहितं वर्णात्मकं च । अहङ्कारपदे अहमिति रूपेण स्थितत्वात् । ४. शुण्डादण्डेन हस्तेन च ।

दन्ताभ्यां सोऽहनदिति :

द्विजैकसाध्यो भगवान् जानन्नित्यग्रगद्विजः।
तद्द्वारैव तमाप्तुं स व्यधाद् दन्तपुरस्कृतिम् ॥ ३२ ॥

तमापतन्तमिति १०.४३.१३.

कृष्णो भ्रान्तंकरं दृष्ट्वा मातङ्गकुलमण्डनम्।
सुदर्शनकरो युक्तं तमधोऽपातयद्गजम् ॥ ३३ ॥

येनानुग्रहमापितो गजवरः पाणिं तमेवाच्युतो
दुर्वृत्तोन्मदनागनिग्रहकृते सद्यः समायोजयन्।
आद्यं वान्त्यमुपैति जन्तुरिह यन्मत्पाणितः कारणं
तद्वृत्तिर्नहि जातिरित्यविकलं स्पष्टीचकाराशयः ॥३४॥

मधुलब्धप्रभावोऽसावस्म्यहं मधुसूदनः।
तदेतद्धतिरल्पैव ममेत्यासीदभीः पुरः ॥ ३५ ॥

पतितस्य पदाऽऽक्रम्येति : १०.४३.१४.

स्वापत्यद्वेषिणं हन्तुं तत्पिता निर्घृणो यथा।
नान्यस्तथेति भूहेतुं स्वाङ्घ्रिं तत्र न्ययोजयत् ॥ ३६ ॥

गजाऽहङ्कारनिर्मूलऽनाशनाया लमंकुशः ।
इत्यङ्कुशापदेनेभं युक्तमाक्रमदच्युतः ॥ ३७ ॥

अयं गजः परेशस्तु नृसिंहो भक्तभव्यदः।
तेन तद्धननं सिद्धमित्यवाचि मृगेन्द्रवत् ॥ ३८ ॥

अवतारमुख्यहेतुं स्मरन् विलोक्येभमुन्मदं पुरतः।
दन्तोत्पाटनमकरोद्युक्तं श्रीशः स दन्तवक्त्ररिपुः ॥ ३९ ॥

मयि कुवलयबन्धोरन्वये जाग्रतीशो
जगति कुवलयस्य क्लेशदः कोऽयमल्पः।
इति किमु जगदीशः सद्य एवातिरुष्टो
विशद-तदभिधानं तं गजं सञ्दधान ॥ ४० ॥

---

१. दन्तो ब्राह्मणश्च। २. भ्रान्तशुण्डं भ्रान्तिविशिष्टकरं च।
३. गजः, चाण्डालश्च। ४. चक्रं शोभनज्ञानं च। ५. गजेन्द्रः ६. दैत्यविशेषो मद्यं च। ७. गजः शिशुपालानुजश्च। ८. पृथ्वीवलयं कुवलयं च।

दुष्टमुख्याश्रयादेव कार्या दुष्टहतिर्जवात्।
नीतिमत्पुरुषेणेति दन्ततद्धननात् स्फुटम् ॥ ४१ ॥

हन्यात्तुण्डे कदाचित्क्वचिदपि पदगः क्वापि पुच्छापकर्षी
क्वाप्यारात्तं भ्रमन्तं द्रुततरगमनं क्वापि कुर्यात्कदाचित्।
स्याद्वा तद्दन्तभङ्गो भुवि झटिति तथा स्वात्मपातं विदध्यात्
क्वाप्युत्तिष्ठेत्प्रयत्नोन्मुखमथ समये तादृशोऽरिं निहन्यात् ॥ ४२ ॥

ईदृक्कृती कृती यस्तु स रिपुं जयति ध्रुवम्।
हस्तिध्वस्तिकृताऽबोधि श्रीशेन रणकौशलम् ॥ ४३ ॥
( युग्मम् )

पुच्छं कृत्वा करान्तर्लसदमलकवज्जीवतः कर्षणीयो-
ऽहङ्कारस्तत्त्वयुक्तो विपुलभवपथे भ्रान्तिकृत्पुष्करश्रीः।
तत्कर्तृत्वं निगृह्याथ च भुवि विदुषा लीनवृत्तिर्विधेयो
हेयश्चादाय तस्माद् गलदखिलमदान्मुख्यसत्त्वांशसारम् ॥ ४४ ॥

धृत्वा पुच्छमिभस्य प्रमदस्याकृष्टिमथ च मुक्तिमपि।
परिकुर्वताऽच्युतेन व्यबोधि तन्मुख्यदन्तभाजेदम् ॥ ४५ ॥
( युग्मम् )

द्विजद्वारैव कर्तव्यो मातङ्गसहवासिनाम्।
दण्ड इत्यच्युतो गोपैस्तेन[1] तद्धतिमादधे ॥ ४६ ॥

मद्धस्ताद्ध्वस्तिमापन्नस्याऽस्येभस्य सदन्तता[2]।
सिद्धैवेत्यच्युतो दन्तमेकमेव जहार सः ॥ ४७ ॥

कथंभूतोऽप्ययं नागो[3] नागराजस्त्वहं ततः।
ममैतद्धतिरश्लाघ्येत्येनं न हतवान् बलः ॥ ४८ ॥

शास्त्रसिद्धमदन्तत्वं[4] गजस्येति विदन्बलः।
तदुत्पाटनतश्चक्रे तादृशं तमिति क्षमम् ॥ ४९ ॥

---

१. भूपो गोपालश्च। २. सन् अन्तो यस्य तद्भावः, दन्तसहितता च।
३. सर्पः गजश्च। ४. दन्तशून्यत्वम्, अकारान्तत्वं च।

विलोक्य प्रभुणेभस्य दन्तमेकमुरीकृतम् ।
शेषांशोऽहमिति प्रीत्या स स्वयं जगृहे ततः ॥ ५० ॥
कनीयानयं ज्येष्ठ एवाहमेवं
प्रथा मे पृथिव्यां स नाथप्रसादः ।
जगत्स्वाम्ययं तत्त्वतस्तत्स्पशोऽह-
मिति व्यक्तयेऽसौ तदुच्छिष्टमादात् ॥ ५१ ॥
उभयोरवतारचारिताथ्र्यं भवतूच्चैः सदृगेव सम्प्रतीति ।
ध्वनितं प्रभुणैकदन्तधृत्या कलयन्नेव तमन्यमग्रहीत् सः ॥ ५२ ॥

असन्यस्तविषाण इति : १०.४३.१५.

भुवि निजजयबोधनाय वीरो वपुषि दधात्यरिवस्तु मुख्यमेवम् ।
विहितगजहतिस्तदीयमुख्यं प्रभुरकरोत्किमु दन्तमंसभागम् ॥ ५३ ॥

मल्लानामिति : १०.४३.१७.

यदा रजस्तमःसत्त्वालङ्कृतो भवति प्रभुः ।
युक्तमस्य तदा भानमेकस्याऽनेकरूपतः ॥ ५४ ॥
विभिन्नद्रष्टृदृग्भेदाद् भिन्नो भाति जगत्प्रभुः ।
न वस्तुतः स्पष्टमभूदेतद्रङ्गजनेक्षणात् ॥ ५५ ॥
श्रीरङ्गे मे वर्तते शोभमाना
श्रीरङ्गस्थाय्यस्मि सद्रङ्गशाली ।
तत्सद्वेषं रङ्गमेनं त्वपूर्वं
पश्याम्यारादित्यगात् तादृगीशः ॥ ५६ ॥

हतमिति : १०.४३.१८.

निजबलशिरोधिभूषणमपहृतमेतेन कुवलयापीडम् ।
दृष्ट्वाऽतिखिन्नचेताः कंसो युक्तं तदाऽऽसेति ॥ ५७ ॥
अहङ्कारो हि सर्वत्र पौरुषोत्कर्षकारणम् ।
तस्मिंल्लीनेऽर्थसिद्धैव निर्विण्णात्मतया स्थितिः ॥ ५८ ॥

---

१. शेषस्यांशः, शेषः अंशो यस्य च । २. पूर्वोक्तस्वेदासृङ्मदबिन्दूपलक्षितं रजआदिभिः । ३. पुरविशेषः । ४. रणभूमिः । ५. सन् वेषो रचना यस्य, द्वेषसहितं च ।

तौ रेजतुरिति : १०.४३.१९.

सामान्योऽपि नटो नानारूपो रङ्गसमाश्रयात् ।
किं पुनर्विश्वनाट्यश्रीः श्रीशो रङ्गरसाश्रितः ॥ ५९ ॥

कुर्वन् समग्रमनघः सदसत्प्रकारं
संदर्शयन्नभिनिवेशमपीह तत्र ।
प्राणीव सक्तहृदयो न भवत्यलिप्तः
श्रीमानिति स्फुटमभून्नटवद्विहारात् ॥ ६० ॥

निरीक्ष्य ताविति : १०.४३.२०.

न दिव्यदृष्टयोऽप्यापुर्यं दृष्ट्वा तृप्तिमच्युतम् ।
किं चित्रमत्र तद्वीक्षाविवशास्तेऽभवन्निति ॥ ६१ ॥

ऊचुरिति : १०.४३.२२.

कीर्तिर्दिव्यति गोपतेरविरता यद्यप्यघघ्नी तथा-
प्यस्मिंस्तत्स्मृतिकृद्भवत्यविकलं तन्मूर्तिसंदर्शनम् ।
जानन्तोऽपि जनाः पुरापि यद्रुपं दृष्टैव यत्प्रास्तुवं-
तस्मात्तत्प्रतिमावलोकनमहोरात्रं विधेयं बुधैः ॥ ६२ ॥

नियुद्धकुशलाविति : १०.४३.३२.

हतास्तृणवकादयोऽध्यवनि कौणपाः कर्यपि
सहस्रकरिसारभृत् सपदि येन तस्याग्रतः ।
कियन्मम बलं लघोरिति विवेकमूढोऽब्रवोत्
नियुद्धगिरमन्ततस्तदियमेव मोहात्मता ॥ ६३ ॥

तन्निशम्येति : १०.४३.३६.

करिष्यमाणारियुद्धसंत्यागस्य ममोचितम् ।
नियुद्धमात्मनोऽभीष्टमित्यमन्यत माधवः ॥ ६४ ॥

नाम्नाऽर्थतो मेऽच्युतरूपभाजः
कथञ्चनापि च्युतिसंभवो न ।
तथापि वाच्यं प्रकृतोपयोगी-
त्यालोच्य कृष्णः स तथा तमूचे ॥ ६५ ॥

प्रजा इति : १०.४३.३७.

नृपे नृपत्वं यस्मिन्स्यात् सर्वभूतमयो हि सः।
नृशंसेऽस्मिंस्तथा त्वं तु श्रोतव्यं देशतोऽधुना ॥ ६६ ॥

यतो भूतमयो राजा यतो यूयं च तत्प्रजाः।
अभूतपूर्वो युद्धोपक्रमोऽतः साधुगर्हितः ॥ ६७ ॥

यद्यपि स्मो वयं यूयं भूयो रङ्गो[1]पजीविनः।
तारतम्यं तथाप्यस्ति स्फुटं भिन्नपदाश्रयात् ॥ ६८ ॥

बाला वयमिति : १०.४३.३८.

पितामह-पितामहो निखिल-लोकपालाधिपो
बलाधिकबलोर्जितः प्रमददानवोन्मर्दकः।
सदास्मि यदपीह तत्प्रकटनस्य सम्प्रत्यलं
न चैष समयस्त्विति क्षममुवाच बालोऽस्म्यहम् ॥ ६९ ॥

लघुत्वस्वीकृतिः प्रायः परिणामसुखावहा।
विशेषात्त्वरिदेशे स्यादितीशस्तादृगब्रवीत् ॥ ७० ॥

यद्यत्र भविता युद्धमधर्मेण तदैव मे।
जय इत्यवदद् युक्तं मा धर्मः स्पृशतामिह ॥ ७१ ॥

तस्मादिति : १०.४३.४०.

नास्माज्जयो मम मनागपि नाशितेभा-
दित्याकलय्य नृपशासनदत्तचित्तः।
साकं मया कुरु नियुद्धमिति ह्यनुक्त्वा
प्रोवाच विक्रममयीत्युचितं वचस्तत् ॥ ७२ ॥

लब्ध्वाऽपि स्वंसुखस्थितिं[2] वितरणे यो बद्धमुष्टिर्भव-
त्यत्यन्तं कृपणः स एव गदितो लोभीच तस्योरगः।
सम्प्राप्तस्वसुखैकवृद्ध्यतिशयस्थायीति लोकप्रथा-
ऽन्वर्थासीन्ननु मुष्टिकासु रचिते युद्धे बलेनाश्रिते ॥ ७३ ॥

---

१. रङ्गेति, अरमिति च्छेदश्च। २. स्वस्य सुखस्थितिः, प० स्वं द्रव्यम्।

पायाद्वः स हरिः शताध्वरमुखप्रख्यात-लेखोत्करा-
जस्रोरीकृत-पादसेवनविधिः श्रीनायकः सन्नपि ।
भक्तक्लेशविमोचनोत्सुकमनाः स्थित्वाऽरिवेश्मन्यपि
कर्माण्यातनुते स्म रङ्गरसिक-स्तद्रङ्गदासाग्र्यवत् ॥ ७४ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥

एवमिति : १०.४४.१.

दुर्मार्गाचरण-प्रगल्भमतयो ये तेषु पापिष्वपि
वर्तिष्ये न निजेच्छया किमुत मत्प्राणप्रिये सज्जने ।
भक्ताधीनमना जनानिति निजान् सम्बोधयन्माधवः
तत्सङ्कल्पितकल्पमेवमुररीचक्रे च चक्रे तथा ॥ १ ॥

हस्ताभ्यामिति : १०.४४.२.

तथा तथा तौ निजकौशलं तदा
प्रदर्शयन्तौ रणरङ्गसीमनि ।
यथाऽतिखेदाकुलितं मनो भवेत्
खलस्य साधोश्च सुखानुभूतिमत् ॥ २ ॥

तद् बलाबलवदिति : १०.४४.६.

सर्वेशोऽयमनन्तशक्तिरपरामृष्टप्रभावः प्रभु-
र्लीलाविग्रहवानिति प्रतिपदं सङ्कीर्तयन्त्यो भृशम् ।
शृण्वन्त्योऽपि मुहुर्व्रजस्थितकृतिं विद्वन्मुखाद्यत्तदा
खेदं प्रापुरवेक्ष्य युद्धमबलास्तन्मोहपाशो दृढः ॥ ३ ॥

महानिति : १०.४४.७.

भूपं तत्र परे निनिन्दुरपरे रङ्गं च धिक्चक्रिरे
मल्लान् केऽपि च मेनिरेऽश्महृदयान्दुष्टं विधिं चोचिरे ।
इत्थं तत्र समग्रनागरजना रङ्गं गताः सङ्गरं
द्वन्द्वायोग्यमवेक्ष्य तत्रसुरलं श्रीशाच्युताशीर्गिरः ॥ ४ ॥

एवं प्रभाषमाणास्विति : १०.४४.१७.

मिथ्याभूतोऽपि नैवास्तु क्लेशो मत्प्रेमचेतसाम् ।
इति हन्तुं स चाणूरमैषीच्छ्रुततदुक्तगीः ॥ ५ ॥

रा वासुदेवमिति : १०.४४ २१.

मत्कृतक्लेशभागेष न स्याच्चेन्मा भवत्विह ।
पितरं तु करोमीति वासुदेवमताडयत् ॥ ६ ॥

कृष्णवक्षःस्थितां कंसासुरासुहरणे स्पृहाम् ।
भङ्क्तुमिच्छन् स चाणूरो वक्षस्येव जघान किम् ॥७॥

स्वामिसेवकभावो हि यद्वशाद्भुवि तां श्रियम् ।
हन्मीत्यच्युतहृद्देशमताडयत किं रुषा ॥ ८ ॥

बाह्वोर्निगृह्येति : १०.४४.२२.

यद्बलाद् बलवानेष दुष्टस्तन्निग्रहादिदम् ।
निहन्मीति क्रुधा कृष्णः परिजग्राह तद्भुजौ ॥ ९ ॥

योऽखिलभ्रान्तिकृन्मोहस्तस्यापि भ्रमदोऽस्म्यहम् ।
इति किं व्यञ्जयन्नीशोऽभ्रमयत्तं मुहुर्मुहुः ॥ १० ॥

भूपृष्ठ इति : १०.४४.२३.

कंसचारेष्वयं चारस्त्वन्तरेणूंचितः खलु ।
आलोच्येति तदा श्रीशो भूपृष्ठे समपोथयत् ॥ ११ ॥

तथैवेति : १०.४४.२४.

लोभस्वभावमसुरो निजमुष्टिबन्धाद्
व्यक्तीचकार किल मुष्टिक एवमेषः ।
स्वौदार्यभावमतुलं तलताडनेन
रामोऽपि युक्तमुभयोररिता हि नित्या ॥ १२ ॥

ततः कूटमिति : १०.४४.२६.

अलक्ष्य एवैष ममेति कूटं
जघान रामो निजवाममुष्ट्या ।
स्त्रीतोऽथवा तद्धननं व्यधायत्
स्फुटं सकूटावधमस्त्रियो हि ॥ १३ ॥

---

१. अन्ते रेणूचितः, अन्तरे मध्ये ण इत्यक्षरेण चितः सम्बद्धश्च ।

तर्ह्येवेति : १०.४४.२७.

शल एवमदः पदाहतः स तदा चूर्णशिरा परात्मना ।
स्फुटमेवमबोधि शौरिणा स्वपदद्वेषकृदेष एव हि ॥ १४ ॥

इयं श्रीरस्माकं न खल तव हे दुर्नयनिधे
ममेदं राज्यं श्रीरियमपि ममेत्याग्रहविधिः ।
मृषैवेति स्पष्टं तदवगतये तोशलमिषा-
त्कृतो द्वेधा मानः पदत इह पद्माधिपतिना ॥ १५ ॥

तोशलक - व्यपदेशे माने भृशमस्तभाव - मुपगमिते ।
तुल्याऽलघुलघुतोर्ध्वाधस्थितिरपि चेत्यभूत्स्फुटं चरितात् ॥१६॥

गोपानिति : १०.४४.२९.

इच्छेज्जेतुमनल्पगर्वकलितो यो मां स्वसङ्कल्पतः
स स्याद्दर्ह्यपदस्थितोऽधरगतिर्धूलिप्रकीर्णाननः ।
मत्सङ्कल्पत एव यश्च विहरत्याढ्यः स शक्त्या भव-
त्याद्ये मल्लमुदाजहार चरमे श्रीवल्लभो वल्लवान् ॥ १७ ॥

एवं षड्रिपुविजयः कार्यो ह्यज्ञानविजयकामेन ।
करिचाणूरमुखानां षण्णां हननादबोधि विभुनाऽत्र ॥ १८ ॥

एवं स कृष्णोऽरिजने पराक्रमं प्रदर्शयन् स्वैरविहारलालसः ।
चचार हर्यश्व इवेभसंहतो वृको यथा वाऽजकुले विनष्टभीः ॥ १९ ॥

कल्पितो योऽरिनाशाय नृपेण स्वं रिरक्षुणा ।
चित्रं विधिवशात् सोऽभूद्रङ्गोऽरिविजयप्रदः ॥ २० ॥

हृतेष्विति : १०.४४.३१.

नृपस्तदुग्रचेष्टिताशनिप्रहारविस्फुट-
न्निसर्गधैर्यपर्वतः स सर्वतोऽप्यनिर्वृतः ।
विचित्रचित्रचित्रिताकृतिर्विमूढमानसः
पदं तदा ह्यमंस्त तत्प्रलीनपञ्चचामरम् ॥ २१ ॥

प्रत्यक्षेऽपि जगन्नाथे सदानन्दसुखप्रदे ।
यदभूत् क्लेशभाक् कंसस्तदज्ञानविजृम्भितम् ॥ २२ ॥

---

१. मानः, मा नः इति पदद्वयं च ।

निःसारयतेति : १०.४४.३२.

बाहुवीर्यं हि वीराणामशक्तानां वचो वलम्।
युक्तमेवाबलः कंसो यद्वाग्जल्पं तदाऽकरोत् ॥ २३ ॥

एवमिति : १०.४४.३४.

क्वचिल्लघुत्वं क्व च वा गुरुत्वं यथा प्रसङ्गं सुधियाऽरिजेत्रा।
प्रदर्शनीयं त्विति युक्तमाधादीशो लघुत्वं पुरतो गुरुत्वम् ॥ २४ ॥
अन्यायवृत्त्यवनिपस्य गुरुत्वतोऽपि
सन्न्यायवृत्त्युपगता लघुतैव पूज्या।
आवेदयन्निति स शूरविभूतिरङ्गी-
चक्रे धरास्थितिमलं लघिमानमीशः ॥ २५ ॥
कथमस्य सहेय चाज्ञबुद्धेः पर[1]मञ्चोच्छ्रयमित्यधोक्षजोरम्।
किमु तत्परमं च संश्रितं स्वं ह्यकरोदेष निपातनाय शत्रोः ॥ २६ ॥

तमाविशन्तमिति : १०.४४.३५.

मण्डलानि करोत्युच्चैरच्युतोऽग्रे ममेति किम्।
ताद्रूप्याप्त्यै स कंसोऽपि मण्ड[2]लाग्रकरोऽभवत् ॥ २७ ॥
अहं कोश[3]विनिर्मुक्तः कृतः श्रीश तवारिणा।
तथा कुरु त्वमप्येनमित्यबोध्यसिना तदा ॥ २८ ॥

तं खड्गपाणिमिति : १०.४४.३६.

करोल्लसद्धीकरमण्डलाग्रं तन्मञ्चभू[4]रीकृतमण्डलाग्रम्।
निरीक्ष्य कृष्णोऽप्यरिमण्डलाग्रगण्यं विधातुं तमधस्थमैषीत् ॥ २९ ॥

प्रगृह्य केशेष्विति : १०.४४.३७.

प्रधानाङ्गजातापकृष्टिं विना न कचिद्धस्तगो जायते शत्रुरित्थम्।
विचिन्त्यैव चित्तेऽच्युतः किं तदानीं स्वचातुर्यतस्तत्कचानाचकर्ष ॥३०॥
ये भक्तिमन्तः सुस्निग्धा उत्तमाङ्गविभूतयः।
अनुगृह्णामि तान् हस्तेनेत्यबोधि कचग्रहात् ॥ ३१ ॥

---

१. परश्चासौ मञ्चः, परममिति चेति च्छेदश्च। २. मण्डलाग्रं खड्गः करे यस्य, तत्संपादकश्च। ३. खड्गपिधानं पञ्चकोशाश्च। ४. मञ्चभुवि उरीकृतं मण्डलाग्रं गतिविशेषो येन तम्।

मध्ये[1] मनोज्ञांश्च सदाशुकादीन्[2]
शान्तान्[3] समुज्जृम्भितमत्स्वरूपान्[4] ।
मूर्धाभिषिक्तान् स्वकरेण चानु-
गृह्णामि केशान्[5] दधतेत्यबोधि ॥ ३२ ॥
सत्युग्रसेने पृथिवीपतौ कथं
निर्लज्जमेभिर्मुकुटं समुद्धृतम् ।
कचान्निगृह्याशु तदाशयेन किं
ततः पृथक् श्रीपतिनाऽथवा कृतम् ॥ ३३ ॥
सजातीयान् रिपुगतानालम्ब्यैव जयेद्रिपुम् ।
तत्केशग्रहणात् कृष्णो युक्तं कंसमपातयत् ॥ ३४ ॥
शत्रुप्राणेषु पञ्चत्वं[6] सिद्धमेवेति चिन्तयन् ।
अताडयत् प्रभुः शत्रुमपातयदधःस्थले ॥ ३५ ॥
मन्मातुलोऽयमिति मे गुरुरेव साक्षात्
तत्सर्वलोक - गुरुरप्यहमस्य शिष्यः ।
जानन्निदं नयविदेष विभुः किमस्मिन्
स्वां सर्वलोकगुरुतां निदधे स्वभारात् ॥ ३६ ॥
यदाद्यपतने· हेतुर्गुरुत्वं तार्किकेरितम् ।
कंसे गर्वगुरौ विश्वगुरौ कृष्णेऽपि तत्क्षमम् ॥ ३७ ॥
अहो विचित्रं भुवि कंसहिंसनं
चकार लोकातिग-मच्युतस्तदा ।
वहिर्दृशोऽधःपतनं जगुर्जना
निरञ्जना ऊर्ध्वमिदं तु मेनिरे ॥ ३८ ॥

तं संपरेतं विचकर्षेति : १०.४४.३८.

स्वकर्मणाऽधो निलये निपातितं न कंसमेनं यदिहोद्धराम्यहम् ।
मदीक्षणस्पर्शनचिन्तनादिकं तदा मुधा स्यादिति तं चकर्ष सः ॥ ३९ ॥

---

१. मध्ये इकारमनोज्ञान्, पदद्वयं च । २. शकप्रभृतीन्, आशिवति च्छेदः, ककारादींश्च । ३. शकारान्ताः, शान्तियुक्ताश्च । ४. कृष्णवर्णः कृष्णस्वरूपं च । ५. ब्रह्मशिवौ केशाश्च । ६. पञ्चसंख्या मरणं च ।

प्रारब्धं लघु वा बृहद्भुवि विना भोगं न याति क्षयं
सिद्धान्तोऽस्ति तथापि मत्स्मृतिमतामत्यल्पकालाश्रितम् ।
स्याद्यस्मादवलोक्य तादृशमहं तत्कालमेवोद्धरा-
म्यद्धा तं करतस्त्विवति प्रभुरधात् कंसापकर्षात् स्फुटम् ॥ ४० ॥

यदर्थमवतारो मे यद्योगाच्च यशांस्यपि ।
प्रसृतानीति साध्वीशस्तत्कंसं[1]मनयत् क्षयं[2]म् ॥ ४१ ॥

तथेति : १०.४४.४१.

रामः शिष्टारिसेनाब्धिं जग्रसे वाडवाग्निवत् ।
समुपेत्य स्वयं कैश्चित्तत्र वा शलभायितम् ॥ ४२ ॥

मूलाज्ञाने लयमुपगते लीनवृत्तीनि तूला-
ज्ञानानिस्युः क्वचिदपि यदि प्रोद्गतानि प्रसह्य ।
सद्यो नेयान्युपशमगतिं योगदृष्ट्या तदेति
व्यक्तं कंसानुजहतिकृतो योगवेत्तुश्चरित्रात् ॥ ४३ ॥

नेदुर्दुन्दुभय इति : १०.४४.४२.

ततः स विजयी रमापतिरभूदनेकध्वनत्-
प्रचण्डरव-दुन्दुभिप्रमुख-वाद्यहृष्यन्मनाः ।
अनेकविधमागधोल्लसित - वर्तमानार्थक-
प्रशस्तगुणगौरवो लसदनन्तकीर्तिध्वजः ॥ ४४ ॥

शत्रुक्लेशभयोन्मुक्तं यत्प्रसादादभून्मनः ।
युक्तं ब्रह्मादिदेवानां तदेशे सुमनार्पणम् ॥ ४५ ॥

तेषां स्त्रिय इति : १०.४४.४३.

स्वभावो दुस्त्यजोऽन्तेऽपीत्येतच्छास्त्रमभूत् स्फुटम् ।
यत्कंसस्य तदाप्यासीच्छरीरं प्रम[3]दावृतम् ॥ ४६ ॥

---

१. स चासौ कंसस्तं तदिति, कमिति च्छेदश्च, कं सुखम्, । २. नाशं गृहं च । ३. प्रकृष्टमदः प्रमदाश्च ।

हा नाथेति : १०.४४.४५.

यस्मिन्ममत्वं यस्यासौ कीदृगप्यस्य सम्मतः।
भातीति युक्तं तद्योषास्तमूचुस्तादृशोक्तिभिः ॥ ४७ ॥

अनागसामिति : १०.४४.४७.

कंसो दुरध्वविनिविष्टमतिः स्वभावात्
प्राप स्वभावफलमेतदिति स्त्रियस्ताः।
प्रोचुः प्रभुः क्रतुभुजः सकलाश्च लोका
भिन्नाशयोदितधियोऽतनुसौख्यलक्ष्म्याः ॥ ४८ ॥

राजयोषित इति : १०.४४.४९.

कंसं नृशंसचरितं त्वरितं निहत्य
नेष्यत्यहो कथमिमं भृशमात्मलोकम्।
सन्देहमेनमपहर्तुमना जनानां
संन्देहमेनमचिराद्विदधे त्र्यधीशः ॥ ४९ ॥

मातरमिति : १०.४४.५०.

तत्त्वज्ञानेनापरोक्षे सिद्धे बन्धमयच्युतिः।
सिद्धैवेत्यभवत् स्पष्टं तादृक् पितृनिदर्शनात् ॥ ५० ॥

आकल्पमस्मिन् कविगीयमानं
कर्तुं यशः स प्रभुरिन्दिरायाः।
ऊरीचकाराऽऽखिललोकरीतिं
मन्येऽन्यथा नास्य किमप्यशक्यम् ॥ ५१ ॥

एतावद् भृशमास्त दुःखमिति न स्मर्तव्यमाभ्यामितो
भूमावेव सुखं विशेषत इह स्वर्लोकलोकेडितम्।
अस्मत्तः सुलभं भवेदधिभवं वां बोधयन्ताविति
पित्रोः पस्पृशतुः स्वरात्मशिरसा पादौ तदा तौ मुदा ॥ ५२ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि - कविवर - हरिसूरिविरचिते
भक्तिरसायने चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

१. स्वभावः स्वस्य भावः अभिप्रायः, जन्म चेष्टा चेति यथायथमूह्यम्।
२. सम्यग् देहो यस्य उत्तरोत्तरसंस्कारादिनेति भावः।

## ॥ अथ पञ्चचत्वारिंशोऽध्यायः ॥

पितराविति : १०.४५.१.

कार्यं भूरि विधेयमस्ति पुरतः सद्भव्यमव्याहतं
सौख्यं संसृतिजं च देयमनयोर्मज्जन्मतः क्लिश्यतोः।
तन्न स्याद् द्वयमप्यनामयमिहाभ्यां तत्त्वतो मय्यभि-
ज्ञाते जाविति दीनबन्धुरकरोत् सौख्याय तौ मोहितौ ॥ १ ॥

नास्मत्त इति : १०.४५.३.

आबाल्यादि-वयोविशेषरचित-क्रीडाभिरस्मिन् भवे
ये जाता नहि मोदयन्ति पितरौ धिग्जन्म तेषामिति।
वक्ताऽद्धा भगवंस्त्वमेव पितरौ मां चेत्तथार्थं भवा-
सक्तोऽसीति पुनर्ब्रवीषि तदहो नेयः क वाऽयं नयः॥ २ ॥

न लब्ध इति : १०.४५.४.

पितृप्रभृत्याप्तजनात् सुखाप्तौ
निदानमेकं शिशुदैवमेव।
स्वातन्त्र्ययोगान्नहि तत्प्रसक्ति-
रिति स्फुटं तादृगुवाच कृष्णः ॥ ३ ॥

सर्वार्थेति : १०.४५.५.

सर्वार्थप्रभवं शरीरमभवद्याभ्यां पितः पोषितं
पित्रोर्जातु शतायुषाऽपि न तयोर्निर्वेशकृत् स्यात्सुतः।
शास्त्रार्थं वितरं त्वमेवमवदोऽशक्तं च मां वेत्सि तत्
कां नामोपकृतिं करोमि किमु वा तात त्वमाकाङ्क्षसि ॥ ४ ॥

यस्तयोरिति : १०.४५.६.

नाल्पां कल्पतमोऽपि कल्पयति यो वृत्तिं स्वपित्रोरसौ
पुत्रो गर्ह्यतमो यथा निगदितस्तत्तुल्यविन्न्यायतः।
तादृक् चेज्जनिता तथैव भवितेत्यर्थोऽर्थतः सिद्ध्यती-
त्यालोच्येश निजोक्तिमात्मजमिमं संरक्ष कल्पोऽसि यत् ॥ ५ ॥

मातरमिति : १०.४५.७.

प्रपन्नप्राणभृत्त्राणं प्रोक्तमीश त्वयैव यत्।
तदालस्यं परित्यज्य प्रपन्नं पाहि मां प्रभो ॥ ६ ॥

तत्क्षन्तुमर्हथ इति : १०.४५.९.

जातो मंतुस्तं क्षमस्वेति विष्णो
मद्वाग्वर्णाकर्णने का स्पृहा ते।
पित्रोरग्रे प्रोक्तमेवं मयाऽपि
प्रागित्यन्तः संस्मरन् पालयेथाः ॥ ७ ॥

इति मायेति : १०.४५.१०.

साधारणात्मजसुभाषिततोषितात्मा
मोदं प्रयाति गलिताखिलदुःखजालः।
आनन्दकन्द - निजपुत्रपवित्रवाग्भि-
स्तौ तादृशाविति न विस्मयनीयमस्मिन् ॥ ८ ॥

एवमिति : १०.४५.१२.

यः पुण्यात्मजनिः प्रतिष्ठितपदं कुर्यात् स्ववंशद्वयं
स स्याद्धर्मगुणानुजन्यविजयश्रीरित्थमावेदयन्।
लोकेशं कृतवान् पितामहमिव श्रीशः स मातामह-
प्रेप्सुर्धर्मवृकोदरार्जुनसमुच्छ्रायं स भूयः श्रियम् ॥ ९ ॥

अस्मिन् पितामहमखर्वसुखं करोति
मातामहो निजमुखे च दधाति चैवम्।
जानन् पितामहमिवाऽखिललोकनाथो
मातामहं व्यधित तं किमु राजमानम् ॥ १० ॥

सत्सौख्यस्थितिमेवं बहुधा मातामहं करोमीति।
बोधयितुं प्रभुणा किं न्यधायि मातामहो राज्ये ॥ ११ ॥

---

१. पितेति महमिति च च्छेदः, मह उत्सवः । २. मातेति मह इति च च्छेदः, महस्तेजः । ३. बहुधेति बहुधामेति च च्छेदः, धाम तेजः ।

राज्यापहारधिषणा विनिधाय चित्ते
स्वाप्तं नृशंस इव कंसमसौ जघान।
इत्यल्पजल्पन - निराकरणाय चक्रे
तत्तातमेव नृपतिं स्वयमस्पृहः सन् ॥ १२ ॥

सदसद - लघुनाना - कार्यपर्याप्ति - भूमौ
धरणिपतिपदेऽसौ यन्न्यधादुग्रसेनम्।
उचितमिदमवैमो यत् सदैवानुकम्पी
सुजनविहितमन्तु - क्षान्तिशान्तान्तरङ्गः ॥ १३ ॥

पराजयो जरासन्धस्योग्रसेनाश्रयं विना।
स्यान्नेति किं तदा चक्रे तन्मिषात्तत्समाश्रयम् ॥ १४ ॥

त्रैलोक्याधिपतौ न मय्यभिनवा भूमात्रराज्येशता-
मत्तातश्च ययातिशापत इमेऽप्यर्हा न वा वृष्णयः।
नान्यः कश्चन तादृगस्ति निखिलान् यः पालयेन्न्यायत-
स्तस्मादेष तदर्ह इत्यनुविचिन्त्येशो व्यधात्तं नृपम् ॥ १५ ॥

ययातिशापेति : १०.४५.१३.

शापो वाऽनुग्रहो वाऽपि खद्योत इव यत्पुरः।
हरेः का शापभीस्तत्र बीजं वेलानुपालनम् ॥ १६ ॥

भक्तेष्टवस्तुवितरण - गृहीतदीक्षा - विभङ्गभीरुरयम्।
राज्यानधिकृतिशापो वर इति मनसा दयालुरनुमेने ॥ १७ ॥

मयि भृत्य इति : १०.४५.१४.

अव्याजभक्तिगुण - संग्रथितोऽस्मि येन
तत्सेवने मनसि मे नहि तारतम्यम्।
सम्बोधयन्निति जनान् भुवनाधिनाथो
भृत्योऽहमित्यवद - दच्छलमुग्रसेनम् ॥ १८ ॥

मातामहोत्सव - विलोकन - लोलदृष्टि-
र्लोकोऽखिलोऽप्यभवदेष मुदेत्यवेक्ष्य।

---

१. उग्रा चासौ सेना च, कंसपिता च।

युक्तं तदाऽऽस महसा रचितप्रमोदा
मातामहोत्सववती मथुराऽखिलाऽपि ॥ १९ ॥

सर्वानिति : १०.४५.१५.

विहितारिपराभवस्य पुंसः स्वजनाश्वासनमर्थतः प्रसक्तम् ।
यदि दीनजनावनोत्सुकाधीस्तदिहेशाच्छयशोभवेदसीमम् ॥ २० ॥

तत्र प्रवयस इति : १०.४५.१९.

यातं नैति पुनर्वयः कथमपीत्युक्तिर्हि तेषु प्रमा
भ्रान्तोन्मत्तधियो भवन्ति विमुखा ये सम्मुखेऽपि त्वयि ।
त्वद्वक्त्राब्जसुधारसानवरतास्वादास्तु ये स्युर्जरा-
दुःखं ते निखिलं विधूय तरुणाः स्युस्तत्र मानं जनः ॥ २१ ॥

अथ नन्दमिति : १०.४५.२०.

आसीदनर्हसमयो हि यदा तदाऽह-
मेतेन नैजसुतवद् बहुलालितस्तम् ।
त्यक्ष्याम्यहं यदि समग्रसुखेऽह्नि काऽन्या-
स्यात् तत्कृतघ्नपदवीति तमाजगाम ॥ २२ ॥

सदानन्दसमाश्लिष्टस्वरूपोऽहमिति प्रथाम् ।
यथार्थां विशदीकर्तुं स नन्दं परिषस्वजे ॥ २३ ॥

व्रजं व्रजाम्यद्य कथं विना त्वा-
मेवं विभाव्याशयमस्य कृष्णः ।
आलिङ्गनेनाखिलसौख्यभाजा
निजात्मतादात्म्यमकल्पयत् सः ॥ २४ ॥

सम्बन्धो हार्द एव व्रजमनुजपते चिन्तनीयस्त्वयेतो
नान्यः पित्रात्मजात्मेत्यखिलहृदयगो बोधयन् वासुदेवः ।
मन्ये तं वाऽऽलिलिङ्ग स्वहृदयविलसत्प्रेमपीयूषपात्रं
नैवं चेद्वन्दनार्हे कथमकृत परीरम्भणं मित्रयोग्यम् ॥ २५ ॥

स्वप्रेम तद्धृदयगं बहुवर्धमान-
माकृष्टमेव परिरम्भण - कैतवेन ।

मन्येऽन्यथा कथमहो विरहासहिष्णु-
गच्छेद् व्रजं विरहितः प्रभुणा स नन्दः ॥ २६ ॥

अहं परोक्षोऽपि बहिर्दृशा व्रजे
व्रजामि योगादपरोक्षतां सदा ।
व्रजेशमेवं प्रतिबोधयन् प्रभु-
र्बलेन सानन्दमिहालिलिङ्ग सः ॥ २७ ॥

पितरिति : १०.४५.२१.

यत्कार्यं नहि तत्कृतं कृतमथाकार्यं शिरस्युद्धृता-
नाज्ञा जातुचिदप्यहो न विहिता सेवाऽपि वां पादयोः ।
वक्तुं यन्न च शक्यते बहुविधं तत्तादृगाचेष्टित-
मित्यन्यायकृतोऽपि मेऽवनमकार्यस्मात् त्वमस्तपिता ॥ २८ ॥

कृष्णोत्तिष्ठ गभस्तिमानुपगतः कृष्णाद्य भुक्तं न वा
श्रान्तोऽसि त्वमरण्यसञ्चरणतः कृष्णाद्य मा गा वनम् ।
सुस्वापो भव कृष्ण कृष्ण भवतो मित्राणि चाकारय
भोक्तुं कृष्ण मयैव भुङ्क्ष्व च सह प्रेष्ठं च ते कृष्ण किम् ॥ २९ ॥

कृष्ण त्वज्जननीं वदाशु विहितः पाको न वा कृष्ण कि-
मन्तस्त्वज्जननी करोति कुरुते प्रीतिं न वा सा त्वयि ।
दुग्धं चेन्न तयार्पितं वद तया साकं न चेतः परं
सा च त्वां यदि ताडयेत् कथय मामेनामहं ताडये ॥ ३० ॥

नैको याहि निमज्जनाय कुरुषे किं साहसानीदृशान्
यद्यायाहि मयैव साकमवनौ मा कृष्ण लोडीर्हठात् ।
त्वद्भाग्यादनुकूलमस्ति सकलं मुष्णासि कृष्णान्यतः
कस्मात् कृष्ण रमस्व वेश्मनि निजे मा ताडयान्यार्भकान् ॥ ३१ ॥

सन्त्यज्योत्तमभूषणानि किमिमां गुञ्जास्रजं धारय-
स्युष्णीषे मुकुटे च सत्यपि रुचिः केयं नु बर्होद्धृतौ ।
अङ्गं लेपय चन्दनैः सघुसृणैर्मा धातुरागादिभि-
र्मैवं कृष्ण कुरुष्व पश्य शिशवोऽप्येते कथं वा स्थिताः ॥ ३२ ॥

मा तिष्ठाऽऽतपतापितेऽवनितले मा धाव गोपृष्ठतो
मासऽरूढो भव चोन्नतावनिरुहे मा भञ्जय क्षुत्तृषौ।
मा भुङ्क्ष्वाऽऽमफलानि कृष्ण विपिने मा निर्झराम्भः पिब
मा स्वापं कुरु वामलूरनिकटे शृण्वेकमस्मद्वचः॥ ३३॥

चक्षुस्त्वं मम सर्वलोकपदवीसन्दर्शकं कृष्ण हे
त्वय्येवाखिल कार्यतन्त्र-विमुखं संसक्तमेतन्मनः।
सर्वस्वं त्वमिहास्मदभ्युदितसद्भाग्यस्य कृष्णान्वह-
मस्मद्वाचि धृतव्रतो भव भवेत् सौख्यं तवाप्यावयोः॥ ३४॥

कृष्णं रक्षत वाञ्छितं ददत भो गोपाश्च हे गोपिका
दत्वा दृष्टिमहर्निशं मयि हरेर्मन्तुर्न चिन्त्यः क्वचित्।
इत्येवं प्रतिवासरं प्रतिपलं मां तात संरक्षत-
स्त्वत्तोऽन्यस्तु पिता पितैव सुतरस्तातस्त्वमेकोऽवनौ॥ ३५॥

जननीति शुद्धचरितां जननीं मम लास्यमृष्टवदनाममलाम्।
बहुधार्मिकीं प्रतिनतिं बहुधा कथयाऽनया सह मुहुः कथया॥ ३६॥

मयाऽनुभूतं भवतोः सुखं यत्तद्वक्तुमीशो न फणाभृदीशः।
गायन्ति चैतद्भुवि ये तदीयश्रेयःसुखोत्कीर्तनकुण्ठशक्तिः॥ ३७॥

किं वा बहूक्तिभिस्तात व्यापारेष्वखिलेष्वपि।
नैकः क्षणोऽप्यतिक्रान्तो मन्नामग्रहणं विना॥ ३८॥

हे गोपाः पाकभावं स्मरत मम सदा मूर्तिमत्पुण्यपाकं
नाकेशं केशवं वा यजत भजत मे तातमेनं भजध्वम्।
सन्तुष्टस्तेन चाहं प्रतिपलमिह वः क्लेशनाशं विधाय
प्राग्वत्साान्निध्यलाभं सुलभमनुविधास्याम्यभीष्टप्रदानात्॥ ३९॥

कदाचिदपशब्दितं क्वचिदनादृतं शासनं
क्वचित्प्रलपितं भवेत् क्वचिदनर्पितं प्रार्थितम्।
सहध्वमितरैरसह्यमपि साहसं मत्कृतं
भवत्सु मम मित्रता मयि तथाऽस्त्विति प्रार्थये॥ ४०॥

स्वकीयः परकीयो वा भवद्भिर्गण्यतामयम् ।
जगत्स्वखिलसत्कीर्तिमूर्तीर्वः कलये त्वहम् ॥ ४१ ॥

ह्रतं यशोदा[1] नवनीतमर्वाग्
यो वासवानन्द[2] - समृद्धिकारी ।
यो गोकुलप्राणभृदीड्यमानो
वृन्दावनेनोरीकृत[3] - सत्क्रियो यः ॥ ४२ ॥

अयं स एवेति जना अभीक्ष्णं
यन्मामवेक्ष्यात्र वदन्ति सर्वे ।
तद्वः स्मृतिर्मेऽर्थत एव सिद्धा
मत्संस्मृतिर्वो - ऽस्विदमर्थयेऽहम् ॥ ४३ ॥
( युग्मम् )

अलं बहूतया भोगोपाः सारमेकं वदामि वः ।
नैकः क्षणोऽपि तादृक् स्याद्यत्र युष्मत्स्मृतिर्न मे ॥ ४४ ॥

ये वृक्षा गिरयश्च ये शुक - पिकानेकाण्डजाश्चापि वा
यद्वृन्दावनमुष्णरश्मितनयातीरं च यच्चापरम् ।
सर्वांस्तत्किल युष्मदस्मदतनुक्रीडारसज्ञान् मुहुः
पृष्टं वः कुशलं निवेदयत यैरात्माऽस्मदर्थीकृतः ॥ ४५ ॥

निश्चित्यानन्यजातोदयमिममिह मामात्मसर्वस्वभावैः
संलाल्याहर्निशं वै स्वतनुपरिभवो याभिरासह्यते स्म ।
स्वीया एवेति मत्वा स्वतनुसमुचितैर्या विहारैर्मयाऽपि
ह्रत्प्रेम्णा त्रासितास्तत्तदुपकृतमहं किं किमन्तः स्मरामि ॥ ४६ ॥

वाच्यं किं कथनीयमत्र किमु वा स्मर्तव्यमर्वाग्भवं
सन्देष्टव्यमभीष्टशब्दनिचयैः किं वेत्यहं मुग्धधीः ।
तत्त्वं त्वेकमिह ब्रवीम्यवितथं गोपा मदेकात्मनां
सर्वेषां भवतां च गोकुलजुषामृण्यस्मि सर्वांशतः ॥ ४७ ॥

---

१. यशोदेति यश इति च च्छेदः । २. वासवेति, वेति च च्छेदः ।
३. समूहावनं वृन्दावनं च ।

यात यूयमिति : १०.४५.२३.

रामं तत्रोद्दिश्य किं वा प्रभासमेष्यामो वो द्रष्टुमित्यब्रवीत् सः ।
नो चेद्ब्रूयस्तत्र तद्यानलेखाभावान्मोघोक्तिः कथं सत्यवक्तुः ॥४८॥

विधाय सुहृदां सुखं विरहभूरिदुःखान् व्रजा-
धिपेक्षितुमलं हि वो व्रजमुपागमिष्याम्यहम् ।
सहेतुकमिदं वचः प्रभुरुवाच तन्नानृतं
यदस्त्यखिलसत् - सुहृत्सुखदवासना - ऽद्यावधि ॥ ४९ ॥

एवं सान्त्वय्येति : १०.४५.२४.

द्रव्यैः क्षुद्रजनप्रलोभनचणै - र्नानाविधै - र्भूषणै-
रालोभ्यास्तसुहृत्तमानपि करोषि स्वं परोक्षस्थितिम् ।
धौर्त्यं भूर्यविदंस्तवेदमृजुधीर्नन्दः स सम्मोहित-
स्त्वां प्रत्यक्षमपास्य माधव वयं तद्वन्न मुह्याम भोः ॥ ५० ॥

इत्युक्त इति : १०.४५.२५.

वासुदेवस्त्वयमिति गर्गोऽवादीत्तदैव हि ।
मया परं न मूढेन तदर्थो ज्ञात इत्यहो ॥ ५१ ॥

तद्वशोऽस्मि सदा प्रेम यस्य मय्यस्त्यकृत्रिमम् ।
इति श्रीशोक्तिदृक् चक्रे तद्वादं तन्मिषाद् दृढम् ॥ ५२ ॥

अनुदिनमुपनीतः[1] प्रेमतो यैर्व्रजस्थै-
रहमिह बहु तेभ्योऽदायि सौख्यं मयाऽपि ।
उपनयनमिदं यल्लौकिकं नास्ति तस्मा-
दधिकमिति किमस्मात् प्राहिणोत्तं पुरेशः ॥ ५३ ॥

लोकौ गोकुल-माथुरावनिगतावेकैकजन्मार्जित-
क्रीडाजातविलोकनैकविलसत्पुण्याविमौ स्तो मम ।
इत्यालोच्य जनुर्जिघृक्षुरपरं संस्कारतः श्रीधरो-
मन्ये स्वोपनयात्पुरा व्रजजनं तं तादृशं प्राहिणोत् ॥ ५४ ॥

---

१. समीपं नीतः ।

नैवं चेदचिरान्महोत्सवसमारम्भे प्रसक्तेऽप्यसौ
नन्दं स्वाप्ततमं सहैव निखिलैर्गोपैः कथं प्राहिणोत् ।
यल्लोकेषु जनैः परस्परमनुप्राप्तं समीक्ष्योत्सवं
मित्रं स्वाप्तमविद्यमानमपि तत्प्रेम्णा समाहूयते ॥५५॥
(युग्मम्)

यैः साक्षादनघैरलक्ष्ययमहो हंसस्वरूपः सतां
तेषामाप्तसुखात्मनां तदधरेणान्यस्वरूपेण किम् ।
कर्तव्यं किमु वाऽवशिष्टमिति वा संचिन्त्य चिरोऽच्युतो
मौञ्जीबन्धनतः पुरैव स जनं तादृग्दृशं प्राहिणोत् ॥५६॥

अथ शूरसुत इति : १०.४५.२६.

येनाकारि मुदानन्दघोषोपनयनं हरेः ।
पुरोहितं पुरस्कृत्य युक्तं भूयस्तथा व्यधात् ॥ ५७ ॥

प्राग्वैरिरुद्धनिखिलव्यवहारजात-
स्यासीन्न मे सुखमलं तदवाप्तमद्य ।
इत्याप्तमुत्सपदि नन्दसमर्हणांशं
विस्मृत्य युक्तमभवत्स सुतोत्सवोत्कः ॥ ५८ ॥

तेभ्योऽदादिति १०.४५.२७.

वक्तारः सन्त्यनन्ताः श्रुतिशतकलितब्रह्मविद्याविभूते-
र्ज्ञाता त्वेकोऽपि तुच्छीकृतविषयधनो दुर्लभोऽस्यां भुवीति ।
सत्यं यद्ब्राह्मणास्ते सदय सपदि ते वेदविद्यामयस्या-
प्याराद् ब्रह्मोपदेशप्रणिहितमतयः प्राभवन् वित्तलुब्धाः ॥ ५९ ॥

याः कृष्णरामजन्मर्क्ष इति : १०.४५.२८.

रामस्य यस्यां जनुरास तद्भे मनोज्ञतज्जन्मकृताश्रये वा ।
ऋक्षं स सङ्कल्पितगौरितीदं वाच्यं यतो रामजनुष्यदत्तगौः ॥ ६० ॥

---

१. नन्दघोषं प्रति उपनयनम्, आनन्देति च्छेदश्च । २. उपाध्यायः, पुर इति च्छेदश्च । ३. रोहिणीनक्षत्रे ।

सति संप्राप्ते समये भव्ये विधितो बुधेन नालस्यम् ।
कार्यं चित्तगवितरणकृताविति स्पष्टमजनि तद्दानात् ॥ ६१ ॥

यः सङ्कल्पितभागो दानं तस्येति मुख्यविधिपक्षः ।
व्यक्तोऽभवद्यदस्मिंस्ता एवादात् स गा अनुस्मृत्य ॥ ६२ ॥

मुक्तबन्धेन पुंसाऽत्र दृष्टेशेनापि पूर्णताम् ।
नेयः सङ्कल्प इत्यर्थस्तत्तद्गोदानतः स्फुटः ॥ ६३ ॥

अथो गुरुकुल इति : १०.४५.३१.

यद्यप्यात्मैव गुरुस्तथापि शरणं विधेय एव गुरुः ।
सज्जन - सच्चरित - पथप्रवर्तकेन व्यबोधि विभुनेदम् ॥ ६४ ॥

सर्वविदाऽपि प्रभुणा निगमागमकारिणाऽप्यहो हरिणा ।
गुरुगृहगमनाद् ध्वनितं गुरूपसत्तेः सदैव नैयत्यम् ॥ ६५ ॥

विद्यावाप्तिरभीष्टदा भुवि गुरोः शुश्रूषयैवेरिता
सा निर्व्याजमखण्डिता हि घटतेऽन्यत्रैव न स्वाश्रमे ।
इत्यन्याननुबोधयन् प्रभुरगादन्यत्र मन्ये न चेद्-
गर्गोऽपि प्रथितः कृतो निजकुलाचार्यो न कस्माद् गुरुः ॥ ६६ ॥

यत्सर्वतोऽप्यवन्तीं तां विद्यामिव पुरीं प्रभुः ।
अगमद्युक्तमेवेदं स्वावतारैक - लक्ष्यधीः ॥ ६७ ॥

यथोपसाद्येति : १०.४५.३२.

यथा शुश्रूषया तुष्टाद् गुरोर्विद्याऽऽगमस्तथा ।
नान्येनेति विदञ्छ्रीशोऽप्येनामाधादनन्यधीः ॥ ६८ ॥

देववत् पूजयित्वैनं सर्वविद्यार्थशोभिना ।
तस्यैते कथिता ह्यर्थाः श्रुत्यर्थोऽयं स्फुटीकृतः ॥ ६९ ॥

ज्ञानिनाऽपि गुरोर्विद्याग्रहणादिति बोधितम् ।
पत्रपुष्पफलाकाङ्क्षी श्रीमानप्यस्मि भक्तितः ॥ ७० ॥

१. रक्षणकर्त्रीं तत्संज्ञकां च ।

सर्वमिति : १०.४५.३५.

यावान्विद्याकलानां प्रसर इह मयाऽकारि यादृग् जनेऽस्मि
न्निर्व्याजस्तादृगेव व्यजनि किमुत स स्वैरवृत्त्याऽन्यथैव ।
इत्थं ज्ञातुं रमेशः श्रुतिनिगम - कला - सर्वतन्त्रस्वतन्त्रः
प्राश्रौषीत्तन्मुखाब्जान्नहि यदि कृतवांल्लोकतुल्यं न कस्मात् ॥ ७१ ॥

अहोरात्रैरिति : १०.४५.३६.

न रात्रिं न दिनं चापि न च सौख्यं न चासुखम् ।
विद्याभ्यासरतः पश्येदिति स्पष्टं तथा कृतात् ॥ ७२ ॥
अदक्षिणो[1] गुरुर्यस्य स सर्वत्राप्यदक्षिणः[2] ।
भवतीति विभाव्यैच्छत् कर्तुं तं स्वं सदक्षिणम्[3] ॥ ७३ ॥
गुरोरानृण्यमायाति न पुमान् दक्षिणां विना ।
व्यजिज्ञपत् कृतज्ञोऽसौ विधिमेवं विबोधयन् ॥ ७४ ॥

द्विजस्तयोरिति : १०.४५.३७.

बुद्धिमानपि विद्वानप्यात्मकार्यं विविक्तधीः ।
कुर्याद्धितज्ञं पृष्ट्वैव पत्नीमन्त्रादिति स्फुटम् ॥ ७५ ॥
वंशवृद्धिर्यथैवेष्टा तथा नान्यत्प्रियं जने ।
व्यक्तमेतदयाचद्यत् प्रभुमात्मसुतं गुरुः ॥ ७६ ॥
यद्यथोल्लासिनि श्रीशे प्रसादाभिमुखे सति ।
पुन्नामनरकात्त्राणं प्रार्थितं युक्तमेव तत् ॥ ७७ ॥

तथेतीति : १०.४५.३८.

आत्मजातोदयकरी[4] विद्याऽनेन प्रदर्शिता ।
तत्परीक्षाप्रसङ्गोऽयं युक्त इत्याददे वचः ॥ ७८ ॥
योगेनैव विधेयं तच्छोधनं द्रुतमित्यजः ।
सरामोऽगादन्यथा तु नैकस्याशक्यमण्वपि ॥ ७९ ॥
यदि स्थास्याम्यहं तूष्णीभूतः प्राग्वत्तदेष माम् ।
बध्नीयादिति किं भीतो वार्धिरर्हणमाहरत् ॥ ८० ॥

---

१. दक्षिणाशून्यः । २. वक्रः । ३. तं गुरुम् सदक्षिणम्, पक्षे स इति च्छेदः, स्वं दक्षिणम् । ४. आत्मनि विषये जातः पुत्रश्च ।

मत्सुताकरपरिग्रहयोग्यः सम्प्रति प्रभुरसावजनीति ।
अब्धिरेनमुपनीतमवेक्ष्य श्रीशमहर्णमधात् क्षममेतत् ॥ ८१ ॥

आस्ते तेनाहृत इति : १०.४५.४१.

नैवास्मिन्नधुना सुतः प्रभुगुरोरित्यब्धिना जानता-
प्यास्ते तेन हृतः स चेति वितथं ह्युक्त्वा स नीतो लयम् ।
तस्माच्चेत् परमार्थदाय्यनृतमप्युक्तं न दोषावहं
शास्त्रार्थोऽयमभूत् स्फुटस्त्वितरथा नैवोभयोरज्ञता ॥ ८२ ॥
नानादिग्भ्रमकृज्जडान्तरगतो दुर्दानवः स्वाश्रितो
गुर्वर्थापहरोऽयमित्युपशमं नीतः स दैत्यारिणा ।
तादृक् चेद्चिरेण तत्फलमपीदृक् तस्य लभ्यं भवे-
दित्यावेदयितुं तथा स विदधे सन्मार्गसंदर्शकः ॥ ८३ ॥
स्वभावदुष्टोऽयमिहास्ति दानवः
कृतापराधस्तु न मेंऽशतोऽप्यसौ ।
ध्रुवं विभाव्यैवमजो जघान तं
छलादविद्याऽस्य कुतोऽन्यथा प्रभोः ॥ ८४ ॥
यद्यस्ति नियतं स्वार्थलाभस्तर्हि विवेकिनः ।
तावज्जडान्तर्वासोऽपि न दोषायेति बोधितम् ॥ ८५ ॥

तदङ्गप्रभवमिति : १०.४५.४२.

मया निरागा हत एष दैत्यः कृतार्थमेनं तदहं करिष्ये ।
विबोधयन्नेवमधोक्षजस्तद् - देरापहारादद्रं व्यधात्तम् ॥ ८६ ॥

गत्वेति : १०.४५.४३.

यः स्याद्गर्वपराधो तद्गतिमहमीदृशीं करोमीति ।
ध्वनयन्नध्वनि शङ्खं ध्वनयन्नध्वगदयालुरवतु हरिः ॥ ८७ ॥

तयोरिति : १०.४५.४४.

शङ्खस्वनेन ते श्रीश कृतान्तोऽपि प्रकम्पितः ।
आर्चयत्त्वयि पर्यामा भीषाऽस्मादिति तच्छ्रुतिः ॥ ८८ ॥

---

१. भयं शङ्खश्च । २. गुरोरपराधी गुरुश्चासौ अपराधश्च तद्वांश्च ।

त्वत्पादाब्जजुषो जनानपि मनाक् स्प्रष्टुं प्रभो वीक्षितुं
शक्तो नाहमहो कुतः पुनरिमं त्वत्पूज्यपादात्मजम् ।
भृत्योन्मत्ततयाऽथवा त्वदुररीकारात् पुराऽभूदिदं
क्षन्तव्यं यदितो न जातुचिदपि स्यादीदृशं श्रीपते ॥ ८९ ॥

मन्नामप्रेमभाजो मदपचितिकृतो मत्पदन्यस्तचित्ता
मत्सङ्कल्पा मदर्था मदभिहितगिरो मद्वपुर्भूषणा ये ।
तान्मत्सर्वस्वभूतान् क्वचिदपि न दृशा वक्रया पश्य भृत्या-
नप्याख्याहि त्वमेवं यम मम कथितः क्रोधशान्तेरुपायः ॥ ९० ॥

ध्यानं हि यस्य हृदये वदने समाख्या
कर्णे यशः श्रवणमक्ष्णि तव स्वरूपम् ।
तान्नैव जात्वपि दृशेश विलोकयामी-
त्यत्राच्युताङ्घ्रिशपथस्तव मे प्रमाणम् ॥ ९१ ॥

तथेतीति : १०.४५.४६.

गतं यत्तत्पुनर्नैतीत्युक्तिरन्यत्र न त्वयि ।
यतो गुरुसुतो यातोऽऽप्यानीय गुरवेऽर्पितः ॥ ९२ ॥

दाक्षिण्यमालक्ष्य विलक्षणं तयो-
र्विचक्षणः सोऽपि तथाऽऽचकाङ्क्ष ।
युक्तं प्रभुश्चापि ददौ परीक्षां
दाक्षिण्य - पुत्रार्पण - दक्षिणायाम् ॥ ९३ ॥

निजशरणागतसत्कृतिरकारि गुरुणाऽर्पणेन विद्यानाम् ।
शरणागतः स हरिरपि सत्कृतिमकृतात्मजार्पणाच्चित्रम् ॥ ९४ ॥

स्वयं स भगवान् प्रभुः शमनसद्म गत्वा गुरोः
सुतं भुवमुपानयत्तदिदमस्य वीजं ध्रुवम् ।
न भक्तभवनं व्रजत्वद्य एष मच्छासना-
दितः क्वचिदिहान्यथा भृशमशक्यमीशस्य किम् ॥ ९५ ॥

कृतनिजापचितिं विनयान्वितं यदुपतिं समवेक्ष्य पुरः स्थितम् ।
गुरुरसौ परिपूर्णमनोरथो वरगिरं यदुवाच तदोचितम् ॥ ९६ ॥

गच्छतमिति : १०.४५.४८.

प्राधीताः शतशोऽभवन् यदुपते शिष्या भविष्यन्ति च
नैतादृक् त्रिजगत्स्वपि त्रिसमयेष्वश्रावि कृत्यं क्वचित्।
तत्सिद्धं भुवि निष्कलङ्कमतुलं भास्वद्यशस्ते मुहु-
र्मद्वंशर्धिकृतश्च वंशविततिः सिद्धैव लोकोत्तरा ॥ ९७ ॥

शौर्यं किं किमु धैर्यमुत्तमगुणा दानादयोऽन्येऽपि वा
सर्वेषामिह मन्महे त्रिभुवने सीमापदं वैभवात्।
तत्त्वं धन्यमना निसर्गत इहैवासीति कोऽन्यो वरो
देयः सन्तु त एव मद्वचनतः श्रीशर्धिभाजोऽनिशम् ॥ ९८ ॥

उद्यत्क[1]ल्पकविश्रुतं श्रुतिसुखं सन्तान[2]वृद्धयन्वितं
मन्दा[3]रातिविजृम्भितं सुजलजानन्ताप्सरःसेवितम्।
राजच्छ्री[4]हरिचन्दनं च सुरतोल्लासावहं मद्गिरा
भूयान्नन्दनवद् गृहं तव चिरायाऽ[5]पारिजातं परम् ॥ ९९ ॥

सौधाभिख्यं सुधर्मोल्लसितमविरतं नन्दनोल्लासितमध्यं
गुर्वध्यक्षेशकार्यं बुधजनलसितं हारि वाचामराढ्यम्।
नाना-नेत्राभिरामाखिल-विभवपदं लेखकालोचितश्रि-
श्रीकृष्णानन्तधाम्ना भवतु तव गृहं स्वर्गसौभाग्यशालि ॥ १०० ॥

कीर्तिर्जगज्जन-विशुद्धिकृदप्यपङ्का
श्रीकृष्णशोभितपदाऽप्यमलोज्ज्वलश्रीः।
क्षीराब्धिमिन्दुमिभराजमहीशमीशं
श्रीशारदामपि सदा विमलीकरोतु ॥ १०१ ॥

अस्थापि लीलया येन त्वय्याऽस्मिन् यातयामता।
अयातयामता वेदे सिद्धा तस्य तवाच्युत ॥ १०२ ॥

---

१. कल्पवृक्षाः उद्यत्कल्पाश्च ते कवयश्च। २. वंशो वृक्षश्च। ३. मन्दं अरातिविजृम्भितं यस्मिन् मन्दारश्च। ४. हरिरेव चन्दनः वृक्षश्च। ५. पारिजातशून्यम्, अपगतारिजातं च। ६. सुधासम्बन्धिनी राजगृहं च। ७. इन्द्रः नेत्राणि च। ८. पुत्रे। ९. याताः यमसम्बन्धिनः क्लेशाः, दोषविशेषश्च।

इत्थं निजस्तुतिमतिं समवेक्ष्य कृष्ण-
स्तं सुप्रसन्नवदनं नतिनम्रमौलिः ।
प्रत्याह साञ्जलिरनुद्धतया च वाचा
मन्दाक्षमोदभरनोदितयाऽऽद्यपूज्यम् ॥ १०३ ॥

श्रीदैशिकन्द्र - सकलागम - तत्त्वविद्वन्
ज्ञाताखिल - त्रिसमयार्थ - परार्थदृष्टे ।
संसारिताप - विगमैक - दयासुधाब्द-
स्तुत्याऽनयाऽलमहमानतिमातनोमि ॥ १०४ ॥

कुत्रेदं वर्णनं नाम कुत्रायं छात्रकुक्षिगः ।
यद्वा प्रयोजिकाऽस्त्येका स्वकीयत्वाभिमालिता ॥ १०५ ॥

अनलीकमलीकं वा भवत्वन्यदिदं ध्रुवम् ।
धन्यो धन्यतरश्चाद्य सत्यं त्वत्पदसेवनात् ॥ १०६ ॥

यद्यप्यलीकमखिलं तथापि नाली[1]कवसतिदायिगुरो ।
भविता भवन्मुखोदितमतो गृहीतं वरं वचः सवरम् ॥ १०७ ॥

स्वयं स्वीकृतसच्छिष्यभावेन विशदीकृतम् ।
गुरुणाऽखिललोकानां प्रभुणा गुरुगौरवम् ॥ १०८ ॥

याते ह्यज्ञानराजे लयमुपशमिते सर्वदुर्वैरिसङ्घे
सिद्धोऽसौ ब्रह्मचारी भवति स च ततोऽप्युग्रसेनानुवृत्तिः ।
पश्चाद्योगेन युक्तोऽखिलमपि भुवनं शोधयन् ब्रह्मनिष्ठो
जीवन्मुक्तैकदृक् स्यात्तदनु भुवि महामृत्युजित् सन्कृतार्थः ॥ १०९ ॥

योगेन युक्तो भुवनैकशोध-प्राप्तासुराहत्युदितातिनादम् ।
सदाशयस्थं विनिधाय जीवन्मुक्तेक्षणः कालजयं विदध्यात् ॥ ११० ॥

ततः कृतार्थमात्मानं पश्यन् ब्रह्मपुरस्थितः ।
लब्धाभीष्टाखिलवरो वसेदत्र यथासुखम् ॥ १११ ॥

( विशेषकम् )

---

१. सत्यवसतिः कमलवसतिः श्रीश्च ।

निरुक्ताध्यायचरितादैशादाशय ईदृशः।
भाति तज्ज्ञैः समालोच्यस्तत्तदर्थो ह वैभवात् ॥ ११२ ॥

समनन्दन्निति : १०.४५.५०.

गुरूपसत्तेः सकलाढ्यविद्यानिष्णातचित्तस्य च योगभाजः।
स्थितेः फलं व्यक्तमिदं यदत्रोत्सवेक्षणं वृत्तिषु सर्वतोऽपि ॥ ११३ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥

वृष्णीनां प्रवर इति : १०.४६.१.

मदपरोक्षसुखानुभवो यथा भवति गोकुलकेलिजुषां तथा।
सदुपदेशकृदेष कृतज्ञधीरिति स वाक्पतिशिष्यमुपाह्वयत् ॥ १ ॥

सुराजपदरक्षको नृपतिधर्म - विद्याधुरं-
धरो गुरुकृपोल्लसत्सफलसर्वमन्त्रः प्रभुः।
स्वतुल्यगुणमुद्धवं समवलोक्य सख्यं व्यधा-
दिति क्षममिदं भवे प्रथितमेव तुल्यात्मनोः ॥ २ ॥

तातवत् पूज्यपादं तं कथं गर्ह्ये न्ययोजयत्।
नैवं शक्यमिति प्रोक्तं मैत्र्यमिष्टार्थसाधकम् ॥ ३ ॥

तमाहेति : १०.४६.२.

गुरूपसत्ति न विनाऽधिकारस्तत्त्वोपदेशे त्विति वासुदेवः।
उपादिशद्गीष्पतिशिष्यमेवं तद्वारतः कर्तुमनुग्रहं सः ॥ ४ ॥

किं वा वाचिकमस्ति ते यदुपते स्नेहश्च तासां त्वयि
कीदृग्वा तव तास्वपीत्यरमसावुच्चैर्न पृच्छत्विति।
पूर्णानङ्गरहस्य - मेतदपराश्राव्यं च हृन्मध्यगं
तत्पाणिग्रहणच्छलात्तदुभयं व्यक्तीचकाराऽच्युतः ॥ ५ ॥

त्वदुपकारमिमं नहि विस्मराम्यहमिहोद्धव जातुचिदप्यहो।
ऋतमवैतु ममैतदिति प्रभुर्झटिति दिव्यमधात्किमु तन्मिषात् ॥ ६ ॥

सर्वेषां भववार्द्धिमग्नमनसामुद्धारकस्यापि मे
सम्प्रत्युद्धव गोपिकोपकृतिवाराशौ त्वमेवाश्रयः।
इत्थं स्वीयमहाशयं तदधिकारुण्यं सुलेखोज्ज्वलं
श्रीनाथः समुदा तदाशयगतं चक्रे स्फुटं तन्मिषात् ॥ ७ ॥

---

१. आशयो हस्तश्च। २. अधिकमारुण्यं अधिकं कारुण्यं च। ३. देवाः रेखाश्च। ४. तस्य आशयः तदेति च्छेदश्च।

गच्छोद्धवेति : १०.४६.३.

तौ स्तः काममकामिनौ विधूतमद्रूपान्तरङ्गौ सदा
नन्देनास्मि यशोदया विलसितोऽहं नित्यमित्याशयात्।
पित्रोः प्रीतिमिहावहोद्धव वियोगाधिं तु सन्देशतो
गोपीनां समपाहरेत्यकथयत् प्रायेण भक्तप्रियः ॥ ८ ॥

ता मन्मनस्का इति : १०.४६.४.

मदनारतवृत्तयः[1] स्त्रियस्ता नितरामुद्धव सन्ति सम्प्रतीति।
भविताऽचिरतस्तवोपदेशः सफलस्तास्विति मे विनिश्चयोऽलम् ॥ ९ ॥

गोपा एव जनेषु यत्प्रथमतो मूर्खत्वसीमाभुव-
स्तत्रैतास्तु तदङ्गना इति कथं तासूपदेशक्रमः।
शङ्कापङ्किलमेवमस्य न मनो भूयादितीशः स तत्-
तत्कालस्थितिमब्रवीन्निजजनत्राणव्रतं चात्मनः ॥ १० ॥

त्वं मद्विभूतिरसि तास्तु मदेकरूपाः
सन्त्युद्धवेति भविता च तवापि भव्यम्।
तत्र प्रयाणत इति स्फुटमिन्दिरेशः
प्रोत्साहनं द्रुतमदात् स तदीयवृत्तात् ॥ ११ ॥

मत्पालनं भृशमनेन विधेयमेवं
चित्ते तवास्ति यदि तत्कुरु निर्विशङ्कम्।
मत्कार्यमेतदधुना यदिह प्रमाणं
ता एव मत्कृतमहासुखदाभ्युपायाः ॥ १२ ॥

आधिं तदीयं व्यपनेतुमस्मि-
न्न कोऽपि शक्तस्तदहं कथं स्याम्।
नैषास्तु चिन्ताऽस्य हृदीति सौम्य
सम्बोध्य सन्देशमदात् स्वमीशः ॥ १३ ॥

इत्युक्त इति : १०.४६.७.

यस्याग्रे हि सकृत्कृतः सुरकृते हस्तप्रसारोऽमुना
तस्याप्येष बलेर्बभूव भगवान् वश्यो यथा तत्स्पशः।

---

१. मयि अनारता मदने आरताश्च।

आसां त्वात्मकृते पुरः प्रतिदिनं प्रासारि गव्याशया
हस्तस्तत्प्रहिणोति मामुचितमित्यद्धोद्धवोऽन्वग्रहीत् ॥ १४ ॥

सन्देशं भृशमच्युतो न कथयत्येनं पुनस्तन्मिषात्
सन्देशं ननु दर्शयत्यखिलभूत्तं सन्तमित्युद्धवः ।
तद्वक्त्रेरिततत्स्थितिस्तुतिपदैर्निर्णीतपूर्णो मुदा
तूर्णं तज्जगृहेऽनुशासनमनायासोपलब्धेष्टदृग् ॥ १५ ॥

चक्र[1]यन्तरङ्ग - व्रजवासिलोक - चेतोवशीकारकृते मयाऽपि ।
चक्र[2]यन्तरङ्गेण हि भाव्यमेवेत्यगान्मुदाऽऽरुह्य रथं सघोषम् ॥ १६ ॥

मत्सङ्गात्प्रतिघस्रमुत्सवजुषामासां न तोषोदय-
स्तादृक् स्याद्विरहोपशान्तिरथवा मत्तुल्यसङ्गं विना ।
इत्यन्तर्निहिताशयो निजजनानन्दप्रदः प्राहिणोत्
सत्स्वन्येष्वपि वृष्णिषूद्धवमसौ श्रीशो विभूत्यात्मकम् ॥ १७ ॥

अन्योपदेशयोग्यत्वं नैवामन्त्रविदोऽस्ति यत् ।
तन्मन्त्रिमुख्यं स्वसखं प्राहिणोद्युक्तमच्युतः ॥ १८ ॥

यद्वेदप्रतिपाद्यमाद्यमनिदं वेद्यस्वरूपं हि यत्
तद्वास्यास्त्यनघस्य वस्तु पुरतः सन्दर्शनीयं मया ।
आलोच्यैवमधोक्षजः प्रहितवानद्धा तमेव व्रजे
मन्ये गोकुलसद्वशीकरणतस्तत्राधिकाराय सः ॥ १९ ॥

मन्मात्रसक्तमतयो भुवि ये भवेयु-
स्तेषां दिशास्यनिशमुत्सवमिन्द्रियेभ्यः ।
सम्बोधयन्निति दयानिधिरेष घोषं
तं प्राहिणोत् प्रथित - तत्पदवाच्यमीशः ॥ २० ॥

एष्यामीति यदीरितं तदधुना सत्यं विधेयं मये-
त्यालोच्यात्मविभूतिमुद्धवमसौ किं तत्र तं प्राहिणोत् ।
आयास्ये इति दौत्यकैरिति गिरं चक्रे यथार्थां प्रभु-
र्यद्वोवाच स वाचिकं तदधिक - प्रेमर्ध्यभिव्यक्तये ॥ २१ ॥

---

१. कृष्णः । २ रथः ।

प्राप्तो नन्दव्रजमिति : १०.४६.८.

श्रीशपदाम्बुजविमुखो गोकुलसन्तोषजननधृतयत्नः ।
युक्तं तस्य हि सूर्यालोकन-तद्गुणकणांश-दौर्लभ्यम् ॥ २२ ॥

साहङ्कारमलं सलीलमथवा यो गोकुलाविर्भवद्-
वृत्त्यानन्दविलोकनोत्सुकमनाः स्यात्तस्य पुंसः स्फुटम् ।
पराङ्मुख्यमिहैशमध्वरचिताऽनेकागमप्रेक्षणं
तद्गोजन्यरजः - समावृतिरथा - ऽसूर्यश्रयाशोदयः ॥ २३ ॥

कर्मप्रचारो विधिमार्गदृष्टो धर्मप्रकारोऽपि सकाम एव ।
भूयो भवत्यत्र स गोकुलाभिनिविष्ट एवास निदर्शनं यत् ॥ २४ ॥
( युग्मम् )

सर्वत इति : १०.४६.१३.

यत्र सदानन्दस्थितिरतनुसुखा सा यशोदयोल्लसिता ।
युक्तं तद्गोकुलमिह विशेषसुषमं ह्यशेषविषयेषु ॥ २५ ॥

तमागतमिति : १०.४६.१४.

सामान्येऽप्यतिथौ याते वासुदेवधियाऽर्चनम् ।
तस्योक्तमच्युतप्रीतिरयं त्विति च तत्क्षमम् ॥ २६ ॥

भोजितमिति : १०.४६.१५.

यो गोकुलविषयगतस्तस्य तदानन्द - सत्कृतिर्युक्ता ।
अन्नाच्छादनसुखमपि युक्तं युक्तश्च वाग्विहारोऽपि ॥ २७ ॥

कच्चिदङ्गेति : १०.४६.१६.

प्राग्भुक्तासह्यदुःखो यस्ततो लब्धसुखः सुहृत् ।
सुखप्रश्ने स एवार्ह इत्यपृच्छत् स तच्छिवम् ॥ २८ ॥

दिष्ट्या कंस इति : १०.४६.१७.

दुष्टः स्वदोषेण विनाशमेति साधुः सुखं धर्मधियैव भुङ्क्ते ।
न तत्र हेतुर्भगवाननन्तः शत्रौ च मित्रे च यतः स तुल्यः ॥ २९ ॥

अपि स्मरतीति : १०.४६.१८.

---

१. इन्द्रियकुलं गोकुलं च । २. सूरिः सूर्यश्च । ३. अध्वरेति अध्वेति च च्छेदः ।

आसां त्वात्मकृते पुरः प्रतिदिनं प्रासारि गव्याशया
हस्तस्तत्प्रहिणोति मामुचितमित्यद्धोद्धवोऽन्वग्रहीत् ॥ १४ ॥

सन्देशं भृशमच्युतो न कथयत्येनं पुनस्तन्मिषात्
सन्देशं ननु दर्शयत्यखिलभूत्तं सन्तमित्युद्धवः ।
तद्वक्त्रेरिततत्स्थितिस्तुतिपदैर्निर्णीतपूर्णो मुदा
तूर्णं तज्जगृहेऽनुशासनमनायासोपलब्धेष्टदृग् ॥ १५ ॥

चक्रयन्तरङ्ग - व्रजवासिलोक - चेतोवशीकारकृते मयाऽपि ।
चक्रयन्तरङ्गेण हि भाव्यमेवेत्यगान्मुदाऽऽरुह्य रथं सघोषम् ॥ १६ ॥

मत्सङ्गात्प्रतिघस्रमुत्सवजुषामासां न तोषोदय-
स्तादृक् स्याद्विरहोपशान्तिरथवा मत्तुल्यसङ्गं विना ।
इत्यन्तर्निहिताशयो निजजनानन्दप्रदः प्राहिणोत्
सत्स्वन्येष्वपि वृष्णिषूद्धवमसौ श्रीशो विभूत्यात्मकम् ॥ १७ ॥

अन्योपदेशयोग्यत्वं नैवामन्त्रविदोऽस्ति यत् ।
तन्मन्त्रिमुख्यं स्वसखं प्राहिणोद्युक्तमच्युतः ॥ १८ ॥

यद्वेदप्रतिपाद्यमाद्यमनिदं वेद्यस्वरूपं हि यत्
तद्वास्यास्त्यनघस्य वस्तु पुरतः सन्दर्शनीयं मया ।
आलोच्यैवमधोक्षजः प्रहितवानद्धा तमेव व्रजे
मन्ये गोकुलसदृशीकरणतस्तत्राधिकाराय सः ॥ १९ ॥

मन्मात्रसक्तमतयो भुवि ये भवेयु-
स्तेषां दिशाम्यनिशमुत्सवमिन्द्रियेभ्यः ।
सम्बोधयन्निति दयानिधिरेष घोषं
तं प्राहिणोत् प्रथित - तत्पदवाच्यमीशः ॥ २० ॥

एष्यामीति यदीरितं तदधुना सत्यं विधेयं मये-
त्यालोच्यात्मविभूतिमुद्धवमसौ किं तत्र तं प्राहिणोत् ।
आयास्ये इति दौत्यकैरिति गिरं चक्रे यथार्थां प्रभु-
र्यद्वोवाच स वाचिकं तदधिक - प्रेमध्र्यभिव्यक्तये ॥ २१ ॥

---

१. कृष्णः । २ रथः ।

प्राप्तो नन्दव्रजमिति : १०.४६.८.

श्रीशपदाम्बुजविमुखो गोकुलसन्तोषजननधृतयत्नः।
युक्तं तस्य हि सूर्यालोकन-तद्गुणकणांश-दौर्लभ्यम् ॥ २२ ॥

साहङ्कारमलं सलीलमथवा यो गोकुलाविर्भवद्-
वृत्त्यानन्दविलोकनोत्सुकमनाः स्यात्तस्य पुंसः स्फुटम्।
पाराङ्मुख्यमिहेशमध्वरचिताऽनेकागमप्रेक्षणं
तद्गोजन्यरजः - समावृतिरथा - ऽसूर्याश्रयाशोदयः ॥ २३ ॥

कर्मप्रचारो विधिमार्गदृष्टो धर्मप्रकारोऽपि सकाम एव।
भूयो भवत्यत्र स गोकुलाभिनिविष्ट एवास निदर्शनं यत् ॥ २४ ॥
( युग्मम् )

सर्वत इति : १०.४६.१३.

यत्र सदानन्दस्थितिरतनुसुखा सा यशोदयोल्लसिता।
युक्तं तद्गोकुलमिह विशेषसुषमं ह्यशेषविषयेषु ॥ २५ ॥

तमागतमिति : १०.४६.१४.

सामान्येऽप्यतिथौ याते वासुदेवधियाऽर्चनम्।
तस्योक्तमच्युतप्रीतिरयं त्विति च तत्क्षमम् ॥ २६ ॥

भोजितमिति : १०.४६.१५.

यो गोकुलविषयगतस्तस्य तदानन्द - सत्कृतिर्युक्ता।
अन्नाच्छादनसुखमपि युक्तं युक्तश्च वाग्विहारोऽपि ॥ २७ ॥

कच्चिदङ्गेति : १०.४६.१६.

प्राग्भुक्तासह्यदुःखो यस्ततो लब्धसुखः सुहृत्।
सुखप्रश्ने स एवार्ह इत्यपृच्छत् स तच्छिवम् ॥ २८ ॥

दिष्ट्या कंस इति : १०.४६.१७.

दुष्टः स्वदोषेण विनाशमेति साधुः सुखं धर्मधियैव भुङ्क्ते।
न तत्र हेतुर्भगवाननन्तः शत्रौ च मित्रे च यतः स तुल्यः ॥ २९ ॥

अपि स्मरतीति : १०.४६.१८.

---

१. इन्द्रियकुलं गोकुलं च। २. सूरिः सूर्यश्च। ३. अध्वरेति अध्वेति च च्छेदः।

असद्बुद्ध्या वयं तस्य स्वाप्ताः सोऽस्मत्सुहृत्तमः ।
नैवेदृशी तु तद्बीः स्यात्तथाप्याशा गरीयसी ॥ ३० ॥

अप्यायास्यतीति : १०.४६.१९.

यस्मिन् साकमनेकगोपशिशुभिर्वृन्दावने क्रीडितं
येभ्यो वृक्षलताद्रिकुञ्जविपिनारामेभ्य आप्तं सुखम् ।
द्रष्टुं तानपि चेत्सकृत्कृतमतिः स्यात्तर्हि तेनैव त-
द्वक्त्राब्जेक्षणतृप्तदृष्टिहृदयः स्यामुद्धवाऽहं कृती ॥ ३१ ॥

दावाग्नेरिति : १०.४६.२०.

यो यद्रक्षणकृत्कृती सकृदपि स्यात्सोऽपि तस्मिन् क्वचित्
सोपेक्षो न भवत्यसौ तु सदयः श्रीशोऽस्मदीयावने ।
निस्तन्द्रं प्रतिवासरं प्रतिपलं यज्जागरूकः समुत्-
साहेनेत्युदिता न जातु भवितोपेक्षेति पृच्छामि ते ॥ ३२ ॥

स्मरतामिति : १०.४६.२१.

दृष्ट्वा तदोद्धव तदीयचरित्रजात-
मत्यद्भुतं शिथिलभावमवाप चेतः ।
स्मृत्वाऽधुनेत्युभयथापि गृहात्मकृत्ये
शैथिल्यमेवमजनीति किमु ब्रवीमि ॥ ३३ ॥

सरिदिति : १०.४६.२२.

तच्चरित्रेक्षणादस्मिन् मनो याति तदात्मताम् ।
तन्मनोऽस्मासु कस्मात्स्यान्न तादृक् चरितं हि नः ॥ ३४ ॥

कंसमिति : १०.४६.२४.

यद्भीभ्रान्तधियो द्रवन्ति निभृतं ब्रह्मेन्द्ररुद्रा अपि
यैरव्याहतवैभवैश्च निखिला क्रान्तेयमुर्वी सखे ।
ते दैत्या बक-धेनुकप्रभृतयो मल्लाश्च कंसोऽप्यसौ
नीता येन सलीलमेव विलयं तस्मात्स एवाच्युतः ॥ ३५ ॥

प्रागेवोद्धव निर्णीतं निजानुभवतो मया ।
सर्वविद्वर्गवाचाऽपीत्यस्मि तद्वशगोकुलः ॥ ३६ ॥

व्यापारं परिकल्प्य कश्चिदिह तत्संदिष्टविश्वस्तधीः
कालातिक्रमणं करोमि कथमप्यस्यास्तु वृत्तं शृणु ।
नो भुङ्क्ते न च तत्प्रभृत्यपि गृहाचारं मनागीक्षते
दूरे सुप्तिसुखं तु तद्गतमनास्तिष्ठत्यलं चित्रवत् ॥ ३७ ॥

यशोदेति : १०.४६.२८.

अच्युतचरित्रचित्रितहृदया प्रागेव सा सदैवासीत् ।
उद्बोधकसामग्री तदोद्धवेक्षेति युक्तमास तथा ॥ ३८ ॥

कुशलमस्तु सुतस्य ममोद्धव
कथमपि क्वचनापि च कामपि ।
विदधतः सुखकेलिमिहाशिषं
निजगिराऽजंगिरा[1] च मुहुर्बुवे ॥ ३९ ॥

निशि निधाय रहो निजजङ्घयो-
र्व्यरचि मङ्गलवार्यभिषेचनम् ।
कथय विस्मृतिरस्य कथं भवेत्
कुशमते शमतेजित - धीरसि ॥ ४० ॥

स्तनजपानकृतोऽस्य मुखं मया
चलविलोचनमैक्षि सुलक्षणम् ।
मनसि तत्सततं किल कीलितं[2]
तदरमादरमानकृता गिरा ॥ ४१ ॥

स्तनजपानमिषादघभूरलं घनवकी नवकीचकनिःस्वना ।
इह हता महतामपि विस्मयं जनयतानयता प्रमदं सतः ॥ ४२ ॥

क्वचिदिहोद्धव - कार्यवशादहो
शिशुवयाः समया भुवि शायितः ।
निजपदा[3] शकलानि चकार यत्
समनसो[4] मनसोऽद्भुतकारि तत् ॥ ४३ ॥

---

१. अजं गृणाति उच्चारयति सा तया । २. बद्धम् । ३. चरणेन ।
४. सङ्गतस्य शकटासुरस्य ।

पवनरूपधरोऽधममधीरिपो-र्हितचिकीर्षुरनेन मनस्विना ।
तृण[1]पदोऽश्मपदे स निपाततो दितिसुतोऽतिसुतोदनमापितः ॥ ४४ ॥

किमु वदामि तदीयतरस्वितामपरवेश्मगताशनलोलुपः ।
सुरुचि चारुपयोदधि पुष्कलं निजगृहे जगृहे न मयार्पितम् ॥ ४५ ॥

परगृहाण्यधिगम्य हृतानि तद्-
दधि-पयांस्यधसत् सं[2]खिमर्कटैः ।
तदुदिताऽद्भुत - तच्चरितश्रुतौ
न समयोऽसमयोऽपि मयेक्षितः ॥ ४६ ॥

अद्यासौ नवनीतगोलमलघुं हस्ते गृहीत्वा स्थितां
मामूचे कुशलानने शृणु कथामेकां तु मे ह्यस्तनीम् ।
कालिन्द्यां बक ईदृगेव सहसा मामेवमास्ये निजे
चिक्षेपेति वदंस्तमेव कवलं स्वास्ये जवान्न्यक्षिपत् ॥ ४७ ॥

अद्यानेन हृतं पयो-दधि मम प्रातर्यशोदे हृतं
ह्यः सिद्धं नवनीतमद्य सकलं नैवेद्यमन्नं मम ।
वासो मे शकलीकृतं परिहृतं गोदोहपात्रं पुन-
र्गोदोहावसरे समेत्य तरसा तर्त्तर्णको मोचितः ॥ ४८ ॥

अद्यायं व्रजराजभामिनि बहून् दुर्वाद - वादाङ्गना-
वद्यानेन सुतेन ते मम पटाकृष्टिः कृता चत्वरे ।
उष्णीषं मम भर्तुरात्मशिरसि प्रोद्धृत्य भर्ताऽस्मि ते
किं दूरं द्रवसीति यत्समुदितं किं तद्ब्रुवे त्वत्पुरः ॥ ४९ ॥

नीताऽनेन सुतेन ते मम सुता कान्तारमेकाकिनी
कामं मुग्धतमां स्नुषां मम बलाद्भ्रंशयत् स्त्रीव्रतात् ॥
त्याज्यो ग्राम इतः किमु स्वमखिलं प्रत्यर्प्यमेतत्पदे
स्थेयं कीदृगिति त्वमेव विहितं दृष्ट्वा यशोदे वद ॥ ५० ॥

सत्रासं किञ्चिदुक्तं यदि खरसदृशीर्नः करोषि प्रियं चेत्
प्रोक्तं तर्हि ब्रवीषीदृशि पथि पटुता सोऽस्ति युष्मत्प्रसादः ।

---

१. तृण इति पदं वाचकं यस्य । २. मित्राणि ।

किञ्चिच्चेत्ताडितस्तद्भवसि बत सरुण्नेहि वेश्मास्मदीय-
मित्युक्ते स्वाधिकारं प्रकटयसि गृहे स्थापिते त्वस्मदीये ॥ ५१ ॥
साशङ्कं वक्षि कस्मान्निजगृहवसति - स्त्वर्पिताऽस्यावकृष्टो-
गेहाच्चेत् तर्ह्यनागाः शिशुरिति वदसि स्वैरवृत्ता भवत्यः ।
दत्तं चेत्किञ्चिदिष्टं किमिति ददत भो नैव चेत्तत्कदर्या
उक्तेऽनुक्तेऽपि चैवं छलयसि तदिदं सङ्कटं सर्वतो नः ॥ ५२ ॥
( युग्मम् )

वृद्धाऽसि त्वमतोऽपराभिरिह किं वाच्यं तदज्ञानिता
कुत्रास्ते तव सर्वतोऽन्तरदशा सर्वास्वसर्वास्ति हि ।
पुत्रिण्योऽपि सहस्रशस्त्वदपरा वर्तन्त एवात्र तं
त्वत्पुत्रस्य च साम्यमैक्षि न पुनः पुत्रेषु तन्मातृषु ॥ ५३ ॥
इत्यादीनि परापवादवचनान्यस्यानिशं श्रीपते-
राकर्ण्योद्धव तेन तेन विधिना तत्तन्मनोधारणम् ।
कुर्वत्या मम सद्मकर्मलवमप्याधातुमप्यन्ततः
स्नातुं भोक्तुमपि त्वभून्न समयः स्वल्पोऽपि रिक्तः सखे ॥ ५४ ॥

लघु विधाय पुरा पितुरन्तिके-
ऽशनमनेन मया सममश्नता ।
सुखमभूत्तदिदं स्पृहणीयम-
प्यविकलं विकलङ्कहृदां न किम् ॥ ५५ ॥

मम मृदादनशङ्कितचेतसो
लघु पुरः प्रविसार्य मुखं स्थितः ।
भृशमलोकि तदा तु चमत्कृति-
र्न सुरभासुर - भावजुषामपि ॥ ५६ ॥

क्वचिदयाचत मन्थनदण्डधृत्-स्तनमसावनुपायितवत्यहम् ।
तमपहाय गतिं विदधेऽन्यतो - ऽयमपरामपराधपरम्पराम् ॥ ५७ ॥
क्वचिदनन्तगुणोऽप्यगुणज्ञया लघुगुणेन मया निगडीकृतः ।
मदपरानपरोद्धव मत्परा कृतवती तव तीर्थपदेऽप्यघम् ॥ ५८ ॥

---

१. रलयोरभेदात् सुलभा ।

तरुवरौ सहजो गतितोऽन्तरा-
पतदुलूखल - कर्षण - कैतवात् ।
बत निपातयता हरिणा तदा
प्रकटितं कटितन्त्रबलं न किम् ॥ ५९ ॥

विना रामं यामो मिहिरतनया - तीरविहृतौ
कथं गोपानेवं वदसि पुनरद्याप्यतिहठात् ।
पुराहेरुन्मोचः समजनि महादिष्टत इति
मयोक्तेऽन्तर्हासः स च सदिदमं वैवमगदत् ॥ ६० ॥

किं कृष्ण मां छलयसि व्रज तं व्रजेशं
सुप्तेरयं न समयो न च भुक्तिवेला ।
इत्युद्धव प्रतिपदं कटु मे ब्रुवत्या
व्यक्तीकृतो न किमु वा प्रमदानुभावः ॥ ६१ ॥

विलोक्यास्य लोभं समाराधिकायां
समाराधिका राधिका सोद्धवाऽभूत् ।
तदा यानि वाच्यान्यवाच्यान्यवोचं
न तान्यत्रपा वक्तुमत्र क्षमेऽहम् ॥ ६२ ॥

मातर्मदिष्टमिदमर्पय मह्यमुक्ते
दत्तं मयोद्धव न किन्तु सरोषवाचा ।
निर्भत्सिते यदकरोत्स्वमुखं पुरो मे
तस्य स्मृतिर्हृदयभेदमलं करोति ॥ ६३ ॥

आसीदहर्निशमनेन सहैव वास-
स्तत्सत्कृतं क्वचिदसत्कृतमप्युपेतम् ।
तच्चिन्तयामि किमहं किमु वा स्मरिष्य-
त्येषोऽच्युतोऽस्म्यलमिहोद्धव मुग्धबुद्धिः ॥ ६४ ॥

किमु वदामि ददामि दधामि वा
किमु चरामि हरामि सरामि किम् ।

१. कटिप्रधानम् । २. सम्यगाराधिका सकामास्वधिका च ।

भवति सर्वकृतावकृतार्थकं
द्रुतविलम्बित - वृत्ततुलं मनः ॥ ६५ ॥
प्रतिपलस्मृततद्गुणसङ्ख्यया प्रतिपलेक्षित-तत्कृतिलक्षया ।
कथमपक्रमणीयमहोमयोद्धव वदाव वदान्यगिरैव माम् ॥ ६६ ॥
समशने शयने सदनेऽङ्गने गृहवने विपिनेऽप्यवने गवाम् ।
तदभिधानमिहैकमपक्रियो व्रजपतिर्जपति स्मृततद्गुणः ॥ ६७ ॥

तयोरित्थमिति : १०.४६.२९.

इत्थं विविक्तमभिकाशित-हार्दभावं
श्रुत्वा वचो मधुरमीश्वरमातुरीड्यम् ।
तत्सान्त्वनं तदुचितोत्तरचारुवाचा
कर्तुं तदाऽऽस स समुद्भव उद्धवोऽपि ॥ ६८ ॥

युवां श्लाघ्यतमाविति : १०.४६.३०.

य इह दैवतदुर्लभदर्शनो जननि ते स यदङ्कमुपाश्रितः ।
तदखिलेऽपि जने नहि सौख्यभृच्छुभवती भवतीसदृशी परा ॥ ६९ ॥
कुत इतोऽरिदुरुन्नतिदीनते विलसदच्युतमूर्तिहृदां हि वः ।
निजसकृत्स्मृतिमात्रजुषामसावपरिपुः परिपूरयति श्रियः ॥ ७० ॥
जननि येन निजान्तरधामनि निजगुणैः प्रभुरेष वशीकृतः ।
तमनलो न मरुन्न यमोऽपि वा दिनकरो न करोत्यसुखाकुलम् ॥ ७१ ॥
पदरजो भृशमैशमिहाल्पमप्यजररौडजमानस - दुर्लभम् ।
त्वदजिरेऽर्भकलभ्यमभूत्तदीप्सितवरं तव रम्यमितोऽपि किम् ॥ ७२ ॥

निरुपमं किमु भाग्यमहं ब्रुवे
जननि तोषदघोष - महीजुषाम् ।
प्रतिपलं किल ये कलितोत्सवाः
सुरचयं रचयन्ति सविस्मयम् ॥ ७३ ॥

जननि सर्वजनाघविनाशिनीयमधुनैव मही नहि केवलम् ।
अपि भवेदिह याम्ब जनैरितः प्रकलिता कलिताडनकाङ्क्षिभिः ॥ ७४ ॥

---

१. द्रुतं च तद्विलम्बितम् वृत्तविशेषश्च । २. दिनम् । ३. इन्द्रः ।

व्रजजनावलिमेव न केवलं जननि जन्मभृदीड्यपदां ब्रुवे ।
इह गतां जडजातविहारिणीं सुमलिनामलिनामपि मण्डलीम् ॥ ७५ ॥

वसतिरत्र ममास्त्विति चिन्तयास्म्यहमिहैव न केवलमुत्सुकः ।
वहु किमम्ब वदामि मुदा शुकप्रभृतयो भृतयोगकला अपि ॥ ७६ ॥

अमलगोकुलवेद्यमहोऽम्ब ते निखिलगोकुलसेवनकार्यभूत् ।
विमलगोकुलमेतदिलातले कमलभूमलभूरिहरं न किम् ॥ ७७ ॥

नहि विहाय विभुं विभवप्रदा क्षणमपीक्षणमन्यजने क्वचित् ।
जननि या कुरुते भुवि साऽधुना तव रमा वरमाश्रयते पदम् ॥ ७८ ॥

तदिह सिद्धमिदं नहि किं मुदा हरिरसौ विहरत्यलमन्वहम् ।
तदलमल्पवदल्पविकल्पितैर्निजपदे जप देवगुणान् स्थिता ॥ ७९ ॥

यदिह नाम्ब भवेत् कमलापतिस्तदमलोद्धव हर्षसुखस्थितिः ।
कथमिहोल्लसतीति विलोकयत्वमितराऽमितरागसुखं यतः ॥ ८० ॥

भगवतो निखिलान्तरवासिनोऽप्यजनि तेऽम्ब हरेर्विरहो यदि ।
हृदयमेव न तेऽस्त्यथवाखिलान्तरगतः स न तर्हि भवेदितः ॥ ८१ ॥

पल्लीला[2] भवतीनामहीशपर्यङ्कशायिनः सुलभा ।
समजनि जननि जनेऽस्मिन्नहि किं सा सुरसभाव[3]-मानकरी ॥ ८२ ॥

यो लोकेशमदः[1] पितामहपदः सत्यावसत्याश्रितः[4]
स्रष्टा सर्वचराचरस्य चतुराम्नायस्थ-तत्त्वार्थवित् ।
स ब्रह्माऽपि यदर्भको निगदितः स श्रीपतिः सर्वदा
ब्रूते मत्पितराविमाविति किमाशंस्यं न वा वामिदम् ॥ ८३ ॥

यस्मिन्मतिः सकृदकार्यतयाऽपि सक्ता
प्रेष्ठं तनोत्यमरदुर्लभमेष कृष्णः ।
युष्मत्पदे निजधियं विदधाति तद्वां
श्रेयोऽवशिष्टमिह किं तदलं वचोभिः ॥ ८४ ॥

---

१. महस्तेजः । २. चरणलीला पल्लीभूमिश्च । ३. सुराणां सभा सुरसश्चासौ भावश्च । ४. सत्यलोके वसतिः श्राश्रिता येन ।

एकैव त्वं सदानन्दयुता तद्वदसावपि ।
यशोदया युतस्तद्वां युक्तोऽसावच्युतान्वयः ॥ ८५ ॥
योऽत्र स्थितोऽपि तत्रत्यस्वीयक्षेममधाद् विभुः ।
तस्य तत्र स्थितस्यापि भवच्छङ्करणं स्फुटम् ॥ ८६ ॥

यदाहेति : १०.४६.३५.

प्रियं वः करवाणीति यदुक्तं येन ते पुरः ।
तत्सत्यसन्धसद्वाचि नैवाश्रद्धं मनः कुरु ॥ ८७ ॥

न ह्यस्यास्तीति : १०.४६.३७.

त एव सुहृदस्तस्य वयं नैवेति मा वद ।
सर्वत्रापि समः श्रीश इत्यस्ति श्रुतिगर्जनम् ॥ ८८ ॥

दृष्टं श्रुतमिति : १०.४६.४३.

सर्वहार्दस्थितः सर्वभूतस्थः सर्वसन्मयः ।
स एवं पश्यतोर्नित्यं क्व वा तद्विरहोदयः ॥ ८९ ॥

एवं निशेति : १०.४६.४४.

दुर्लङ्घ्यापि महानिशा ध्रुवमतिक्रान्ता भवत्युत्तम-
श्लोकस्यैकमपीह नाम सकृदप्युक्तं यदि प्रेमतः ।
तन्नैवाद्भुतमेतदच्युतपदेप्रेम्णोस्तयोः प्रेमतो
यन्नन्दोद्धवयोस्तदीयचरितोद्गात्रोर्निशान्तोऽभवत् ॥ ९० ॥

सर्वेऽपि यामाः[1] प्रशमं प्रयान्ति यन्नामसङ्कीर्तनतोऽपि पुंसाम् ।
तस्याच्युतस्य ब्रुवतोश्चरित्राण्यासीत् त्रियामोपरतिर्न[2] चित्रम् ॥ ९१ ॥

उद्गायतीनामिति : १०.४६.४६.

आहुः केचन दुर्ग्रहार्जवविधिं चित्तेप्सितप्राप्तये
केचिच्छीतकरार्चनं कति परे विष्णोः पदैकस्तुतिम् ।
काङ्क्षन्त्यः पुनरीशदर्शनसुखं ताः प्रातरेवादरा-
च्चक्रुस्तत्प्रतिरोध्यदृष्टहतये तत्सर्वमप्यङ्गनाः ॥ ९२ ॥

---

१. यमसम्बन्धिक्लेशाः प्रहराश्च । २. रात्रिः, त्रयश्च ते यामाश्च ।

सर्वागमस्थितिजुषे द्विज[1]मङ्गलेष्ट-
कर्त्रे कराहितरसाय तमो[2]निहन्त्रे।
पद्मा[3]नुरञ्जन - कराय गवा[4]मवित्रे
तस्मै नमांसि हर[5]ये करवाण्यजस्रम् ॥ ९३ ॥

तारोप[6]भोग - रसिकाय रसात्मकाय
जैवा[7]तृकाय शिवमौलि - लसत्कराय।
सद्भा[8]सितोज्ज्वलगु[9]णाय सुधाधराय
कृष्णाऽ[10]न्तरङ्गवपुषे विध[11]वे नमोऽस्तु ॥ ९४ ॥

रक्तानुरक्तमतये स्वजनावनार्थ-
मुन्मेषिणे सक[12]लमित्र - गुरुप्रियाय।
सन्मङ्गलाय कमलाधिक - भावनाय
सोम[13]प्रियाय नतिरस्तु धराभ[14]वाय ॥ ९५ ॥

सौम्यात्मने सितकरान्वयभूषणाय
कन्या[15]धिपत्यरुचये कविमित्र[16]काय।
अक्रूरगीतचरिताय बुधेडिता[17]य
तस्मै मनोज्ञवपुषे नतिरस्तु भूयः ॥ ९६ ॥

पीताम्बराभिरुचये सुमनोर्चिताय
गोपाग्र[18]गाय सुरतोत्सव - दायकाय।
वैचित्र्यवीर्यचरिताय च वश्यवाचे
नीचेतरेप्सितपुषे गुरवे नमोऽस्तु ॥ ९७ ॥

बल्युन्नतस्थितिधिये सुरसङ्घपात्रे
दात्रे सदा शिवपदस्य निजाङ्घ्रिभाजाम्।

---

१. चन्द्रमण्डलो ब्राह्मणभद्रं च। २. तिमिरमज्ञानं च। ३. पद्मं लक्ष्मीश्च। ४. धेनवः किरणाश्च। ५. सूर्यः कृष्णश्च। ६. नक्षत्राणि तालफलानि च। ७. आयुष्मान् तत्संज्ञकश्च। ८. सन्तो नक्षत्राणि च। ९. किरणा दयादयश्च। १०. यमुना कृष्णमृगश्च। ११. चन्द्रो विष्णुश्च। १२. चन्द्रादि ग्रहाः, पक्षे स्पष्टम्। १३. चन्द्रः शिवश्च। १४. भूसुतः धरोत्पन्नश्च। १५. राशिः कुमार्यश्च। १६. शुक्रः कवयश्च। १७. पण्डिताः तत्संज्ञा च। १८. इन्द्रः गोपाश्च।

पूर्वामर[1]ार्चितपदाय सुखोदयाय
भोजा[2]धिपाय भुवि सत्कवये नमोऽस्तु ॥ ९८ ॥

श्यामा[3]म्बराहितदृशे क[4]विसौम्यदत्ता-
मोदाय काममदयाय विरोधिवर्गे ।
भृत्याखिलार्तिहरणोत्सविने नमो मे
कृष्णाय कृष्णवपुषेऽस्तु शनैश्चराय ॥ ९९ ॥

कृष्णत्विषे सुरसमीहितभेदभाजे
स्वच्छन्दगुप्तगतये सुरतामृताप्त्यै ।
निर्देहभावरुचये सक[5]लोन्मुखाय
प्राक्सैंहि[6]केयवपुषेऽस्तु नमोऽनिशं मे ॥ १०० ॥

धूम्रध्व[7]जाय निखिलासुरमण्डलाना-
मभ्रत्विषे भृशम[8]नन्त - विराजिताय ।
भूयो ह्यदृश्यगतये ख[9]ग - केतवे मे
प्रेम्णा नमोऽस्तु सततं सकलेष्टसिद्ध्यै ॥ १०१ ॥

ग्रहानुकूल्य - प्रतिकूलते यद्यस्यानुकूल्य - प्रतिकूलताभ्याम् ।
सिद्धे जनानां विधुं[10]मेव तस्मात् सर्वात्मनाऽहं शरणं प्रपद्ये ॥ १०२ ॥

किं तैर्ग्रहैः स्थितिवशादिह ये दिशन्ति
लोके शुभाशुभफलं लघुकालभोग्यम् ।
यस्तापहार्यमृतदो निजपा[11]दभाजां
तं कः श्रयेत न विधुं सुखसंपदिच्छुः ॥ १०३ ॥

उल्लासनं सखि यदाश्रयतो ग्रहाणां
यत्सर्वभूतजनकं गुणमात्रबोध्यम् ।

---

१. दैत्याः पूर्वाश्च देवाश्च । २. देशो यादवाश्च । ३. कृष्णवर्णम्, स्त्रीविशेषश्च । ४. शुक्रबुधौ, पक्षे स्पष्टम् । ५. चन्द्रः संपूर्णश्च । ६. नृसिंहो राहुश्च । ७. अग्निरूपाय तद्रूपाय च । ८. शेषः आकाशश्च । ९. खगेषुग्रहेषु केतुः, गरुडध्वजश्च । १०. चन्द्रो विष्णुश्च । ११. किरणाः चरणाश्च ।

नीरूपमप्यसितरूपतया विभाति
कल्याणदायि मम विष्णुपदं[1] तदास्ताम् ॥ १०४ ॥

सूर्याश्रितं[2] बुधनुतं द्विजपूजितं च
सन्मङ्गलं त्रिदश - दानव - देशिकेड्यम् ।
यत्तत्पदं ग्रहपदं विशदं च विष्णो-
र्नित्यानवद्यमिह कस्य भवेन्न वन्द्यम् ॥ १०५ ॥

तत्तत्स्वभक्तजन - वाञ्छितपूर्तये य-
स्तत्तद् - ग्रहाकृतितया भुवने विभाति ।
सर्वात्मने निजजनार्तिहराय तस्मै
श्रीविष्णवे मम सदाऽस्तु सखि प्रणामः ॥ १०६ ॥

आलेपो न मृजाऽपि सद्मनि कृता नाकारि पाकः कुतः
किं कार्यान्तरमन्तरे समुदितं किं वा वृथा भ्राम्यसि ।
पृष्टैवं प्रतिवेशिनीं प्रति परा प्रोचे प्रभाते मया
तस्यास्यं स्मितचञ्चलाक्षिकमनुस्मृत्याखिलं विस्मृतम् ॥ १०७ ॥

सायं साध्यमुषः करोषि किमिति भ्राम्यन्मनास्त्वं सखी-
त्युक्ता कापि कयाचिदेवमवदद् भ्रान्ता त्वमेवाऽऽलयसि ।
सन्ध्यातिक्रमणं यथार्थमभवच्चेन्नागतोऽद्याप्यसौ
कस्माद्वेणुमुदीरयन् कलितगोसङ्गो मुकुन्दः सखा ॥ १०८ ॥

आप्रातः पुनराप्रभातमखिलं त्यक्तान्यकार्यं मनो
लग्नं तत्र भवत्यनुस्मृतिपदं नीत्वैव रासोत्सवम् ।
मुक्तिः सुप्तिरथानुरक्तिरपि वाऽन्यत्रेति किं पृच्छसि
यत्किञ्चिद्विहितं भवेदवशतस्तत्स्यांशतो न स्मृतिः ॥ १०९ ॥

श्वश्रूः क्रुध्यतु कुप्यतु प्रतिपदं भर्ता पिता यातरो
निन्दन्तु व्रजगोजनोऽप्यपवदत्वश्राव्यमन्योऽपि वा ।
यास्याभ्यास्यमवेक्षितुं यदुपतेरित्युक्तिरिष्टार्थदा
यत्रासीत्तदहो गतं किमधुना कृत्यैरकृत्यैरहो ॥ ११० ॥

---

१. आकाशः विष्णुचरणश्च । २. सूर्यादयो ग्रहाः, पक्षे स्पष्टम् ।

पश्याम्यास्यमपास्य कृत्यमपरं पास्यामि तद्वाक्सुधां
तत्पादस्थरजो मृदु स्ववसनैः सम्मार्जयिष्ये स्वयम् ।
इत्थं व्यापृतचेतसा सखि मया नालोचि कीदृग्गृहा-
चारोऽस्त्यत्र मनागपीत्यनिपुणा धीस्तत्र सिद्धैव मे ॥ १११ ॥
आयास्याम्यबला इहेति च समुद्याने यदुक्तं वच-
स्तत्सत्यं किमसौ करिष्यति सखि प्राप्तोत्तमश्रीरिति ।
सर्वं कार्यमपास्य वेश्मगमलं नित्यं प्रसक्तं दिने
तत्सत्यश्रुतिदत्तदृष्टिरखिलं दुःखं क्षिपाम्यन्वहम् ॥ ११२ ॥
गोष्ठीभिर्वितथप्रपञ्चरचना - भाग्भिस्तवाभिः सखि
किं कुर्यामहमागता दधिपयोऽनास्थाप्य शिक्योपरि ।
प्राप्तश्चेत् सहसा गृहान्तरमसौ पाटच्चराग्रेसरो
बालेभ्यो वितरिष्यतीति सखि मे लग्नं तदस्मिन् मनः ॥ ११३ ॥
कृष्ण त्वं वितर स्वयं दधिपयः सन्दर्शितं यन्मया
मद्गेहस्थितमेतदत्ति तदहो कामं विना मां भवान् ।
तत्क्षिप्रं तव मे च मातृसविधे गत्वा ब्रुवे त्वत्कृति-
मित्युत्स्वप्नवतां श्रुतं स्फुटपदं सख्यः शिशूनां वचः ॥ ११४ ॥
नान्नं पेयमपि त्वया विरहितः सोऽश्नाति नो वा पिब-
त्येतद् वत्स कथं विना तमधुना पातुं प्रवृत्तः पयः ।
सद्यस्तप्तमिदं तदन्तरसितं साकं पिधानेन तत्
तूष्णीं तिष्ठ शिशो किशोरचरितः श्रीशोऽधुनैवेष्यति ॥ ११५ ॥
विश्वव्याप्तिरनामयाऽस्य जगतीत्युक्तं व्रजेशेन तद्-
गर्गोक्तीरवधार्य सच्छ्रुतिलसत्प्रामाण्यधूर्वाहिकाः ।
तत्सत्यं यदि तत्कुतो दधिपयो न प्रागिवात्ति प्रभुः
का शङ्काऽस्त्यथवाऽऽत्तमेव यदिदं न्यूनं समालक्ष्यते ॥ ११६ ॥
त्वं मत्तः सखि पुण्यवत्यसि यतः स्वप्नोपभोगस्त्वलं
लब्धस्तेन सहाच्युतेन सहसा सोऽप्यद्य मे दुर्लभः ।
त्वं मत्तः सखि पुण्यवत्यसि यतः सम्प्राप्तजाग्रत्स्थिति-
प्राप्तैतद्विरहस्मृताच्युतपदा जाता न जातास्म्यहम् ॥ ११७ ॥

नीतस्त्वं मथुरां श्वफल्कजनुषा यातस्त्वमप्यच्युते-
त्यल्पोऽनल्पतरं प्रजल्पतु जनो ब्रूहि त्वमप्यन्ततः ।
मच्चेतः सितभित्तिचित्रलिखित-त्वन्मूर्तिना प्राक्तनात्
सान्निध्यं त्वधुनाऽधिकं कृतवता ध्यानेन नाहं ब्रुवे ॥ ११८ ॥

शीघ्रं स्वीकुरु चारुपत्ररचनां पुष्पोपभोगं च मे
जम्बीरा-ऽऽम्रज-नारिकेलफलभावेतावधीशस्तनौ ।
स्वादुस्वच्छतराधरामृतमपि प्रेम्णा गृहाणेश यत्
पत्रं पुष्पफलं जलं च भजकैर्गृह्णासि भक्त्यार्पितम् ॥ ११९ ॥

इष्टप्राप्तिरनिष्टशान्तिरथ च श्रीकृष्णनाम्नि स्थिता
नामैवास्य च कामदं सुदिनताप्यत्रीह तत्कीर्तनात् ।
निर्विघ्नाखिलपर्वसर्व - विषयव्यापार - भव्योदयं
नामैवेति सखि स्मराम्युषसि तन्नामैव सन्मङ्गलम् ॥ १२० ॥

हे कृष्णाऽच्युत वासुदेव भगवन् हे पूतनारे हरे
जिह्मान-स्तृण-वत्स-धेनुक-वका-ऽरिष्ट-प्रलम्बापह ।
हे दुःसर्पगदापनोदनपटो हे दावसंत्राणकृ-
द्धे गोवर्द्धनधारकैह्यवच मां हे रासशिक्षागुरो ॥ १२१ ॥

हे गोपालक नन्दमोचक विभो हे शङ्खचूडापह
हे व्योमान्तक केशिसूदन लसत्कुञ्जान्तरङ्गस्थिते ।
हे गोपीहृदयाम्बुजोज्ज्वलरसग्राहिन् गुणक्षीरधे
क्षिप्रं देहि सुदर्शनं निजमघप्राग्भारहारि प्रभो ॥ १२२ ॥

कृष्णा गौर्मम कृष्ण एव शिशुरप्यात्माऽपि कृष्णोऽञ्जनं
कृष्णं कृष्णमणिर्गलेऽम्बरमिदं कृष्णं च कृष्णः पतिः ।
कृष्णः केशचयश्च पत्ररचना कृष्णा च कृष्णं पयो
नद्यास्तत्सखि नास्ति मे पलमपि श्रीकृष्णनाम्नोऽस्मृतिः ॥ १२३ ॥

यो व्यापारः श्रीधरानन्ददायी सद्यो येन क्षीयते दुर्निमित्तम् ।
श्रीशप्राप्त्यै तं विदध्यात्कृतीति व्यक्तं दध्नो मन्थनाद्गीतिपूर्वम् ॥ १२४॥

भगवत्युदित इति : १०.४६.४७.

येनाऽगाधतमः प्रयाति विलयं प्रत्यर्थि चार्थग्रहे
यस्मादक्षिण च पाटवं विजयते यः सर्वदोषापहः।
यस्मै सद्गुणिने नमन्ति निखिला यं स्वप्रकाशं विदु-
र्विज्ञा यत्र च साक्षिताऽखिलकृतेर्यस्य प्रसादोऽर्थदः॥ १२५॥
यो वेदमृग्यो रसदानदीक्षो यः स्वैर्गुणै रञ्जितभूरिपद्मः।
हृद्रोगहर्ता सकलेष्टदाता यश्चामृतात्माऽऽश्रितपर्वशाली॥ १२६॥
हरे[3]स्तस्योदयस्तासामेवं नन्दितचेतसाम्।
स्वान्तेऽभवद् वृत्तिरोधी बहिर्व्याप्रृतिहेतुकः॥ १२७॥
( विशेषकम् )

अक्रूर इति : १०.४६.४८.

निष्फलापि करोत्यार्तिं प्राग्दृष्टाऽश्लीलकर्मजा।
भीतिस्तद्युक्तमेवासां साऽऽसीत्तद्रथदर्शनात्॥ १२८॥
एवं भूरितराणि चित्रचरितान्यन्यान्यपि श्रीपते-
र्गीतानि व्रजकामिनीभिरुषसि श्रीशानुरक्तात्मभिः।
श्रावं श्रावमसीमचित्तसुखदान्यद्धा स बद्धादरः
श्रद्धायां स्वयमुद्धवः प्रथमतो मोदाब्धिमग्नोऽभवत्॥ १२९॥

कृताह्निक इति : १०.४६.४९.

नित्यकृत्यं तु कर्तव्यमेवेति विधिशासनम्।
युक्तमेवोद्धवः सिद्धो विध्युक्तविहिताह्निकः॥ १३०॥
श्रौतकृष्णोज्ज्वलरसाभिषिक्तस्योद्धवस्य हि।
कृ[4]ष्णोज्ज्वलरसस्नानं तदासीत्सिद्धसाधनम्॥ १३१॥

श्रीशकल्पतरुक्रीडा०॥

इति श्रीमन्नासिकनिवासि - कविवर - हरिसूरिविरचिते
भक्तिरसायने षट्चत्वारिंशोऽध्यायः॥ ४६॥

---

१. रात्रिर्दोषाश्च। २. पद्मा पद्म च। ३. सूर्यः कृष्णश्च। ४. यमुना।

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥

समवकर्ण्य तमागतमच्युताज्ञिरवधीरयितुं विरहव्यथाः।
अगमदाश्वखिलाऽपि तमीक्षितुं पुरवधूरवधूतगृहक्रिया ॥ १ ॥

तं वीक्ष्येति : १०.४७.१.

जलजायतलोचनस्य पीताम्बरभाजो वनमालिनो हि तस्य।
व्रजवासिदृशान्तदोद्धवस्य वय एवाभवदीशभेदकं तत् ॥ २ ॥

शुचिस्मिता इति : १०.४७.२.

दृष्ट्वैव कृष्णसखमेनमदृष्टपूर्वं
निश्चिक्युरात्मनि शुभं सुदृशो यदेताः।
तद्युक्तमेव हि निसर्गकृताऽपि चेष्टा
व्यक्तं प्रवक्ति महतामवहिष्टमर्थम् ॥ ३ ॥

व्याप्तोऽच्युतोऽखिलजगत्सु सदैक एवे-
त्यर्थं श्रुतिस्थितमिहा-ऽनुभवाधिरूढम्।
कुर्वन् कुशाग्रमतिरुद्धव एक एव
नानोद्धवात्मकतयाऽऽस मनःसु तासाम् ॥ ४ ॥

तेन पित्रर्थमेव त्वं प्रेषितोऽत्र ततोऽपि नः।
लाभो निरामयः सिद्धस्तद्दीक्षासहगुद्धवः ॥ ५ ॥

अन्येष्विति : १०.४७.६.

कार्यं स्वार्थपरायणं भुवि समुद्दिश्यैव सर्वे जनाः
प्रीतिं मानसकार्यकर्तरि जने सन्दर्शयन्त्यञ्जसा।
तादृग्वृत्तिरिहाच्युतोऽप्यजनि चेत् सम्प्रत्यपास्तक्रमं
तस्याऽऽब्रह्मपिपीलकं निरुपाधि त्राणव्रतं स्यान्न किम् ॥ ६ ॥

महत्स्वपि महत्प्रीतिः कार्यगा किं पुनर्लघौ।
उक्तमेतदभिव्यक्त्यै सुमनःस्विव षट्पदैः ॥ ७ ॥

निःस्वं त्यजन्तीति १०.४७.७.

स्वार्थैकदृष्टिर्लोकोऽयं भवत्वन्यो न सहृयः।
श्रीगोविन्द इति व्यक्तं यतः स्वीयार्पितोद्धवः ॥ ८ ॥

काचिदिति : १०.४७.११.

इतः सारं समास्वाद्य मधुरैकरसाश्रितः।
कृष्णोऽभूदिति तद्युक्तं तस्या मधुकरेक्षणम् ॥ ९ ॥
अद्धा मिथः प्रवचनाद्रसोद्रेकोदयोऽधिकः।
दूतद्वारेति जानाना तादृशं तमकल्पयत् ॥ १० ॥
मिथो घटनपर्याप्तचातुर्यं रसशास्त्रतः।
मालिनीवृत्तमेवेति युक्तं तद्वृत्ततोऽब्रवीत् ॥ ११ ॥

वाच्यं स्वान्तरमात्रवेद्यभजनश्राव्यं यदस्मिन् सुहृग्
ब्रूतो तत्पुरतो हि यो निजसदृग् ज्ञात्वेति सत्पद्धतिम्।
एका तं मधुपं च वीक्ष्य सदृशं स्वं वालिजातप्रिया
सामोदाच्युतपादपद्ममधुपा हार्दं जगाद क्षमम् ॥ १२ ॥

कृत्वा मैत्र्यमकृत्रिमं प्रतिदिनं दत्वा च सौख्यं मुहुः
क्षान्त्वा चाप्यपराधराशिमनिशं सन्दर्श्य विश्वास्यताम्।
यं योऽत्र प्रजहात्यहेतुकमसौ चक्षुः श्रुतिश्रीयुत-
स्तस्य स्यादरितुल्य इत्यलिमिमं सोद्दिश्य युक्तं जगौ ॥ १३ ॥

कृष्णाकारजुषं द्विरेफकलितं पद्मान्तरङ्गस्थितं
राजद्वंशनिवासिनं बहुपदं श्रुत्यर्हमञ्जुस्वरम्।
ज्ञात्वा तं मुरलीधरं भ्रमरमप्येकात्मभावं पुरः
प्राप्तं तत्परिचारकं च चतुरा काऽप्येनमेवाब्रवीत् ॥ १४ ॥

कृष्ण त्वं बहिरन्तरे सरसतापादश्च पद्माश्रितो
यस्योक्तिः श्रुतितोषणी ध्रुवमुदासीनान्तरात्मस्थितिः।

---

१. मालाकार-स्त्रीचरित्रम्, पक्षे वृत्तविशेषः। २. कमलजातं वेति च्छेदः, सखीजातं च। ३. शत्रुर्भ्रमरश्च। ४. भ्रमरः, मुरलीधर-शब्दश्च। ५. कमलं लक्ष्मीश्च। ६. चरणः स्थानं च।

प्रीतिश्च द्विंजमित्रसुन्दरगुणप्रोल्लासिहार्दाशये
तुल्यं तेन तमच्युतेन मधुपं मत्वा तदन्याऽब्रवीत् ॥ १५ ॥
अयं पद्मिंनीत्यागकृत् सोऽपि यद्य-
प्ययं षट्पदः षट्पँदेनः स चापि ।
अयं गोपिकाँरावमस्मिन् शृणोति
स नैवेत्यलिं श्लाघयोवाच काचित् ॥ १६ ॥
अगाधवसुजातसंपदमनेककोशाँश्रित-
मनकेवसुमद्धसूदित - रसोपभोगक्षमम् ।
सुपद्मंवसतिं महाधनिकमेव मत्वाऽवदत्
पराऽलमिति साधु यद्धनिकवश्यमेतज्जगत् ॥ १७ ॥
कश्चित्स्वार्तिकृते नृपेण सहसा संप्रेषितं सेवकं
दृष्ट्वा तत्पुरतस्तदीयचरितान्युद्घाट्य तं स्वात्मसात् ।
सद्यो हन्त यथाकरोति सुमनोभूत्याश्रितं तं तथा
प्राप्तं वीक्ष्य शिलीमुखं वशयितुं तद्भृत्यमन्याऽब्रवीत् ॥ १८ ॥
पुण्यात्मा स्वात्मसौख्यं निजसुकृतचयादेव यातीति नास्यो-
द्धारे तादृक्प्रतिष्ठा प्रभवति जगतीत्यच्युतः साधवश्च ।
दीनोद्धारात्तदीक्षा इति हृदि विदुषी पँङ्कजातस्थितं तं
मत्वाऽलिं संभ्रमन्तं प्रकलयितुमनुग्राह्यसूक्ते तदन्या ॥ १९ ॥
मत्तालिख्यामोदसार-ग्रहणचतुरधी राधिकेऽवस्थिता किं
तूष्णीमित्येव तालीवनभुवि बहुशः श्रीधरोदीरिताज्ञाम् ।
स्मृत्वा लोलस्वभावा मधुकरमुपरि भ्रान्तमुन्मत्तशब्द-
मह्लादोऽस्मीति सारग्रहणचतुरधी सा निरीक्ष्येत्यवादीत् ॥ २० ॥
अस्मच्चित्तवशीकृतौ भृशमसौ मध्यस्थमायोजय-
त्यव्यक्तध्वनिमेव पूरुषमिति व्यक्तं हि वेणौ पुरा ।

१. चन्द्रसूर्यौ ब्राह्मणसखायौ च । २. कमलिनी स्त्रीजातिविशेषश्च । ३. षट्पदाया राजनीत्या इनः, पक्षे स्पष्टम् । ४. गावश्च पिकाश्च, गोपस्त्रियश्च । ५. कुड्मलं धनागारं च । ६. कमलं निधिविशेषश्च । ७. पापजातं कमलं च । ८. मत्तश्चासौ अलिश्च, मदिति च्छेदश्च, ताली मदिरा ।

भात्येष भ्रमरोऽपि तादृश-रवस्तत् तादृगेवाधुना
स्यादेवेति सुपत्रसंस्थितममुं निश्चित्य चान्याऽब्रवीत् ॥ २१ ॥

रसभुगसि मिलिन्द त्वं सदा पद्मिनीनां
कथय जगति कुत्रापीदृशोऽलक्षि पन्थाः ।
किमु विधिरतनुश्चोरेवमेनं करोति
किमतनुरविधिर्वा बीजमत्रेत्यपृच्छत् ॥ २२ ॥

आघ्रान् संमोह्य मञ्जुश्रुतिमधुररवै - र्यातभी शङ्कचेताः
स्थाता स्वच्छन्दवृत्तौ परयुवति-मनोजातमाविष्करोति ।
ईदृक् सज्जारकर्मा प्रकटमसुलभोऽन्विष्यमाणोऽपि दैवा-
ल्लब्धस्तत्तुल्य एवायमिति किमपरोवाच तद्वृत्तमेनम् ॥ २३ ॥

मधुपतिरधुना जातो मधुरिपुरपि यत्ततोऽनयोर्मैत्र्यम् ।
निर्व्याजमर्थसिद्धं त्विति काचिदुवाच भृङ्गमुचितार्थम् ॥ २४ ॥

जानन् पङ्कविभूतिमेवमनिशं जानञ्जडावस्थितिं
जानञ्छूरगुणानुरक्तहृदयां जानन् भुजङ्गावृताम् ।
नो मुञ्चाम्यहमब्जिनीमविकलाङ्गीकार - पक्षावृतो
निर्दोषाः किमिमा जहात्ययमिति ब्रूयात्तमित्यब्रवीत् ॥ २५ ॥

जात्याऽहं मधुपस्तमोगुणमयो व्यक्त्या रसाङ्घ्रिस्तथा
स्थित्या च स्फुट-पङ्कजातनिलये वासश्च नाम्नाऽप्यलिः ।
एवं सत्यपि कृष्णविष्णुपदभाक् संसारभाक् पद्मिनी-
योगादस्मि पदैवमेनमिह ते तुल्यः स इत्यब्रवीत् ॥ २६ ॥

जानात्यत्रैष एवोज्ज्वलमधुररसं पद्मिनीनामपारं
ग्लानिं वा मित्रपादद्युतिविरहितया षाट्पदीं चापि नीतिम् ।
मत्वेत्थं काऽपि मुग्धा निजहृदपगतं बोधयन्त्युद्धवार्थं
युक्तं तद्यत्प्रकल्प्य ह्यलिमलभवदद् द्वारमेवाब्जिनीस्थम् ॥ २७ ॥

---

१. भ्रमरः यादवेशश्च । २. पापं कर्दमश्च । ३. सूर्यः शूरश्च । ४. षट्-चरणः मकरन्दश्च । ५. कमलं स्फुटं पापजातं यस्य सः कंसस्तन्निलये च । ६. भ्रमरः शत्रुश्च ।

मधुपे एव सर्वासामुक्तिबीजं पृथक् पृथक् ।
निरुक्तं भिन्नभिन्नोक्तेराशयोऽप्येवमूह्यताम् ॥ २८ ॥

मधुपेति : १०.४७.१२.

दूतत्वेन स्थितोऽपि त्वमिह चलगतिः पद्मिनीं यासि भूय-
स्त्यक्त्वा तामत्रपोऽन्यां व्रजसि कुमुदिनीं तान्तथान्यां तथैव ।
स स्वामी तत्वकीनस्त्वहह किमु भवेद् भोग्यमस्यैकमस्मिँ-
ल्लोके विद्यो न यद्वा बहु मधु पिबतः को विधिः को निषेधः ॥ २९ ॥

आप्रातः सायमा च त्वमिह भुवि ययोल्लास्यहृत् स्वं रसार्द्रं
पद्मिन्यां स्वान्तरङ्गातनुरसविसरैः पोषितस्तोषितोऽसि ।
म्लानास्यां तां विलोक्य त्यजसि चलगते निस्त्रपत्वेऽदयत्वे
तत्सीमाभूस्त्वमेव स्फुटमिह कितवस्त्वत्सखः काऽत्र शङ्का ॥ ३० ॥

को वा किं वा कथं वाऽऽचरतु स हि भवेत्तत्फलस्योपभोक्ता
तत्रास्माकं न चिन्ता तनुरपि तदलं भुङ्क्ष्व भोग्यं यथेच्छम् ।
ज्ञातत्वद्रीतिसाराः स्पृश न मधुप नः शुद्धसत्त्वान्तरङ्गा
स्तत्सङ्गी पञ्चमोऽसौ वहति तदघमत्रैवमास्ते स्मृतिर्यत् ॥ ३१ ॥

तावद्धौर्त्यं हि पुंसां चलति यदवधि स्त्रीभिराविष्कृतं न
प्रायस्ता एव धात्रा मनसि विदधता निर्मितं यत्प्रयत्नात् ।
आस्तामसमत्कराच्तच्युत - मतनुसुखाशावशादग्र्यभोग्यात्
तादृक्सम्मीलिता चेद्व्रजसि सरलतां त्यक्तपूर्वस्वभावः ॥ ३२ ॥

त्वच्चित्ते चेद्रसाशा निवसति तदितो गच्छ मल्लीमतल्ली-
मन्यामात्मानुरूपामतनुकुसुमितां वीक्ष्य तत्राऽऽरमस्व ।
अस्मत्पादाग्रदेशे लुठसि किमिति रे दुर्लभे निर्जराणां
दुःसाध्ये यत्प्रयत्नो भवति भुवि महामूर्खतामुख्यहेतुः ॥ ३३ ॥

सद्वंशे छिद्रकारी मृदु - सरल - गुणाम्भोजिनी - मौलिदेशे
भूयः पादप्रहारी जनमलिन - महापानकृच्चाऽसितात्मा ।
येनास्मिन् प्रेषितोऽसि त्वमपरमिह किं ब्रूमहे धन्यवुद्धिः
सोऽस्मिन्नन्योन्यकिञ्चित्कलहनिरसने नारदं किं न युङ्क्ते ॥ ३४ ॥

किं वा संचिन्त्य यातस्त्वमलिवर वनेऽस्मद्वशीकारहेतो-
रायातश्चेज्जनेऽस्मिन्क्वचिदपि विदितो नेदृशस्तत्प्रकारः ।
यन्नामाऽप्यन्तरङ्गं शकलयति महाखड्गधारेव तस्या
गायन् कीर्तिं सपत्न्याः स्फुटकुचघुसृणश्मश्रुगश्रीरुपेतः ॥ ३५ ॥

आस्तां तावत्कृतं ते रुचिररसिकतावर्णनं गानतोऽस्य
ज्ञातोऽस्माभिः स पूर्वं तदनुमतगतेर्धीप्रभावस्तवापि ।
यस्त्यक्त्वाऽत्युत्तमाङ्गी - र्नवसुमलसिता निर्जरैरप्यलभ्या
गत्वा कुब्जां त्रिवक्रामतनुलघुलतां मन्यते स्वं कृतार्थम् ॥ ३६ ॥

सकृदधरेति : १०.४७.१३.

त्रैलोक्याशेषमोहप्रद - पदपरिषन् - मुख्यसाम्राज्यपट्टां
स्वामस्मान् पाययित्वा सकृदधरसुधामत्यजन् मन्तुहीनाः ।
तत्सेवामब्जहस्ता चरति कथमले त्वं च वेत्येव चित्रं
यद्वाऽस्त्येकोऽत्र हेतुर्निखिलमुखगतोऽस्योत्तमश्लोकशब्दः ॥ ३७ ॥

किमिहेति : १०.४७.१४.

कृत्वा दूत्यं कृतार्थं समभिलषसि चेद् द्रव्यमिष्टं षडङ्घ्रे
तद्याह्यन्यत्र याः स्युर्हृतनुरसजुष - स्त्वत्प्रियप्रेमभाजः ।
दीनाः कान्तारभाजो वयमिह वसुमद्भूतिरोधस्थितास्तत्
किं वा ते लभ्यमस्मद्भवति बत मुधा भ्राम्यसि स्वास्यगीतैः ॥३८॥

आकर्ण्याऽनेकदीनावन - विशदतमां कीर्तिमङ्गीकृताङ्गी-
वाराखण्डप्रतिज्ञां भवति मम मनस्तत्पदप्रेक्षणोत्कम् ।
किं चाऽनास्थां श्रियामप्यखिलगुणकलापूर्ण - पर्याप्तिभूमौ
श्रुत्वौदासीन्यमेव व्रजति मधुपते किं करोम्यप्रगल्भा ॥ ३९ ॥

दिवि भुवीति १०.४७.१५.

का वै तादृक् त्रिलोकेऽप्यलिवर भविता स्त्री न वश्याऽस्य भूयात्
का वा तत्रास्मदीया बत परिगणना नात्र वच्मः परं तम् ।

---

१. वसुमद्भूतिर्यमुना तत्तटस्था, वसुमतां भूतिनिरोधस्थिताश्च ।

ब्रूहीत्यङ्गीकृते यश्चरति समदृशैवोत्तमे वाऽधमे वा
तस्मिन्नेवार्थवत्तां भजति निरुपमामुत्तमश्लोकशब्दः ॥ ४० ॥

विसृजेति : १०.४७.१६.

सख्युस्ते मित्रभावः सरलितमनसा नैव कार्यः कृतश्चेत्
पाकस्तस्येदृगेव प्रभवति मधुप भ्रान्तिलेशो न चास्मिन् ।
त्वं चेद्ब्रूष्यस्ति मैत्र्यं मम सततमनेनेति युक्तं तदेतत्
पुंसोर्वा कान्तयोर्वा भवति नहि पुनः पूरुषैर्योषितां तत् ॥ ४१ ॥

कृष्णस्त्वं कृष्णरूपः स च भवति भवान् षट्पदः षट्पदज्ञः[1]
स त्वं पद्मानुरक्तो[2] मधुप सरलसद्वंश[3]जातप्रचारः ।
एवं वां मित्रभावः कथमिव न भवेन्नित्यवर्धिष्णुरस्मा-
स्वास्ते नैकोऽपि योगस्तदिह वद कुतो मित्रभावेन साध्यम् ॥ ४२ ॥

मद्भागर्थाविधान - स्खलदखिलमनःसंशया - स्तच्छयस्थाः
कुर्यां हार्दाशयस्था इव चतुरतया तस्य तद्यात शीघ्रम् ।
यत्प्रेयो मे तदस्यानुमतमिति वृथा कत्थनैः पथ्यभाजो
नैवास्मान्मोहयालं त्वमसि हि मधुपो मध्वरिः स प्रसिद्धः ॥ ४३ ॥

यूयं मन्मित्रभोग्यायतनमिति मयाऽऽलम्बितं दूतकृत्यं
किं नाम न्यूनमस्मिन् सरलितमनसो यूयमेषोऽपि तादृक् ।
एवं चेत्त्वं ब्रवीषि प्रथमगुणिपदे त्वां वयं वर्णयामः
सख्युस्ते चित्रचेष्टाऽऽशयफलितविदस्ता वयं नासि रे त्वम् ॥ ४४ ॥

मृगयुरिवेति : १०.४७.१७.

उक्त्वा योग्योपदेशानतनुसुखकरान्मोक्षयिष्ये स्वभावात्
तं युष्मत्क्लेशसूतेरिति वदतु भवानस्मदुक्तिं निशम्य ।
एतज्जन्मानुगाऽपि प्रकृतिरतितरां दुस्त्यजा प्राग्जनिस्था
सा चेत्किं वाच्यमेषा तव सुहृदि तथा वालिवृ[4]त्ताद्विभाति ॥ ४५ ॥

---

१. भ्रमराः, सन्धि-विग्रहादिषट्स्थानानि जानातीति च । २. कमलं लक्ष्मीश्च । ३. वंशो वेणश्च । ४. वानरविशेषः, वेतिच्छेदः सखी च ।

भव्यं गव्यमहो यथेच्छमनिशं प्रादाय्यमूभिर्ममे-
त्येषाऽस्य स्मृतिरंशतोऽपि न कथं प्रादुर्भवत्यन्तरे।
यद्वाऽनन्त-रसप्रभूतिमचलां [5]गां दातुरप्यस्मरन्
बद्धं प्रत्युत तं चकार बलिमित्यस्य श्रुता प्राक्स्थितिः ॥ ४६ ॥

को विश्वा[7]स्यस्तदन्यो विलसति जगतीत्युक्तिमेतां त्वदीयां
मान्यां लोकत्रयेऽपि स्फुटतरमनृतां वक्तुमीशोऽत्र कः स्यात्।
यस्मिन् विश्वास्यतास्ति त्वदनुमतिमताऽकारि तेनापि चेत्थं
को वाच्यः को न वाच्यः किमपरमथवा दिष्टमस्माकमेव ॥ ४७ ॥

निर्हेत्वन्योन्यपीडाकरणमिदमनार्यं न कार्यं सदाऽऽर्यै-
रेवं जानन् वदंश्चाप्यसकृदतिकृपः शास्त्रविद् वेदविच्च।
सोऽस्मिन्नेवं स्वयं चेच्चरति चतुरधीः कोऽस्ति शास्ता तदन्य-
श्चित्रं वा चित्रगुप्तः स हि तदविषयस्तद्वरं सर्वमेव ॥ ४८ ॥

यदनुचरितेति : १०.४७.१८.

ये त्वेनं समुपासते जहति तेऽप्यागारदारादिका-
नाराद्देष जहावकिञ्चनमती-र्नश्चित्रमत्रास्ति किम्।
तादृग्युक्तमुपासकानुचरणं प्राप्यार्थसंदायकं
प्राप्योऽर्थः स्वयमेव सन्नपि तथाऽचारीति चित्रं महत् ॥ ४९ ॥

वयमिति : १०.४७.१९.

यस्माल्लाभांशलेशो न भवति सुजनैस्त्याज्यमेवाखिलं त-
च्छास्त्रार्थोऽसौ प्रसिद्धस्तदलिवर ततो भण्यतामन्यवार्ता।
एषा भावत्कगोष्ठी जनयति मनसः खेदमस्माकमेवं
वैफल्याच्चेतसस्तेऽप्यलिवर भविता दूतकृत्यस्य खेदः ॥ ५० ॥

प्रियसखेति : १०.४७.२०.

आहूयास्मान्निशायां वनभुवि मुरलीवादनच्छद्मना यः
कस्मात् प्राप्ता इहेति च्छलनपटुमतिः पृष्टवान्नष्टशङ्कम्।

५. भूमिम्। ६. वामनावतारे। ७. विश्वमुखः, विश्वासयोग्यश्च।

अद्यानाहूतयाता यदि मधुपपदाब्जं तदा तादृगर्थं
ब्रूयादेवैष तस्माच्च्यवनमुभयतः स्याद्यदग्रे तदूह्यम् ॥ ५१ ॥

मानो वा नापमानः पदजलज-रजोराजि-रज्यच्छिरोभि-
र्नैवालक्षि क्षणोऽपि प्रभुवदनसमीक्षां विना नैव यातः ।
प्राप्ता कस्मादकस्माद्विरहगतिरिति ज्ञायते नेक्षितेऽपि
दिष्टं वाऽनिष्टमिष्टं फलति फलमिदं विष्टपे स्पष्टमेव ॥ ५२ ॥

का हानिर्वः सतीनामनुपदमिह यच्चित्तवृत्त्या स्वहार्दात्
तेनाखण्डं रतानां स च निजमनसोऽभ्यन्तरे चैवमेव ।
अन्योन्यं नित्यसङ्गो विलसति सुतरां तत्र मे नापमानो
ब्रूतेत्युक्तिं प्रकल्प्योज्जगुरिति मुदितास्त्वं चिरं जीव साधो ॥ ५३ ॥

अपि बतेति : १०.४७.२१.

यथा धास्यति हस्ताब्जं स्वमस्मिन् मूर्धसु प्रभुः ।
तथाऽले कुरु तद्बोधं श्रुतिमञ्जुस्वरोऽसि यत् ॥ ५४ ॥

स्वीयाङ्घ्र्यब्जवियोगदुःस्थमनसा-मासामपास्तांहसां
शेषक्लेशविशेष-शोषणकृते स प्राहिणोदुद्धवम् ।
बाह्यार्थोऽयमिहाऽन्तरस्तु पुरतो वाच्यात्मविद्याधिका-
रायेति श्रुतिबोधितोऽप्यनुपदं द्रष्टव्य एवंविधः ॥ ५५ ॥

जारिण्यो मदनादृताः कथमिमाः प्राप्तात्मतत्त्वाः स्त्रियो-
ऽपीत्यन्तर्भ्रममेष राति भगवद्भक्तो मुधैवोद्धवः ।
संचिन्त्यैव मनङ्गवैभवजुषः श्रुत्यन्तरङ्गास्तदा
प्रोचुस्तं भ्रमरं प्रकल्प्य परमार्थं साधुबोधाय तत् ॥ ५६ ॥

रे सत्तत्त्वमसि भ्रमिष्ठ वितथो बन्धोऽयमात्मस्थिती-
रस्मान् मा स्पृश सद्रजोयुततमोभागै-रविद्योदितैः ।
वृत्तीनां वहतु प्रसादमनिशं सोऽन्तर्नियन्ता प्रभु-
स्तादात्म्यावगतौ च सत्त्वमिति तद्वाच्यं विडम्ब्यं न किम् ॥ ५७ ॥

महावाक्यानुपूर्वीकं पद्यमाद्यमुदीरितम् ।
तत्तत्पदं विभाव्यैवमग्रेऽपीक्ष्यं लघूच्यते ॥ ५८ ॥

मोहोत्पत्त्यैकहेतुः सुरसदनसुधा काम्यकर्मोद्भवा या
तां नो निक्षिप्य वक्त्रे प्रवचनकुशले स स्वयं त्यक्तसङ्गः ।
संसारादत्तदृष्टिस्त्वमिव सुमनसः संजहाति स्म चास्मान्
मायाप्यस्मन्मुखोक्तोत्तमगुणकपदाश्लेषतः श्लिष्यतीशम् ॥ ५९ ॥

कामक्रोधमुखारिषट्चरणभाक् किं स्तौषि शाब्दं मह-
श्चेतोहार्य-निशान्तसंस्थितिजुषा-मस्माकमग्रे मुधा ।
तत्त्वे दृष्टिमनामयेऽतिविमलां धत्स्वाऽऽत्मरूपे भज
स्वेशं वाऽनघतद्गुणौघरसिकः स्वार्थोऽर्थतस्ते ततः ॥ ६० ॥

क्षुद्राः क्षुद्रदृशः स्त्रियः स्युरखिलास्तद्वश्यभूता इति
किं वाच्यं च रमा हि या निजगुणव्याप्तत्रिलोकान्तरा ।
साऽप्यस्यास्ति वशेति तस्य पुरतः का वा गुणैरुत्तमा-
ब्रूमोऽस्मिन् वयमित्यथापि शरणाङ्गीकारपक्षेवराः ॥ ६१ ॥

तत्पादं हृदि वाऽनघे शिरसि वा संधार्य यागैरह-
ङ्कारश्रीभिरलं यदुज्झित-ममत्वाहङ्कृतेरप्यसौ ।
दुष्प्राप्योऽत्र निदर्शनं वयमले हृद्वृत्त्यवेद्यो हि य-
स्तद्वाच्यांशविशेषपोषितमतिस्त्वं चेति किं ब्रूमहे ॥ ६२ ॥

कुर्वन् कर्माऽप्यकर्ता सकलगुणनिधिर्निर्गुणः सन्नपि स्त्री-
वश्योऽप्यस्पृष्टयोषिद्रतिरतुलबली लाघवानूनवृत्तिः ।
निष्पापोऽपाणिपादो ग्रहणगतिकरो धर्मभृद्धर्मभङ्क्ता
तस्यैवं भूरिधर्माञ्छृणु मधुप विरुद्धांस्त्वमस्मन्मुखेन ॥ ६३ ॥

लिखित इव यदास्ते तत्कथार्थोऽयमस्म-
द्धृदयभुवि सदाऽले दुःशकोऽतो विहातुम् ।
त्वमतुलरसकामश्चेद् विरुद्धप्रधानै-
स्तदलमसितसख्यैः पीयतां सत्त्ववृत्त्या ॥ ६४ ॥
( युग्मम् )

दृष्ट्वा बलिं तदुपभुक्तिकृते स्वशब्दै-
रन्यानसौ बलिभुजो ह्वयते कृतार्थः ।

अत्ति स्वयं क्वचिदनत्ति च काकधर्मं
जानन्त्य एवमुपमां ददुरिन्दुवक्त्राः ॥ ६५ ॥

एवं चेत्तत्कथार्थो लिखित इव कुतोऽकार्यसौ स्वीयहार्दे
शङ्केथा नैवमस्ति प्रचुरतररसोऽन्योपकारः सदा नः ।
लेखः केनापि कृत्स्नस्त्वयमिह कलितो नैव तल्लेशभाजो-
ऽप्यानन्दाममग्नचित्ताः कति कति न जनाः सन्ति पश्य त्वमन्तः ॥६६॥

स द्वन्द्वोऽयं विरुद्धोऽपि च यदपि मिलिन्दास्ति लेखस्तथापि
निर्द्वन्द्वं चाविरुद्धं फलति फलमिहानन्दसंसारगर्भम् ।
पश्यास्मल्लेखचित्ताः कति जगति न वा सन्ति सन्तोऽनुभूत-
तादृङ्मुख्यार्थसौख्या सुरतरुचिरमाः पक्षिवद्भिक्षवश्च ॥ ६७ ॥

यद्वाऽस्मद्वार्दवेद्या - मविकलरचिता - मद्भुतानन्तचेष्टां
चापश्यन्तो यथार्थं स्थितिमगुरुदृशः किञ्चिदंशावलम्बात् ।
धन्यंमन्या विहङ्गा इव जडमतयो व्यर्थमुत्सृज्य दीनं
स्पष्टं स्वेष्टं कुटुम्बं कति न परिचरन्त्यत्र मा त्वं तथा भूः ॥ ६८ ॥

कृतकमपि तदीयं चेष्टितं श्रद्दधानाः
किमिति सदिव यूयं दर्शयध्वे मुधेति ।
अतिगहनविचारै - रेभिरस्मन्मनस्थै-
रलमिह हि वदान्यद् यद् द्वयोरिष्टकृत् स्यात् ॥ ६९ ॥

अस्मान् द्रष्टुमुतास्मदुक्तिमनघां श्रोतुं तथाऽस्मन्मन-
स्तात्पर्यं ह्यवगन्तुमुत्सुकमतिर्यस्मादसि त्वं ततः ।
अन्तर्यामि - परेशपूर्णकरुणापात्रं सखे निश्चितं
तन्मान्योऽसि जगत्त्रयेऽपि किमु नस्तत्प्रार्थ्यतामीप्सितम् ॥ ७० ॥

अस्मानाश्रितसद्द्वयश्रिय इह प्रेष्ठेन तेनानिशं
श्रीनाथेन सहाद्य सङ्गमयितुं यत्काङ्क्षसि त्वं हृदि ।
तत् स्यादद्वयभावगर्भ - सुरतावस्थान - मत्युज्ज्वलं
कीदृग् वा कथमित्यले न सुमनो धैर्यं समालम्बते ॥ ७१ ॥

मन्निष्ठाः मत्कृतज्ञा मदनघनरतोत्साहचित्ताः सदैव
मत्प्रीत्यै गोकुलान्तर्विलसिततनवो मत्पदप्राप्तिकामाः।
सद्दास्यः श्रीपतेर्मे यदिह भुवि सदैवास्तु भव्यं तदासा-
मित्यस्मद्वृत्तिभावस्मृतिरपि यदि ते प्रेयसस्तत्कृतार्थाः ॥ ७२ ॥

यावत् सद्द्वैतभावो लसति मृदुपदश्रौतघोषो मनोज्ञो
जिज्ञासोस्तावदेवा - ऽखिलखसुखकरो-ऽखर्वसर्वार्थदश्च।
विज्ञायैवं विदेहस्थितिरपि मनुजः संयतेतास्ततन्द्रं
जीवन्मुक्ताविती माः पितृपदघटितैर्भेदभावं विवव्रुः ॥ ७३ ॥

अद्वैतात् सुखमतिशाय्युपासनाढ्ये-
द्वैते त्वित्यतिविशदं वचोभिरासाम्।
यत्प्राक्तत्सुखमनुभूय तादृशास्ता-
स्तं प्रोचुर्भण सुखदामिहान्यवार्ताम् ॥ ७४ ॥

एवं गोपीभिरुदितैः श्लोकैर्दशभिरीरितः।
दशोपनिषदर्थोऽत्र दिगदर्शि विमृश्यताम् ॥ ७५ ॥
अर्थोऽयं सम्मतः श्रीमद्व्यासस्य च शुकस्य च।
तत्तादृक्पदविन्यासाद्भाति मेऽनीर्ष्यमीक्ष्यताम् ॥ ७६ ॥
गोकुलालङ्कृता दिव्या अथवा दशदेवताः।
जीवमेवं बोधयन्तीत्येवं वा योज्यमादितः ॥ ७७ ॥

उत्फुल्लान्तरपद्मिनीहृदयभूप्राप्तोदयं निर्मलं
श्रीमद्विष्णुपदोच्छ्रितं निरुपमामोदं सुगीतं रसम्।
पातुं सच्छ्रुतिवक्त्रतः कृतमनाः सत्यं द्विरेफो[1]ऽभवत्
सो[2]ऽपि श्रीधरकिङ्करोऽतिरसिको हर्यङ्घ्रिपद्मस्थितः ॥ ७८ ॥

अन्यान् स वृष्णिनिवहानपहाय कृष्ण-
स्तत्रोद्धवं प्रहितवानिति चिन्तयानः।
यत्सत्यमद्धृदयतत्त्वविदः किलैता-
स्तद्द्वारतोऽयमचिराद्भविताऽधिकारी ॥ ७९ ॥

१. भ्रमरः द्वौ रेफौ यस्मिन्सः, श्रीधरकिङ्करपदस्य तथात्वात्। २. उद्धवः।

एवं हि तत्प्रथितमर्थमबाधसारं
जिज्ञासुरात्मनि कृतार्थ इवानुभूय ।
ईशाशयं विशदयन्नवदत् स चोत्क-
स्ताः सर्वकिल्बिषमुषः प्रणयेन योषाः ॥ ८० ॥

तत्प्रेमभावमतुलं भगवत्यवेक्ष्य
सामान्यचित्तमपि सद्रवतामुपेयात् ।
श्रीनाथभक्तिरससंभृतचेतसोऽस्य
चित्तं तथाऽभवदलं किमिवात्र चित्रम् ॥ ८१ ॥

असीममेव तत्प्रेम प्रभौ यच्छ्रवणादहो ।
उद्धवस्यापि यदभूदुद्धवोऽन्यस्य का कथा ॥ ८२ ॥

अहो यूयमिति : १०.४७.२३.

वक्तव्यं किल यन्मयात्र भगवद्धृत्प्रेमसौधस्थितं
तद्वोऽभूदलिकल्पितप्रवचने पद्येऽन्तिमेऽतिस्फुटम् ।
तद्वाच्यं किमितो मयाऽच्युतपदे युष्मन्मनोवन्मनो
युष्मास्वस्य च वर्तते यदभवं प्रेष्योऽहमेवेक्ष्यताम् ॥ ८३ ॥

यत्क्षुद्रवस्तुविवशं क्षणशालि लोके-
ष्वल्पत्वमेत्य भवति क्षणसौख्यभागि ।
तद्वो मनोऽखिलसुखावधिवासुदेव-
रूपं सदाऽजनि कुतोऽपरिपूर्णतेतः ॥ ८४ ॥

यौ भिन्नौ भवतस्तयोर्युवतयः सम्भाव्यते लौकिको
युक्ताऽयुक्तविकल्पना मुदसुदाविर्भावसंवर्धिना ।
ध्यानासादित-तत्स्वरूपमनसां युष्माकमस्याप्यहो
युष्मद्रूपहृदो विभोरिह कथं योगो वियोगोऽथवा ॥ ८५ ॥

दानव्रतेति : १०.४७.२४.

दानव्रताध्ययनमन्त्रतपोजपादि
यस्यां निधाय दृशमत्र जनः करोति ।

---

१. उत्सवः ।

सा भक्तिरच्युतपदा भवतीषु सिद्धा
श्रद्धावतीष्विति किमन्यदिहावशिष्टम् ॥ ८६ ॥

सर्वेति : १०.४७.२७.

तत्सन्देशहरोऽहमस्मि तदिमाः प्रेम्णोपदेश्या इति
गर्वोऽखर्वतरो ममाऽऽस हृदये हे गोपिकाः प्रागिह।
सम्प्रत्युक्तपरात्मतत्त्ववचसां युष्माकमेवोक्तिभि-
र्जातो भूयुपदेशपात्रमहमित्यत्यद्भुतं किं ब्रुवे ॥ ८७ ॥

श्रूयतामिति : १०.४७.२८.

गोप्यो मे हृदयङ्गमा नहि रमा तादृक् सखे तद् द्रुतं
गत्वा तत्सविधे वद स्वसुतवत् पाल्योऽयमस्मद्विधिः।
एवं श्रौतहृदाशयेन हरिणा सन्दिष्टमिष्टार्थकं
यन्मां प्रेषयता न्यवेदि सुदृशो यूयं स्थ तज्ज्ञायताम् ॥ ८८ ॥

भवतीनामिति : १०.४७.२९.

भूतग्रामो भौतिके यत्र कुत्रा-
प्याराद् दृष्टे नास्ति नैवं विभाति।
हेतुस्तस्मिन् कारणत्वं तथा मे
सर्वाद्यस्य स्याद्वियोगः कथं वा ॥ ८९ ॥

यत्त्वहमिति : १०.४७.३५.

सत्यनारतयोगेऽपि यद्वियोगावभासनम्।
तद्बीज जातमद्भक्ति - सुखश्रद्धा-ऽभिवर्धनम् ॥ ९० ॥

यथा दूरचर इति : १०.४७.३६.

यत्प्रीतिर्निरपायिसौख्यजनिका यैर्नित्यमाकाङ्क्ष्यते
कार्यस्तैर्न कदाप्यनादरपदं तत्सन्निकर्षो भृशम्।
यत्स्त्रीणां स्वपतावनारतगृहावासे प्रवासागते
प्रेमोत्साहसमादरोक्तिरचनाभेदो महान् दृश्यते ॥ ९१ ॥

१. वक्ष्यमाणसन्देशविधिः, ब्रह्मा च।

मय्यावेश्येति : १०.४७.३७.

सर्वत्रापि ममाक्षि लक्षयति वो रूपं तथा मे श्रुति-
युष्मन्नाम सकाममेवमखिलं युष्मन्मयं मे मनः ।
तत्सङ्कल्पविकल्पकल्पनमलं संत्यज्य सर्वात्मना
हृत्स्थोऽस्मीति विभावनीयमनिशं यूयं यथास्मिन्मया ॥ ९२ ॥

या मयेति : १०.४७.३८.

यो निर्व्याजमनन्यगोचरचरः संदर्शितो वो व्रजे
निःसीमोत्सव उत्सवान्तर-तिरस्कार-प्रगल्भोदयः ।
नित्यं तत्सुखलिप्सुनात्र हि मयाऽस्मिन्नुद्धवे तद्वचो-
न्यासात्संप्रति वोऽन्तिके हितमिमं जानीत संप्रेषितम् ॥ ९३ ॥

कामिन्यः सन्तु सद्यस्तनसह[1]-जघनाक्रान्तदेहाः सहस्रं
ताभिर्नैकासिका मे क्वचिदपि भवितेत्येवमेवावधेयम् ।
यस्मादेषोऽस्ति सद्यस्तनसह[2]-जघनस्पर्धिरूपस्वभावो
गोपीवित्तापहारीति च सभयहृदो मामवेक्ष्य ब्रुवन्ति ॥ ९४ ॥

युष्माभी रतिसङ्गसङ्गतसुखे घोषे मया क्रीडितं
तत्संप्रत्यपि युष्मदीडितपदे घोषे[3] मया रम्यते ।
क्रीडाऽकारि पुरा सुराधिकरता[4] या साधुवृन्दावने[5]
तां भूयोऽप्यनिवर्तितुं भृशमहं प्राप्तोत्सवः सम्प्रति ॥ ९५ ॥

स्वगोकुलेऽहं भवतीभिरद्धा
सुराधिकाभि[6]र्बहु रञ्जितोऽस्मि ।
ऋणं निराकर्तुमनास्तदेतत्
स्वगोकुले वः किल रञ्जयामि ॥ ९६ ॥

तत्तु मामकमेवास्ति गोकुलं भवदाश्रितम् ।
ममाश्रितं यूयमपि श्रयध्वं नर्मदाश्रितम्[7] ॥ ९७ ॥

---

१. स्तनसहं च तज्जघनं तद्भारवहनादिति भावः । २. सद्यस्तनाः सहजा घनाः । ३. शब्दे । ४. शोभना राधिका यस्मिस्तद्रतं यस्यां सा, सुराणामधिकं रतं रतिर्यस्यां सा च । ५. साधु च तद्वृन्दावनं सत्सङ्गरक्षणे च । ६. देवाधिकाः शोभना राधिका यासु च । ७. नर्मद्भिराश्रितं नेति च्छेदश्च, मदो गर्वः ।

यथोद्धवेन स्वसखेन भूषिताः
कृता भवत्यः स्मरता समागमम् ।
निजोद्धवेनापि सवाचिकेन हि
तथोत्सवश्रीरय - माविधीयताम् ॥ ९८ ॥

कि[1]मन्तरङ्गा किमन[2]न्तरङ्गा
प्रीतिः प्रभौ वः प्रियभावभाजाम् ।
आद्या तु बाह्याङ्गवियोगसिद्धा
परा तु नित्येति कुतो वियोगः ॥ ९९ ॥

भूयोऽङ्गसङ्गतिरनेन सहास्तु नित्य-
मेषोऽभिलाष इह वोऽभिनवो विभाति ।
यस्माद्वयं शृणुम ईशपदेऽनुरक्ति-
र्युष्मत्कृता - ऽसकृदनङ्ग - समागमेति ॥ १०० ॥

तद्वः साङ्गमभूदनङ्गयुतमप्यङ्गाङ्गिभावैरलं
सत्यः स्वार्पणकव्रतव्रजभुवि श्रीशप्रसादार्थकम् ।
आपन्नोद्धवमा च पामरजनं त्रैलोक्यपर्याप्तिभू-
राप्ता कीर्तिरकल्मषोभयविधाऽनङ्गाप्तिसौलभ्यतः ॥ १०१ ॥

भूयो गोकुलवासिनां निजनिज - प्रारब्धकार्यादरे-
ष्वत्यासक्तहृदां न जातुचिदपि प्रीतिः प्रभौ जायते ।
जाता चेन्निखिलानपास्य विषयान् देवोऽपि बद्धादर-
स्तां तत्रोद्धववर्धितां प्रकुरुते स्पष्टं हि युष्मास्विदम् ॥ १०२ ॥

किमु वदामि भवद्विधिवैभवं यदसुरामरदुर्लभदर्शनः ।
श्रुतिविमृग्यपदोऽप्यमलोक्तिभिः श्रमहरो महरोचिरभूत्प्रभुः ॥ १०३ ॥

अङ्गीकृत्य विदेह[3]भावमतुलानन्दावहं योषितो
घोषस्थाः परमास्थया हरिपदे धीप्रस्थिताः सर्वतः ।

१. किमित्यादि उद्धवोक्तिः । २. अनन्ता रङ्गा यस्याः अन्तरङ्गा नेति च ।
३. कामो मोक्षश्च ।

घोषोऽशेषजनश्रुतिस्थितिरभूदेषो - ऽतिसन्तोषकृत्
तद्घोषा न मृषाप्यदो वदत भो घोषोऽयमल्पोऽस्ति नः ॥ १०४ ॥
वृत्तीनां गोकुलोद्यद्विषयरसजुषां धीमतैवं विधेयं
पाराङ्मुख्यं रिपुभ्यो मदनमदमहाक्रोधमोहादिकेभ्यः ।
इत्थं जिज्ञासुभक्तोत्तमजनहितकृत् ख्यापयञ्छ्रौतमार्गं
मन्ये श्रीशो विधायोद्धवमकथयत द्वारमात्मस्वरूपम् ॥ १०५ ॥

एवमिति : १०.४७.३९.

सुरवरगुरुशिष्यगिरा त्यक्त्वा तनुतापमापुरतुलसुखम् ।
उचितमियं यच्छ्रुतिरिह नैवास्याब्रह्मवित्कुले भवति ॥ १०६ ॥

दिष्टयाहित इति : १०.४७.४०.

विज्ञातगोकुल - श्रीक-वृन्दावन - रसंहितम् ।
विज्ञायानन्दितास्ता अप्यूचुस्तद्व्यावहारिकम् ॥ १०७ ॥

यद्यत्क्लेशकृदात्मभक्तिमनसां पुंसामकृत्यान्तर-
स्तत्सर्वं समपाकरोति भगवानित्यर्थसिद्धे सति ।
यद्दैन्यापहृतौ सतामलसतामङ्गीकरोत्यच्युत-
स्तत्तेषां हि विधेयमित्यधिगतः प्रायस्तदर्थोऽमुना ॥ १०८ ॥

वयमुद्धव तत्सङ्गात् पुण्यसीमापदं पुरा ।
विरहादघकोटिस्था अप्यन्याः सदृशो न नः ॥ १०९ ॥

अपि स्मरतीति : १०.४७.४३.

त्वं सत्यवागसि दयाहृदयोऽसि सत्यं
तद् ब्रूहि येन भविताऽखिलदुःखभङ्गः ।
क्रीडाविधौ रहसि वा परिहासकेला-
वस्मत्कथां कथयति क्वचिदप्यनन्तः ॥ ११० ॥

लब्धेऽतिभव्यतर-गव्यरसे यवागू-
सक्तो विविक्तमतिरत्र न कोऽपि भूयात् ।
तत्सिद्धमुद्धव सुलब्धवराङ्गनस्य
नास्मास्वनादरणमस्य किमल्पिकासु ॥ १११ ॥

अकार्यं कारयित्वा नस्त्यक्तवान् सम्प्रति प्रभुः।
न धर्मो नापि भगवानुद्धवैवं दशाऽजनि ॥ ११२ ॥

ताः किं निशा इति : १०.४७.४४.

रासे रसाभिनयशालिनि साह्यकं याः
कृत्वाऽथ सौरतरसेऽपि च सौख्यदात्र्यः।
आसन्निशाः स्मरति ताः किमु यत्प्रसङ्गा-
दस्मत्स्मृतिप्रसर इत्यनुपृच्छ्यसे त्वम् ॥ ११३ ॥

अप्येष्यतीति : १०.४७.४५.

एष्यत्यसावनृतभीति - रुदारचित्तो-
द्रागुक्तिनिर्वहणपूर्ण - दृढप्रतिज्ञः।
आशेयमेवमनिशं सुदिनत्वमह्नां
सम्पादयत्यनुपलं भगवत्स्मृतीनाम् ॥ ११४ ॥

आयातु मा वा गृह्णातु मा वा नामापि नः प्रभुः।
कुशलं ब्रूहि तेनैव धन्यात्मानो भवाम भोः ॥ ११५ ॥

पुनः पुनरिति : १०.४७.५१.

व्रजगतं भृशमीशकृतं पुनश्चरितमद्भुतकृन्मनसः सताम्।
कलयितुं कलितोत्सवमुद्धवं तमभिलक्ष्य जगुः स्मृततत्कथाः ॥ ११६ ॥

अनुगृहीत - तदाननशुक्तिको-
दितरमेशगुण - ध्वनिमौक्तिकाः।
तदनु ताः सुदृशो व्रजतत्कृतं
चरितमस्य हि मूल्यमिवाऽऽर्पयन् ॥ ११७ ॥

छलधृतालपक - वत्ससमाकृतिः
कलित - वत्सकुलान्तर - संभ्रमः।
इह खलो निखिलान्तरवेदिना
विनिहतो निहितश्च कपित्थके ॥ ११८ ॥

इह सुखेन सखे सह गोव्रजै-
र्वनविहारमनेन हि कुर्वता।

कपटकोटि - निविष्टमति - बंकः
शकलितः कलितः किल बालकैः ॥ ११९ ॥
खरगणैः सह धेनुकनामकं
खरमिहैव निहत्य स सत्यधीः ।
अभयमाशु चकार बलाग्रजो
वनतलं नतलम्बित - तालकम् ॥ १२० ॥
समधिरुह्य कदम्बमदम्भतस्तदनु यामुनवारि निपत्य च ।
अकथि भूरि ममर्द स सर्पमित्यपरया परयाऽच्युतचेष्टितम् ॥ १२१ ॥
निशि निकाममुदीक्ष्य तदर्दितान् निजजनान्स्वजनावनदीक्षितः ।
अकृत सोऽद्भुतवन्यहुताशनाशनमितो नमितोऽखिलबल्लवैः ॥१२२॥
जटिनं[१]मेनमधिश्रयताऽमुना रचयताऽद्‌भुतकेलिकुतूहलम् ।
कृतकगोपवपुर्दितिजाग्रणीरिह हतोऽहह तोकवयस्यपि ॥ १२३ ॥
वनमिदं ध्रुवमुद्धव बुद्ध्यतां विपुलवञ्जुल-मुञ्जक-रञ्जितम् ।
इह शिशूनवति स्म पशूनपि स हि महाहिं[२]महाग्निभृशार्दितान् ॥ १२४ ॥
निजविनोदविवादनिनादतः परं[३]ममोहि मनोऽपि यया हि नः ।
मुरलिकाऽद्य तु सा सख उद्धव श्रुतरवा तरवारिसमाऽजनि ॥ १२५ ॥
हृदि निधाय विधिं कमपीष्टदं मिहिरजाऽऽप्लुवने कृतमानसाः ।
पटहठापहृतेरिह वञ्चिताः सशिशुना शिशुनाट्यकृता वयम् ॥ १२६ ॥
अतिकुतूहलशालिहृदाऽमुना द्विज[४]परिग्रहचारु समर्पितम् ।
अशितमन्नमिहोद्धव दर्शितो निजपदा जपदानफलावधिः ॥ १२७ ॥
गिरिसमुद्धवमुद्धव पश्यतां गिरिं न शक्तिरिहास्य हि वर्णने ।
प्रलयकालकलाकलितो रसोऽनं[५]घनतो घनतोऽभिररक्ष नः ॥ १२८ ॥
विधिमना यमुनाम्ब्ववगाहनं निशि चरन् वरुणस्य हृतश्चरैः ।
पितरमेलमनामयमानयन्निमिषतो मिषतोऽस्य जनस्य सः ॥ १२९ ॥
रतिरकार्यमुनेह मया सहोद्धव समुद्धवबन्धविधानया ।
मुखमचुम्बि सुखेन तदाऽर्जितं तदधरादधरामृतमञ्जसा ॥ १३० ॥

१. भाण्डीरवटम् । २. हिमं हन्ति सः । ३. परमिति च्छेदः, अमोहि मोहितम् । ४. यज्ञपत्न्यः । ५. अनघैर्नतः ।

शुभतराभरणैः स्वयमात्मगैर्हरिरसाविह मां समभूषयत्।
सुरतभेदविदा हि मयाऽप्यसावलमभूषि निजाङ्गविभूषणैः ॥ १३१ ॥
बहुवनभ्रमणश्रमधर्मजैर्जलकणैः स यदाऽऽस लसन्मुखः।
सपदि मे परिधानपटाञ्चलव्यजनतोऽजनतोषणमादृतम् ॥ १३२ ॥
क्षणमिहाभिमुखः सुखमादिशत् क्षणममन्तुकमेव तिरोदधे।
इति बहुच्छलकौतुककेलिना सुखलता खलताऽपि च दर्शिता ॥ १३३ ॥
इह हि रासकलाः कलिता इहोद्धव निलायनकेलिरसाकुलः।
भृशमभोजि सखे परमादरादिह रसो हरसोमसुरस्पृहः ॥ १३४ ॥
सुजलकेलिमघादिह सौरतश्रमहरां हरिरेष मुदा तदा।
उपवनस्थलगामपि सा न किं कृतरसा तरसा स्मृतिकृद्भवेत् ॥ १३५ ॥
विपिनसीम्नि कदाचिदवस्थितं पितरमग्रसतोग्रतरोरगः।
तदनु मुक्तिकृता कृपया तदा स हि पदाऽहिपदादभिमोचितः ॥ १३६ ॥
कलितसर्वसुखेन तदोद्धव व्रजजनेन निरीक्ष्य तदद्भुतम्।
समवधार्य जगत्पतिरित्यसावरमुदारमुदा मनसा स्तुतः ॥ १३७ ॥
समपहृत्य निशि क्वचिदङ्गना धनदगोऽथ पलायनतत्परः।
किमु वदामि सखेऽस्य तु दुर्दशां क्व च शिरश्च शिरश्चरसन्मणिः ॥१३८॥
वनविहारकृदास यदा तदा त्रुटिरभूद्युगकोटिसमा हि नः।
तदधुना तु सखा बहुदूरगः कथमितोऽथ मितोऽपि समुत्सवः ॥ १३९ ॥

इह विधाय पुरः करयोर्युगं
धृतवृषोन्नतशृङ्गयुगो हरिः।
असुशकं कृतवान्किल कर्म तत्
त्रिदिविनो दिविनोऽत्र भयापहम् ॥ १४० ॥

समवलोकय तमश्वशरीरिणं
दितिसुतं छलिताखिलगोकुलम्।
लघु जघान सखे स हरिः सता-
मभयदो भयदो दिविषद्द्रुहाम् ॥ १४१ ॥

१. पदेन। २. उदारा मुद् यस्मिंस्तेन। ३. शङ्खचूडः। ४. देवस्य।

इह हि खोद्भय उग्रतराकृति-
निमिषतो मुषिताखिल - वल्लवः ।
समवबुद्ध्य निबध्य च मध्यमं
वसनतः स नतोऽपि हतोऽमुना ॥ १४२ ॥

विधिविधेय - मवश्यविधेयतां
व्रजति तत्र न किञ्चन कारणम् ।
कृतनिमित्त इतः स तु गान्दिनी-
तनुभवो - ऽनुभवोत्सवहार्यभूत् ॥ १४३ ॥

निजजनान् स न पश्यति संश्रितो
यदधिकामधिकाममदां श्रियम् ।
भवति यः शुभदृक् स्वजने जनो
भुवि सदैव सदैवतपूजितः ॥ १४४ ॥

अनवलोक्य जघन्यमुतोत्तमं चरितमात्मगमाचरितं मुहुः ।
त्वदनुरागविभङ्गभयेन यैस्तव दया वद याति न तान्कथम् ॥ १४५ ॥

एवं स्वरूपमवलम्ब्य निजं व्रजेऽस्मिन्
विक्रीडितं सहचरैः सह गोपतोकैः ।
अस्माभिरुद्धव समुन्नतता क्षमा च
तेनानिशं भृशमदर्शि हि किं वदामः ॥ १४६ ॥

सकलमेतदहर्निशमीक्ष्यते न चपलं स्मृतिरुज्झति नो मनः ।
व्यवहृतिः सकलोद्धव तन्मयी परतरा रतरागकथा तु का ॥ १४७ ॥

अलमनेन धनेन जनेन वाऽप्यलमितः सदनस्थितिवाञ्छया ।
अलमनर्थ-कथापथकत्थनैर्हृदयभूदयभूरिह नः स्थितिः ॥ १४८ ॥

अलमलं बहिरन्तरखेदकैरिह परैः कठिनैः सगुणोऽपि सः ।
बहु दुनोति मनांसि करैः शरैर्हिमकरो मकरोर्जितकेतनः ॥ १४९ ॥

अवयवा अपि नामयवाङ्किताऽच्युतपदाम्बुजलालनलालसाः ।
निजगुणाकलनं नहि कुर्वते कृशतमाः शतमारशरार्दिताः ॥ १५० ॥

---

१. व्योमासुरः । २. हृदयभूः कामः तदुदयभूमिः ।

कर्णौ नैव शृणोति जिघ्रति न च घ्राणं न पश्यत्यलं
चक्षुस्त्वङ् न वृणोति नापि रसना स्पर्शं रसं रागतः।
त्यक्तास्तेन वयं समीक्ष्य सकलैरग्राहि मौनं व्रतं
जिह्वैकैव विधिं विधाय पुरतो धिक्कुर्वती चञ्चति ॥ १५१ ॥

साऽऽनन्दं मनसा सहैव निखिलान्यक्षाणि लब्धक्षणा
न्याजग्मुः सविधे तदैव हि हरेः कार्तार्थ्यपूर्तीहया।
गन्तव्यं च कथं मया प्रभुपदं वीरा सुधर्माश्रितो
नैवं सत्रप एक एव हि सखे जीवोऽत्र संतिष्ठते ॥ १५२ ॥

अतिशठो हठकृत्कपटाग्रणीश्चटुनटारभटीस्फुटपाटवः।
यदि पुरा विदितोऽयमिहेदृशो मतिरियं तिरयन्त्यपि नः कुतः ॥१५३॥
व्रजजनैरुपयोग इतो न चेत् किमपि तस्य ततो वरमेकतः।
कथय तं त्वमिति स्वमनःप्रियानवसतो वसतो भवतः पदे ॥ १५४ ॥
त्वयि धृतासुभिराभिरहर्निशं व्यवहृतिः क्रियते निखिलेति तम्।
वद च याहि सकृद् व्रजगान् भवेदपगताऽपगताघकृतघ्नता ॥१५५॥
व्रजजनोऽयमिहास्तु कथञ्चिदप्यनुभवत्ववरं वरमेव वा।
व्रजजनेन विना तु न तद्यशो भुवि भवेद्विभवेऽपि च कीदृशी ॥ १५६ ॥
गीत्यैव मोहो हरिणाङ्गनानां[1] विनिर्मितः केन कुतूहलेन।
तथापि निर्भीकहृदो वसामो वयं यतो रक्षति कृष्णसारः[2] ॥ १५७ ॥
वितीर्णाङ्गरागां स्त्रियं कामतप्तां मुदा काम[3]तप्तां तथा कामतप्ताम्।
चकाराविकारिस्वरूपो रमेशो रमापाङ्गयोग्यामिहा[4]पाङ्गयोग्याम् ॥१५८॥
इत्थं स्वकीर्तिगानोत्थप्रश्नार्थं व्यक्तमाचरन्।
कृत्वा स रमते कुब्जां तादृशीमीदृशीं च माम् ॥ १५९ ॥
( युग्मम् )

त्वमसि सर्वविदाशुकविश्रुतस्त्वमसि सर्वकलाकुशलः सखे।
तदिह नः कथयाद्य हितोल्लसद्धृदयया दयया शं[5]मितो भवेत् ॥ १६० ॥

---

१. हरिणीनां हरिणेति च्छेदश्च। २. मृगविशेषः। ३. कामिति च्छेदः।
४. कामः। ५ शमिति च्छेदः।

त्वमिह तत्पुरतः कथयिष्यसीत्यपगतत्रपमुक्तमशेषतः ।
स्वरुचितोऽनृतवागृतवाग्भव वद नवाऽदं[1]नवायुंपलब्धिदृक् ॥ १६१ ॥
मनसि मानय मानं[2]य हेयतां गदितमेतदसाध्वपि साधुवत् ।
वचनसौष्ठवमिष्टद ते पुरः किमिह का मिहिका[3]द्युतिरुष्णगोः ॥ १६२ ॥
स्त्रीणामेषः स्वभावः प्रियतमचरण-न्यस्तसर्वात्मनां यत्
तद्वाक्यं तच्चरित्रं श्रुतिमितिकलितं शासनं वाऽवधार्यम् ।
सत्येवं जिह्मवृत्तिर्यदि हृदि स भवेत् प्रश्नभागी तदा स्यात्
को वेत्यालोकय त्वं तदनु वद सखे तत्पुरस्ताद्यथार्थम् ॥ १६३ ॥

हे नाथेति : १०.४७.५३.

उग्रसेनं पुरस्कृत्य यो जनावनमानसः ।
तस्य त्वावश्यकी रक्षा गोकुलस्येति कथ्यताम् ॥ १६४ ॥

उवासेति : १०.४७.५५.

इति हि तास्तदशेषमवर्णयन् सकलमात्मचरित्रमपत्रपम् ।
हरिकथामुदितो व्रजवासिनां भृशमयं शमवन्नवसद्व्यथाः ॥ १६५ ॥
भृशमवापि न या सुरपूज्यया परमया रमयाऽरमयाचिता ।
किमिह चित्रमभूद्वसतिर्हि सा सुमनसो मनसोऽस्य सुखावहा ॥ १६६ ॥

यावन्त्यहानीति : १०.४७.५६.

कल्पोऽप्यनल्पः क्षणवद्विधातुर्भवत्यलं यच्छ्रुतिगीततोऽपि ।
द्रष्टुः प्रभोस्तस्य चरित्रमद्धा श्रोतुश्च युक्तः स तथोद्धवस्य ॥ १६७ ॥

सरिद्वनेति : १०.४७.५७.

कुतुकतश्चरतो विपिने स्फुटाच्युतपदे विपदेकविनाशिनि ।
अभवदस्य मनस्यतिभव्यदा विजनता जनताधिकसौख्यता ॥ १६८ ॥
कुशलवाग्भिरलं जनता जगौ
व्रजगता जगतामभयप्रदम् ।
उपसि घोषनिवासिविलासदृक्
सकलया कलयाऽपि युतां स तां[4]म् ॥ १६९

---

१. अन्नम् । २. मेति च्छेदः । ३. मिहिका हिमम् । ४. जनताम् ।

सर्वभावसुखदायिनि कामं गोकुले निवसतोऽपि सतोऽस्य ।
ईषदुन्मदभूत्रमनस्तद्युक्तमेव हरिणाहृतसारम् ॥ १७० ॥
नैव व्याससुतस्य कामकृदभूनन्नाऽप्यसौ स्त्रीस्थितिः
तस्येत्यत्र न चित्रमस्ति यदसौ स्त्रीपुंभिदाशून्यधीः ।
चित्रं तन्मदनागमोहितमतिः स्त्रीजालकान्तस्थितिः
प्राग्वृत्तिस्थितिरास रासरुचिरां गोष्ठीं स शृण्वन्नपि ॥ १७१ ॥
कृष्णाऽलं चलकर्मणा किमपरान्तर्वेश्मगस्तान्मुधा
लोकांस्त्रासयसीह पश्य निभृतामात्मप्रतिष्ठामहो ।
एवं स्वप्नवचो निशम्य भगवन्मातुः सुधीरुद्धवो
वेदान्तार्थकमाकलय्य मनसा तुष्टाव तां विस्मितः ॥ १७२ ॥

दृष्ट्वैवमादीति : १०.४७.५८.

प्रतिदिनमिति भूयो भिन्नभिन्नानि तेषां
यदुपतिगुणगीतोल्लासिकृत्यानि वीक्ष्य ।
प्रतिपलमतुलं स प्राप सौख्यं विधेर-
प्यतिदुरधिगमं यच्चाश्रुतं निर्जराद्यैः ॥ १७३ ॥

एता: परमिति : १०.४७.५९.

धन्येयं धरणी ततो व्रजवनी तत्रापि तद्वासिन-
स्तत्राप्यच्युततात्त्विकामृतजुषो योषा विशेषादिमाः ।
यासां स्वैरविहारवाक्सृत-सुधाधारामपारामिमां
पातुं सच्छ्रुतिकस्य तत्र भवतो जाता श्रुतिः सस्पृहा ॥ १७४ ॥
सत्यः सत्यमुखोऽस्ति गोकुलसमो नास्तीति वैकुण्ठतां
वैकुण्ठोऽप्युपयाति याति रजताद्रिश्चापि दुर्वर्णताम् ।
के वाऽन्ये पुरतस्तपोजनमहर्लोकाः स्युरस्य ध्रुवं
यन्निःसीममहो महोत्सवपदं यस्मिन् स्वयं क्रीडति ॥ १७५ ॥
ग्रामोऽयमल्प इति जल्पतु कोऽप्यनल्प-
दृग्वीक्ष्य गोकुलमनन्तरसावभासम् ।

---

१. सत्यं शपथो मुखे यस्य, पक्षे सत्यशब्दो मुखे प्रारम्भे यस्य ।

ब्रह्माण्डगोल - मिदमाकलये - ऽकुमध्यं[1]
विश्वम्भराश्रयतया यदिदं चकास्ति ॥ १७६ ॥

यल्लोचनं जगति सर्वशिरोभिवन्द्य-
चन्द्रोल्लसन्मृगदृगञ्चलजित्वरं च ।
पादः पितामहजनुर्गृहपद्मजेता
ताः सत्य इत्यनुपमाः किमितोऽपि वाच्यम् ॥ १७७ ॥

क्वेमाः स्त्रिय इति : १०.४७.६०.

कान्तारतस्थितिरतीव मनोज्ञसौख्या
भावानुभावविभवा - ऽनुभवप्रभावा ।
या शास्त्रमात्रविदिता सुरनार्यवेद्या
साऽऽसु स्फुटेत्युचितमच्युतभोगभाक्त्वम् ॥ १७८ ॥

नायं श्रिय इति : १०.४७.६१.

सन्तु स्त्रियोऽप्यतितरामपराः सुरूपाः
कामं रमाऽपि चरमायतनं सुखस्य ।
श्रीकृष्णहार्दपद[2] - मुख्यसुखानुभूते-
रेताः परावधिपदं त्वपरा न कापि ॥ १७९ ॥

यच्चिन्तनाय मुनयः सुचिरं यतन्ते
धात्रादयश्च विबुधाः स हि पद्मनाभः ।
यच्चिन्तनाञ्चितमना मनुते कृतार्थ-
मात्मानमित्यनुपमत्व - मसीममासाम् ॥ १८० ॥

आसामहो इति : १०.४७.६२.

स्फुटं निखिलयादवेष्वहमिहैक एव प्रियः
प्रभोरिति जगत्यभूत् स्फुटतरोपकाराद्यतः ।
सुपार्षदवरान्तरैरपि न वेद्यमद्यापि य-
च्चरित्रसुखमुत्कटं स्फुटमसीममासीन्मम ॥ १८१ ॥

---

१. कुत्सितमध्यं नेति, पक्षे कुकारशून्यमध्यम् । २. प्रेमरूपं वस्तु ।

गेयं हर्यभिधानमेव सततं ध्येयं च रूपं प्रभो-
र्देयं विप्रमुखेऽन्नमुत्सुकधिया पेयं च गीतामृतम् ।
जेयं शत्रुबलं सदैव सुकृतं चेयं वचोऽन्यासुखं-
हेयं नेयमशेषमायुरिह च स्थेयं समाजे सताम् ॥ १८२ ॥

भगवद्भक्तपद्रेणुस्पर्शो तृणजनुर्वरम् ।
तदभावे न वैरञ्चमपीत्यूचे स तत्क्षमम् ॥ १८३ ॥

वन्दे नन्देति : १०.४७.६४.

विश्वं विभर्ति निखिलं ह्युदरे य ईशः
तं चात्मनीति सततं दधतीह गोप्यः ।
वीक्ष्येति तन्निखिलसन्नतिपुण्यलिप्सु-
स्तत्पादरेणुमसकृत् प्रणनाम किं सः ॥ १८४ ॥

निश्चिन्वन्नेवमैशं स्थलमिह भगवत्क्रीडिताङ्कं च पश्यन्
कुर्वन् वृत्तिं स्थिरां स्वां तदुदितकुशलप्रक्रियार्थं विवृण्वन् ।
शंसन् भाग्यं स्वमासामपि विधिमतुलं वर्णयन्नुद्धवोऽसौ
रेमे योगीव तस्मिञ्जनमजनमना नन्दयन् मोदमानः ॥ १८५ ॥

तं निर्गतमिति : १०.४७.६६.

ये सर्वदैव भगवत्पदपद्मसक्ता
येषां च सन्ततमनन्तसुखानुभूतिः ।
तेषां सदोद्धव सहस्थितिरत्र युक्ता
युक्ता च तन्मुखत ईशपदेऽर्थनाऽपि ॥ १८६ ॥

मनस इति : १०.४७.६७.

मनसा वचसा च वर्ष्मणाऽपि भगवत्पादयशःप्रणामभाजाम् ।
रतिरीशपदानुगेति सारो भृशमेकः कथितः शृणूद्धव त्वम् ॥ १८७ ॥

कर्मभिरिति : १०.४७.६८.

सर्वांशतोऽपि वृत्तिः श्रीकृष्णे निर्व्याजमस्ति नः ।
सर्ववित् सर्वगः साक्षी स एवात्रेत्यलं गिरा ॥ १८८ ॥

त्वत्पादार्पितवृत्तीनां गवां तद्रक्षिणामपि ।
समजश्च समाजश्च कुशली त्वत्प्रसादतः ॥ १८९ ॥

प्रभुरसि निखिलानां त्वं नियन्ता खलानां
शरणमनुजरक्षादीक्षितः सद्दयार्द्रः ।
शरणपदमुपेता मैत्र्यभाजः सदस्या
वयमपि कथनीयं वाचिकं तूद्धवैतत् ॥ १९० ॥

एवमिति : १०.४७.६९.

श्रीशप्रेरणयैव गोकुलरतिः सर्वोऽपि जन्तुर्भव-
त्येकस्तत्र विशेष एष यदसौ सद्भक्तियुक्तो भवेत् ।
तद्व्यक्लेशमवाप्य तत्र वसतिं तत्प्रीतिमापादयन्
भूयः श्रीशपदैकदृग्भवति भुव्येतत् स्फुटं ह्युद्धवे ॥ १९१ ॥

यन्नामश्रवणादपास्य निखिलं दुःखामयौघं पुमा-
नस्यां नित्यसमुत्सवो भुवि भवत्यापूर्णकामो भृशम् ।
स श्रीशोऽभवदन्तरे बहिरपि ह्येधोद्धवालङ्कृतो
यद्वृत्तश्रवणादिति स्फुटमसौ तत्पुण्यविज्ञापरः ॥ १९२ ॥

कृष्णायेति : १०.४७.७०.

भक्तिप्रियो हि भगवानेतद्वाक्यं परिष्कृतं ददता ।
तद्भक्तिवस्तु हरये तेनोपायनचयं तदा राज्ञे ॥ १९३ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि-कविवर-हरिसूरिविरचिते
भक्तिरसायने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## ॥ अथ अष्टचत्वारिंशोऽध्यायः ॥

अथ विज्ञायेति : १०.४८.१.

यः पूर्णकाममिह मां मनुजो निजान्तः
संचिन्तयेदनुदिनं मदनारतात्मा[1] ।
तत्सद्म सोद्धवमहं[2] प्रविशामि भूयो-
ऽनाहूत एव जगतीत्यकृत स्फुटं सः ॥ १ ॥

प्राग्वागाश्रुतमर्थिनेऽर्थमपि चेद्दास्ये न दासाय त-
द्वाणी स्याच्छ्रुतिरूपिणीव रमणी क्षोण्यां हि गौणी मम ।
इत्यभ्यन्तरचिन्तनो निजवचःप्रामाण्यनैपुण्यधीः
कामं पूरयितुं तदीयमगमत् सन्मन्दिरं सोद्धवः ॥ २ ॥

परिहासवचोऽपि नानृतं तन्मम मा भूदिति चिन्तयन् स तस्याः ।
अगमद् गृहमन्यथेन्दिरा यत्पदमायाति कथा तु तत्र काऽस्याः ॥ ३ ॥

निजाङ्गरागेण मदङ्गमर्चितं स्त्रियाऽनयाऽनङ्गधियोज्ज्वल[3]श्रिये ।
न चेदहं तां प्रददे कृतघ्नतेत्यालोचयँस्तत्प्रियमिच्छति स सः ॥ ४ ॥

नैवादत्तं सिद्ध्यति क्वापि भूमौ एतद्वाक्याद्दत्तमर्थं प्रसूते ।
नाहं तच्चेदप्यमुष्यै प्रदद्यां तन्माहात्म्यं मे किमित्येतदैच्छत् ॥ ५ ॥

वासः कुविन्देन सुमं सुदाम्ना तथाऽनया चन्दनमर्पितं मे ।
कृतार्थतां तौ नयता मयाऽस्याः कार्येष्टसिद्धिस्त्विति किं तदैच्छत् ॥ ६ ॥

भुजङ्गशेखर[4]स्त्वं मय्युपान्तेऽस्मिन्न संभवेत् ।
इति रामं विहायेशः सोद्धवस्तद्गृहं ययौ ॥ ७ ॥

पान्थानां त्वद्गृहं कुब्जे भवत्येव विराम[5]भूः ।
इति स्मरन् स्ववाचं स विरामोऽगमदच्युतः ॥ ८ ॥

---

१. मयि अनारतचित्तः मदने आरतचित्तश्च । २. यादवविशेषः उत्सवश्च । ३. शृङ्गाररस. निर्मला च । ४. जाराः सर्पाश्च । ५. विगतरामा विरामश्च ।

अभिरामः प्रकृत्याऽहं सरा[1]मोऽप्यनया युतः ।
स्यामेव प्रकृतेऽपीति तमुपेक्ष्यागमत् प्रभुः ॥ ९ ॥
अबलोत्सङ्गरङ्गोऽद्य वर्तते न तु पूर्ववत् ।
चिन्तयन्निति किं श्रीशः सोत्सवो ह्येक आययौ ॥ १० ॥
युक्तमेव विना रामं ययौ कुब्जागृहं प्रभुः ।
यत्तत्केलौ शास्त्रसिद्धं गुरुसान्निध्यवर्जनम् ॥ ११ ॥
अशेषसुखमेवास्यै देयं सम्प्रति कामगम् ।
अस्तीत्युत्सवसंयुक्त - स्तादृग्रूपतयाऽभ्यगात् ॥ १२ ॥
विदिताशेषघोषस्थ - योषिद्वृत्ते विशेषतः ।
नोद्धवे वञ्चना युक्तेत्यागात्तेन सहाच्युतः ॥ १३ ॥
उत्सवेन विना नैव शोभतेऽतनुसङ्गरः ।
तत्कामस्तद्गृहं श्रीशः सोद्धवो युक्तमित्यगात् ॥ १४ ॥
सर्वापि भूः सोद्ध[2]वाऽभून्मयि शत्रुविनाशिनि ।
कथमेतद् गृहं तादृङ् नेति तत्सहितोऽभ्यगात् ॥ १५ ॥

महार्हेति : १०.४८.२.

भावी प्रसादो यन्नैपस्तद्धामनि सुधोज्ज्वले ।
युक्ता सुवर्णसद्रत्नमुक्तानामनिशं स्थितिः ॥ १६ ॥

तथोद्धव इति : १०.४८.४.

योऽस्मिन्नुत्सवबोध्यतामधिगतो यः स्पृह्यमानो जनै-
रानन्दः सहि तुच्छमेव भवति श्रीशेक्षणानन्दतः ।
आसीत्तत्र स उद्धवः सुहृदपि श्रीशाश्रितादासनात्
तस्माद्यद्बहिरेव तेन समभूद् व्यक्तार्थमुक्तं वचः ॥ १७ ॥
प्रभ्वासनं सर्वशुभप्रदं सदा चकास्त्यतस्तत्र किमन्यगोत्सवैः ।
विमृश्य संस्पृश्य तदासनं तदा स उद्धवो युक्तमधिश्रितोऽवनिम् ॥ १८ ॥
यत्राद्धा राजते श्रीमान् मूर्तिमान् परमेश्वरः ।
प्रासादस्तद्गृहं युक्तं तदुर्वी लसदुद्धवा ॥ १९ ॥

---

१. सस्त्रीकः रामसहितश्च । २. सोत्सवा ।

शयनमिति :

मुकुन्द गोविन्द विधीड्यपाद निजेष्टदाऽऽनन्दपदेति भूयः ।
विलोक्य दान्तां स्वपदालिमीशः शान्तः[1] क्षमं दान्तपदस्तदासीत्[2] ॥२०॥

शान्तत्वं दान्तत्वं संरक्ष्यैवात्र सर्वविषयेषु ।
व्यवहर्तव्यं व्रतिनेत्यासीदीशः स दान्तपर्यङ्के ॥ २१ ॥

आहूयेति : १०.४८.६.

मा भवत्वत्र मे कर्माऽवैधं विधिकृतस्तुतेः ।
इति तत्सङ्ग्रहं चक्रे पाणिग्रहणपूर्वकम् ॥ २२ ॥

अविवाहितः[3] प्रभुरसौ व्रती कथं तद्व्रतोऽजनीत्येशा ।
शङ्का सूर्यसदृशां[4] विचारदृष्ट्या[5] विवाहितः[6] सततम् ॥ २३ ॥

अरमत कुब्जायां यद्विहाय गोपीस्तथा स्त्रियोऽप्यन्याः ।
तत्क्षममाप्राग्जननं भरतागम[7]निपुण - बुद्धिरियमेव ॥ २४ ॥

दत्तोङ्गरागमिषतो ध्रुवमेतयाऽस्मै
प्राग्जन्मसंस्थिरपदः स्वकराग एव ।
यस्मादुभावपि विभावनया व्यभातां
प्रीतावदभ्रभरतागम[8] - भावगर्भौ ॥ २५ ॥

अवयवसरला भवती सरला भवती मया कृता कृतिना ।
नेतो गोप्योऽपीना गोप्योऽपीनोदरि प्रकारोऽयम् ॥ २६ ॥

स्युस्ता भवतीं दृष्ट्वा मत्सरलाभादरारमाभीर्यः ।
विरलाऽपि त्वं सरला मत्सरलाभादलं कृतास्यधुना ॥ २७ ॥

यया कयापि वेच्छया जगत्सु योऽपि कोऽपि वा
चिरन्तनस्तवाञ्चितं चिरं तमच्युतं भजेत् ।

---

१. शान्तियुक्तः शकारान्तश्च । २. दन्तनिर्मितपर्यङ्कः पदं स्थानं यस्य ।
३. सूर्यः धृतः विवाहितो नेति च । ४. सूरयश्च आप्तदृशश्च सूर्यनिहितदृशश्च ।
५. विवेकः, विना गरुडेन चारो गतिर्यस्य स च । ६. गरुडवाहितः जातविवाहश्च ।
७. रामानुजः, नाट्यशास्त्रं च । ८. अदभ्रश्चासौ भरतागमश्च अदभ्रा भा यस्य स चासौ रतागमश्च ।

तदर्थितार्थमुज्झितापरार्थ एत्यसाधय-
त्ययं किलेत्यभूत् स्फुटं तदुत्कटेष्टपूरणात् ॥ २८ ॥

एकेनाम्बरतः परेण सुमतश्चान्येन सच्चन्दनात्
सन्तोषं गमितोऽदिशं सुरवरालभ्यं हि तेभ्योऽर्थितम् ।
साङ्गोपाङ्गमदर्चनं विदधते पुंसे ददास्यत्र का
शङ्केति प्रभुराशयं विशदयंश्चक्रे कृतार्थां सताम् ॥ २९ ॥

सानङ्गतप्तेति : १०.४८.७.

उग्रतां[1]पापहरणं धर्मं स्वीयं च वंशगम् ।
वीक्ष्य युक्तं चकारास्याद्व्यं द्विजकुलाश्रितः ॥ ३० ॥

अनङ्गदानेन तदङ्गतापमनङ्गतापं च निजाङ्गसङ्गात् ।
सलीलमस्मिन्हरताऽच्युतेन व्यबोधि सर्वं मम कृत्यमीदृक् ॥ ३१ ॥

कुब्जाऽपि सा ककु[2]ब्जानिवन्दिताङ्घ्रेरनुग्रहात् ।
ऋज्वीभूत्वा चकारर्ज्वीश्चित्रं वक्रास्तु गोपिकाः ॥ ३२ ॥
युक्तं सा सरलीभूय निन्ये गोपीः स्ववक्रताम् ।
लघुत्वं च गुरुत्वं च स्वस्यां तासु च जानती ॥ ३३ ॥

सैवमिति : १०.४७.८.

सकलार्थदमच्युतमवाप्य कुब्जा ययाच यत्कुमतिः ।
सद्[3]रतोदयसौख्यं ततः स्फुटाऽस्यां हि मन्थ[4]रावगतिः ॥ ३४ ॥

प्राप्याप्यनङ्गसुख - मीशपदप्रसादाद्
गन्धं न वेद तदनङ्गसुखस्य कुब्जा ।
लब्धात्मरूपमपि वेद न चात्मरूपं
तद्वृत्तमास मुनिचित्रकरं क्षमं तत् ॥ ३५ ॥

निर्यत्नतोऽखिलेऽप्यर्थेऽनुकूले प्राणिनामिह ।
प्राक्चेतोजातसंस्करात् प्रवृत्तिः सुदृढाद् ध्रुवम् ॥ ३६ ॥

---

१. शङ्करतापहरणम्, उग्रता च पापं च तयोर्हरणम् । २. ककुब्जानयो दिक्पालाः । ३. सतीभावस्य स चासौ रतोदयः, संश्चासौ भरतोदयश्चेति च । ४. दशरथदासी मन्दा च ।

आहोष्यतामिति : १०.४८.९.

मदाशया पद्मसुपैति षट्पदो
मुहुर्मुहुस्तद्वदिहैतु माधवः।
इति स्वचेतःकृतनिश्चया हि सा
वव्रे वरं काममदश्रसौख्यदम्॥ ३७॥

अङ्गरागार्पणमिव कृतं तेऽङ्गसमर्पणमम्।
अनङ्गरागाऽनङ्गस्था[3] जाताऽहमिति किं ब्रुवे॥ ३८॥

तस्यै कामवरमिति : १०.४८.१०.

यदा ते सङ्कल्पो रतिविषयकस्तत्क्षणमसौ
समेत्यारात् कामस्तव सुखकरः स्यात् प्रियतमे।
अहं वा तद्रूपः सुरतसुखदः स्यामिति वरा-
शयो भाति श्रैशो ह्यपुनरनुयानात् सुविशदः॥ ३९॥

आकल्पानुभवो मृकण्डतनयस्याऽऽसीद्यथैकक्षणे
देवर्षेरुत षष्टिवत्सर - ऽमिताहर्भानमेकक्षणे।
तस्यास्तद्वदनेकवासरनिजस्थित्यर्थनायाः कृते
मन्ये कल्पितवाँस्तदैव स तथा वासं स्वमुक्तोक्तितः॥ ४०॥

विद्यामासाद्य हृद्यां गुरुमुखकमलात् सार्थकं ब्रह्म नित्यं
बुद्ध्वा चाधाय शुद्धं व्रतततितिलकं ब्रह्मचर्यं सदार्यम्।
स्वायत्तीकृत्य सर्वा अपि विषयजुषो देवता गोकुलस्थाः
कुर्यात् कर्माविशङ्कं सदसदपि ततो नाश्रितः स्यात् फलेन॥ ४१॥

अधीत्य विद्यां धृतसद्व्रतेन हि
वशीकृताशेष - सुगोपयोषिता।
स्वधामभाजा परमात्मना त्विदं
स्फुटीकृतं कामविशेषसेवनात्॥ ४२॥

(युग्मम्)

१. मदस्याशा ममाशा च। २. अङ्गरागशून्या, कामरागा च। ३. कामस्था अङ्गस्था नेति च।

स्वधामाऽनुवृत्तिं विचिन्त्यैव भूयो
विधेयो विधेयो बुधेनाऽङ्गभोगः ।
नभोवन्न भोगैस्ततो युज्यतेऽसा-
वितीह स्वगेहानुयानादबोधि ॥ ४३ ॥

अक्रूरभवनमिति : १०.४८.१२.

कामालम्बनमन्तरे समुदितं प्राक्कर्मपाकेन चेत्
कर्तव्यं तु तथा यथा न पुरतः क्रोधोदयः स्यात्क्वचित् ।
कुब्जादत्तनिजाङ्गरागफलकं कामावलम्बं प्रभुः
कुर्वन्नेवमबोधयन् निजजना - नक्रूरधामोन्मुखः ॥ ४४ ॥

हिंस्रं कंसमपास्य यत्कृतमिह त्राणं स्वकानां मया
नैतद्विस्मयकृद् भवत्यखिलगो मार्गोऽस्त्ययं यत्स्फुटः ।
मुख्यं कार्यमुरीकृतात्मजनुषस्त्राणं सतां मेन चे-
ज्जातं किं विहितं तदेत्यरमगात् तत्कार्यदृक् तद्गृहम् ॥ ४५ ॥

असति सति च कर्मण्यक्रमाद्वाऽभ्युपेते
हितदृगिह विदध्यात् प्रागसत् सत्तदूर्ध्वम् ।
प्रभुरिति शुभदर्शी दर्शयन् भव्यमार्गं
किमगमदथ कुब्जागेहतो - ऽक्रूरगेहम् ॥ ४६ ॥

नैवं चेत्प्राक्प्रतिज्ञाता - ऽक्रूरसद्मसमागमः ।
ततः कुब्जेक्षणः कुर्यात्सत्यवाक् कथमीदृशम् ॥ ४७ ॥

( युग्मम् )

नीतोऽनेन सहाबलाभिरखिलः कालः पुरा गोकुले-
ऽभूत् सम्प्रत्यपि पुंश्चलावशमति-स्तन्मत्स्थभाराहृतेः ।
नास्त्यस्य स्मृतिरित्युदासितमना मा भूदसावित्ययं
निन्ये तं सहसोत्सवं गृहमनालस्यप्रकाशाय किम् ॥ ४८ ॥

भूभारक्षपणं तथा बहुविधान्यन्यानि कृत्यान्यपि
कर्तव्यानि मयाऽनुसृत्य सरणिं भूलोकसाधारणीम् ।

रामोऽयं तु तमोमयोऽवनिभरक्लान्तो भवेत्साहसी
तन्नात्रोचितमित्यमुं किमकरो - दक्रूरधामाश्रितम्[1] ॥ ४९ ॥
दुर्वानल-जित्वर-स्मयभृता तेनाऽन्धजातेन चे-
न्नीता अप्यवमानितापदममी कार्यं किमस्मन्मुखैः ।
इत्यक्रूर-कुतर्किताऽपहृतये शक्तोऽस्मि तादृक्प्रती-
कारेऽपीति विबोधयन् स सबलस्तद्गेहमागात् प्रभुः ॥ ५० ॥
न राजकार्यं कुर्वीत पूर्वजानुमतिं विना ।
तद्युक्तमेव तत्कार्यस्तद्गृहं साग्रजो ययौ ॥ ५१ ॥
कार्येऽस्मिन्नपरोक्षतामुपगते संचिन्तयेच्चेतसा
स्यात् प्राक्कृत्यमपीदृगेव बहुधाऽस्याऽधोक्षजस्येत्यसौ ।
इत्थं प्राकृतसद्विगीतचरिते रामो हि तां गर्ह्यतां
निर्मार्ष्टुं प्रभुरभ्यगात् सह तथा कार्याय रामेण सः ॥ ५२ ॥
प्रभु-मन्त्रोत्साह-शक्तिसाहित्यमचलं मयि ।
इति किं दर्शयन्नागात् सबलः सोद्धवः प्रभुः ॥ ५३ ॥
यदस्मिन् भुवने हि स्यादक्रूरभवनं सदा ।
सबरः सोत्सवस्तत्र व्रजामीति विबोधितम् ॥ ५४ ॥
स तानिति : १०.४८.१३.
दृष्ट्वाऽऽगतं धाम्नि यदूत्तमं तम-
स्तमोजसा स्वेन हरन्तमच्युतम् ।
ससंभ्रमाभ्युद्गमनादिना समु-
त्सवेन युक्तं स पुरस्सरोऽभवत् ॥ ५५ ॥
कथञ्चिदपि हृद्गृहे स्फुरति यस्य नारायणः
स चाप्यतुलमश्नुते सुखमसौ तु धाम्नि स्वके ।
समुद्धव-बलश्रियं स्वयमुपागतं चक्षुषा
व्यपश्यदिति साधु वाऽभवदनीदृगानन्दभाक् ॥ ५६ ॥
ननामेति : १०.४८.१४.
विज्ञाय लोकोपकृतिस्वभावाऽऽविष्कारतोऽनेकधृतावतारम् ।
अमेयमोदातिभरेण निम्नं मनस्तदासीन्नमनानुकूलम् ॥ ५७ ॥

---

१. अक्रूरं सौम्यं धाम तेजः, अक्रूरगृहं च ।

अङ्गीकृताखिलजनानुकृतेरमुष्य
नारायणस्य जगदादिगुरोरपीह।
तातात्तभावकलिते गुरुतामुपेते-
ऽक्रूरेऽभिवादनविधेरुचितः प्रकारः ॥ ५८ ॥

भक्तेष्टानुग्रह - त्राण - दया - दाक्षिण्य - दीक्षितम्।
भक्त्यानन्द - रसस्रोतः - स्नातचेता - स्तमार्चयत् ॥ ५९ ॥

पादावनेजनीरिति : १०.४८.१५.

उग्रो[1] दधार यन्मौलावक्र[2]रगुणशालिनि।
तत्तीर्थं युक्तमद्धाऽसावक्रूरः शिरसाऽवहत् ॥ ६० ॥

अर्चित्वेति : १०.४८.१६.

पादाम्बु शिरसि न्यस्य शिरोऽन्यस्य पदाम्बुजे।
व्यबोधि तेन कृष्णाय पादतादात्म्यमात्मनि ॥ ६१ ॥
सर्वतोऽप्यधिका प्रीतिरस्योर्वं[3]शे विभाति यत्।
तत्तत्प्रीतिमना युक्तं स स्वोरौ तत्पदं न्यधात् ॥ ६२ ॥
गर्भितं रसमादातुं जाततृष्णः स भक्तिमान्।
युक्तं चक्रे तत्पदाब्जमर्दनं सेवनच्छलात् ॥ ६३ ॥

दिष्ट्या पाप इति : १०.४८.१७.

सुखतोषाविर्भावो भवति यथा क्लेशदुःखदापगमात्।
न तथाऽन्यत इति तादृक् स कंसहतिसुखमवर्णयत्प्रथमम् ॥ ६४ ॥

आत्मसृष्टमिति : १०.४८.१९.

ज्ञातस्त्वं स मया परः प्रकृतितो यो वेदमृग्यः सदा
हृष्यन्मानसयोगि - हंसहृदयानन्दप्रदा - ऽङ्घ्रिस्त्रुजः।
साक्षी यश्च चराचरस्य जगतो यस्तन्मयस्तद्गत-
स्तद्बाह्योऽपि तदीयधर्मरहितः सच्चित्सुखात्मा विभुः ॥ ६५ ॥

---

१. शिवः। २. चन्द्रः। ३. वंश्ये ऊरुप्रदेशेन च।

स त्वं प्रभो इति : १०.४८.२४.

यः सत्यव्रतरक्षिताऽचलधरः पृष्ठे धराधारको
दन्ताग्रे च कयाधुजाऽवनपरो वैरोचनेर्याचकः।
राजन्यान्तकरश्च यो दशमुखध्वंसी स एवाधुना
सञ्जातो मनुजाकृतिर्निजजनत्राणाय जाने भवान् ॥ ६६ ॥

यत्पादतीर्थमृषिभि - र्विधि - शङ्कराद्यै-
र्देवैः शिरस्यनिशमच्युत धार्यते सः।
त्वं यत्पदाग्रनतमौलिरिहासि नूनं
तेऽमो वयं नहि कथं भुवि भूरिभागाः ॥ ६७ ॥

अद्येशेति : १०.४८.२५.

न केवलं वयमहो सुखशेवधिभूमयः।
किन्तु नः सकलान्येव स्थावराणि चराणि च ॥ ६८ ॥

युक्तमेतद् गृहं तेऽद्याऽरुणपादश्रिया प्रभो।
हृद्यामन्वर्थिकां प्राप्तं निशान्तपदवाच्यताम् ॥ ६९ ॥

निस्तमस्कमिदं गेहं समवेक्ष्य विचक्षणः।
को वा न तर्कयेदर्कं त्वयि मध्यनिवासिनि ॥ ७० ॥

कः पण्डित इति : १०.४८.२६.

अनाहूतोऽपि भक्तेष्टदृग् यो भक्तगृहं प्रभुः।
समेति तं विहायान्यं याति यः खर एव सः ॥ ७१ ॥

दिष्ट्येति : १०.४८.२७.

मायामपारविषयां विषमावगाहां
मोहात्मिकामपनुदाऽनुपदं दयाब्धे।
सा चेत्तथाऽस्तु धनबन्धुसुहृत्प्रियाप्त-
बुद्धिर्यथाऽत्र भविता त्वयि सर्वदैव ॥ ७२ ॥

---

१. मत्स्यादयोऽवतारा ज्ञेया। २. प्रह्लादः। ३. अरुणा चासौ पादश्रीः, सूर्यकिरणश्रीश्च। ४. गृहं प्रातःकालश्च।

इत्यर्चित इति : १०.४८.२८.

एवं सम्प्रार्थयन्तं प्रणुतिभिरमलं प्रेमपर्याप्तिभूमि-
मक्रूरं तं निरीक्ष्य स्फुटतरमपरं वक्तुकामं स्वरूपम् ।
व्यक्तीभावो न योग्यो धृतमनुजगतेः स्वस्वरूपस्य सम्प्र-
त्येवं संचिन्त्य लोकोचितपथमुररीचक्र ईशोऽखिलानाम् ॥७३ ॥

यदपाकृतिरर्थ्यतेऽमुनाऽस्य स तु मोहोऽद्य ममास्ति वर्धनीयः ।
भुवि भक्तजनावनैकदृष्टेरिति कृष्णः स्मितपूर्वमब्रवीत् तम् ॥ ७४ ॥

त्वं नो गुरुरिति : १०.४८.२९.

भो भोस्तातवरेण्य पुण्यजनन - प्रावीण्यपादाम्बुज-
द्वन्द्वालोकन - तारिताखिल - जगज्जाता - ऽनुकम्पाम्बुधे ।
सत्यं नाम किमेतदेव सुगिरो यद्यद् वदेयुर्महत्-
पादाः सज्जनमोदिनस्तदखिलं तादृङ् न को वा वदेत् ॥ ७५ ॥

भवद्विधा इति : १०.४८.३०.

यद्यप्यभीष्टदा देवास्तथाप्यन्यार्पितस्पृहाः ।
साधवस्तद्वरा - स्तस्मान्न कथं दीनवत्सलाः ॥ ७६ ॥

न ह्यम्मयानीति : १०.४८.३१.

चैतन्यं भावयित्वैव मृच्छिलामयदेवताः ।
प्रसाद्यास्तादृशाः सन्तः स्वत एवेति तद्वराः ॥ ७७ ॥
सर्वात्मभावमनसां युक्तमीदृग्वचो हि वः ।
जनधर्मजुषां तात सत्या एव गिरोऽपि नः ॥ ७८ ॥

यदुक्तं तातेन प्रथितवचसा तन्निखिलम-
प्यलं मय्यास्तां वा न परमयमेकः स्फुटतरः ।
स्वभावः सत्सौख्येऽनिशमनलसत्वं मम हृदो
यदुद्योगश्चैवं तदखिल - परिक्लेशहरणे ॥ ७९ ॥

ममावेशस्तादृङ् नहि नृपपदेनापि धरणी-
परित्राणे नो वा त्रिदशगण - कल्याणकरणे ।
न वाऽन्यस्मिन् कस्मिन्नपि भवति यादृङ् निजजनो-
द्भवक्लेशोच्छित्यै तदवनधियोऽक्रूर सदिदम् ॥ ८० ॥

स भवानिति : १०.४८.३२.

श्रीदेशिकेन्द्रतनयार्पणतः कृतेष्टो
धर्मो[2] वृषापि च सुरभ्युदिताभिषेकात्।
तत्पुत्ररक्षकतया - ऽप्यहमर्पितेष्टः
स्यामित्यलं भृशमुवाह स पार्थचिन्ताम् ॥८१ ॥

उद्दिश्य धर्मरक्षण-पोषण-संस्थापनानि धृतजनुषः।
युक्तैव धर्मचिन्ता दयानिधेस्तस्य साधुजनसुहृदः ॥ ८२ ॥

भूर्युपकृतं पुरा यद्वायु[3]भुवा मयि ममापि तदिदानीम्।
उचिता तदवनचिन्ता प्रत्युपकृतिसमयकाङ्क्षिणोऽविरतम् ॥ ८३ ॥

धनञ्जय[4]मुखेनैव मखभुक् सुखतोषणम्।
सम्पाद्यस्तत्प्रसादोऽत्र तत्त्राणात्सततं मया ॥ ८४ ॥

साधुपार्थपरित्राण - चिन्तामहमिहान्तरे।
न चेद्वहामि तत्सर्वाप्यपार्था[5]स्यात्कृतिर्न किम् ॥ ८५ ॥

यद्यहं न कुलत्राणचिन्तोपेक्षितमानसः।
तदासन्न[6]कुलत्राण-प्रतिज्ञा मे मृषा न किम् ॥ ८६ ॥

सहदेवेन[7] विधिना सुरक्लेशापनुत्तये।
अर्थितो न कथं कुर्यां सहदेवेष्टचिन्तनम् ॥ ८७ ॥

इत्यालोच्यात्मनि श्रीशः स्वभक्तावनमानसः।
पाण्डवानां शुभं कर्तुं श्रीशस्तं किमयोजयत् ॥ ८८ ॥

( कुलकम् )

विश्वात्मनो मम प्राणाः पाण्डवा हि बहिश्चराः।
तद्रक्षणे विश्वरक्षा सिद्धेत्याधात् तदुद्यमम् ॥ ८९ ॥

---

१. यमः। २. धर्मराजो धर्मश्च। ३. मारुतिः भूमिश्च। ४. अर्जुनः, अग्निश्च। ५. पार्थरहिता अपगतार्था च। ६. संश्चासौ नकुलः आसन्नं च तत्कुलं च। ७. माद्रीपुत्रेण देवसहितेन च।

तेषु राजेति : १०.४८.३४.

[1]अन्धंस्थावरवासांसि नान्धस्तेभ्यो ददाति वा ।
[2]अन्धस्थावरवासांसि तानि गृह्णन्ति वा न ते ॥ ९० ॥

चक्षुष्मन्तोऽपि जन्मान्धा इव धर्मावनेक्षणे ।
दुर्जनाः स्युरयं त्वन्धो जात्यैवेत्यलमूहतः ॥ ९१ ॥

धृतरा[3]ष्ट्रोऽहमेवास्मीत्यलं गर्वोऽस्य चेद्धृदि ।
उग्र[4]सेनाश्रिता यूयमप्यत्रेति स्फुटं ततः ॥ ९२ ॥

गच्छ जानीहीति : १०.४८.३५.

एकः सूर्य[5]त्मभूतिर्भवति कुरुबले कर्ण एवाखिलेऽपि
सोऽप्य[6]न्धस्थाल्युपेतो जगति तदपरे स्पष्टमन्धस्थिताशाः ।
भीष्मो द्रोणः कृपश्चाप्यतुलवसुपदायत्ततोऽस्मत्प्रियाणां
नैकस्तेषां हितार्थीत्यवगतमपि मे पश्य गत्वा समक्षम् ॥ ९३ ॥

दु[7]र्वर्णाद्या प्र[8]जा यस्य हि भुवि निखिला विश्रुतास्त्यन्धभावो-
प्याजन्मप्राप्तयोगो वसतिरपि सदा यस्य मा[9]तङ्गभूमौ ।
तस्याग्रे धर्मरक्षाकथनमघकरं वक्तुरेव ह्यथापि
पथ्योक्त्यैवोपदेश्यः सततमतिखलोऽप्येष सन्मार्गधर्मः ॥ ९४ ॥

कल्याणं सुहृदां तदन्यदसतां रक्षा च धर्मस्थिते-
र्येनाकारि न भूभृता भवति तज्जन्मात्र धिग्धिक्पदम् ।

---

१. अन्धः अन्नं स्थावरं गृहं वासो वस्त्रं तानि । २. अन्धे धृतराष्ट्रे तिष्ठन्ति तानि तदधीनानीत्यर्थः, अवराणि अश्लाघ्यानि वस्त्राणि । ३. धृतं राष्ट्रं येन सः । ४. भयङ्करसैन्यं तत्संज्ञको राजा च । ५. सूरिपुत्रः, सूर्यपुत्रश्च । ६. तमःस्थितानां पङ्क्त्या उपेतः, पक्षे अन्धः अन्नं तद्युक्ता स्थाली पात्रविशेषः । ७. दुष्टवर्णो दुरितिवर्णश्च, आद्यः प्रसिद्धो यस्याम् । ८. सन्ततिर्जनश्च । ९. चाण्डालभूः, गजपुरं च ।

ताताक्रूर तमुग्रसेननृपतिं संश्रित्य वस्तस्थुषां
रामस्यापि ममाप्यलं तदुचितं भूभृत्समुच्चस्थितेः ॥ ९५ ॥
धर्मरक्षणमेवास्मत्कार्य - मक्रूर मुख्यतः ।
जानास्येवेति तत्कार्यं कार्यमित्येव वाचिकम् ॥ ९६ ॥

श्रीशकल्पतरुक्रीडा० ॥

इति श्रीमन्नासिकनिवासि - कविवर - हरिसूरिविरचिते
भक्तिरसायने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ अथ एकोनपञ्चाशत्तमोऽध्यायः ॥

स गत्वेति : १०.४९.१.

ये धर्मप्रतिकूलवृत्तिविभवास्ते विद्विषोऽप्यादरा-
दक्रूरोक्त्युपदेशतः स्वयमनुग्राह्याः स्वभावस्त्वयम् ।
साधूनामिति बोधयन् प्रभुरसौ सम्प्रेषयामास तं
सोऽप्यागादुपदेष्टुमस्य नगरं निःशङ्कमेतत्क्षमम् ॥ १ ॥

दृष्ट्वा तदा ते नृपतेरधर्मनिष्ठां प्रवृत्तिं पुरवासिलोकाः ।
युक्तं जगुः प्राग्भवपौरवेन्द्रकीर्तिं मुहुर्धर्मगुणप्रधानाम् ॥ २ ॥

यो गूढप्रणिधेः पदं श्रित इह स्यात्तेन चातुर्यतः
स्वाप्तादप्यतिशाय्यनाप्तगजने सप्रेमभावादरः ।
सद्यः संसदि दर्शनीय इति सन्नीतिज्ञ एतत्क्षमं
पृष्ट्वा भीष्ममुखाननामयमथापृच्छत् पृथां तत्सुताम् ॥ ३ ॥

उवासेति : १०.४९.४.

विना न सहवासितां भवति यत्स्वभावः स्फुटो
मनागपि लघोरपि क्वचिदयं तु पृथ्वीपतिः ।
निजान्तरनुचिन्तयन्निति स युक्तमेवाऽऽत्मधी-
रुवास दिवसान् बहूनखिल - तत्स्थितिज्ञप्तये ॥ ४ ॥

विना बहुदिनावासं न स्युर्वेद्याः सुहृद्भिरः ।
द्विषत्कर्णाऽस्पृशोऽस्मिन्वा तज्जिज्ञासुरुवास सः ॥ ५ ॥

तेज ओज इति : १०.४९.५.

आसीत् सधर्मेषु गुणान्वितेषु प्रजानुरागो हि पृथाभवेषु ।
दुर्योधनाद्येषु च दुर्मुखेषु[1] विधूतधर्मेषु न चाऽऽस युक्तम् ॥ ६ ॥

पार्थेषु सार्था निखिलेषु सर्वे गुणाश्च तेऽन्ये बहवोऽपि चासन् ।
प्रत्येकमेकः कथितोऽत्र मुख्यो विभाति मे तद्गुणसंख्ययेति ॥ ७ ॥

---

१. मुखरेषु दुःशब्दाद्येषु च ।

प्रश्रयो धर्मराजे च बलं भीमे धनञ्जये।
वीर्यं तेजस्तु नकुले भात्योजश्चरमे स्फुटम् ॥ ८ ॥

( युग्मम् )

कृतं चेति : १०.४९.६.

चित्रं धर्मानुगायासौ ददौ दुर्योधनो विषम्।
अथवा धार्तराष्ट्रस्य तद्युक्तं कुटिलात्मनः ॥ ९ ॥

चन्द्राश्मा[2] चन्द्रयोगे दिनकरमणिरप्यर्कयोगेऽम्बुजं वा
सद्भावः सस्फुलिङ्गो भवति विकसितं तद्वदेवाचिरेण।
स्वाप्तालोकेऽभ्युपेते क्वचिदपि सुहृदो दुर्वहक्लेशभाज-
श्चेतः सोत्कण्ठतां तं[3] व्रजति निगदितुं साधु सोवाच तं तत् ॥ १० ॥

ज्ञाताऽज्ञाता भवतु भुवने योषिता पूरुषो वा
दुःखं तावत्परकृतमलं धार्यमन्तः कथञ्चित्।
यावत्कश्चित् सदयहृदयः स्वप्रभोर्मन्त्रिभूतो
नाप्तस्तस्मिन् सपदि मिलिते तद्वदेत् स्वान्तरस्थम् ॥ ११ ॥

धार्तराष्ट्राप्तदुःखार्तौ तौ पृथाविदुरौ तदा।
यन्न्यवेदयतां दुःखमक्रूरं तं ततः स्फुटम् ॥ १२ ॥

( युग्मम् )

पृथा त्विति : १०.४९.७.

भ्राताऽपि दूरतस्त्याज्यो यदि क्रूर इति स्फुटम्।
युक्तं पृथा तमक्रूरमुपेता दुःखमब्रवीत् ॥ १३ ॥

अपि स्मरन्तीति : १०.४९.८.

एतावत्कालमासन् विविधरिपुकृत - क्लेशभाजो भवन्त-
स्तत्राक्रूरोदिताऽपि स्मृतिरफलतया दुर्बलैवेति युक्तम्।
सम्प्राप्ते जातभव्येऽहनि यदि बत मत्स्मृत्यभावोऽधुना व-
स्तत् किं वा वच्मि सभ्यस्तुत-चरितजुषां दिष्टमेवेदृशं मे ॥ १४ ॥

---

१. नागविशेषः दुर्योधनश्च। २. चन्द्रकान्तः। ३. आप्तं प्रति।

सल्लोकव्यवहार - चारुसरणि - प्रज्ञावतां श्रीमतां-
मेवं चेद्भवतामपि स्वजनसंत्राणप्रकारोऽद्भुतः ।
तत्किं वाच्यमतीवमुग्धमनसां पुंसामतो निश्चितं
सर्वं श्रीसहचारिणो निरुपधिर्नैवाप्तभावः क्वचित् ॥ १५ ॥
यः स्वाऽऽप्ताऽऽवलिपालनानलसधी - स्त्रैवर्गिकानन्दभाक्
सोऽस्मिन्नित्यखिलाः सखेऽधिधरणि प्रायो यतन्ते जनाः ।
दिष्टेनेष्टतमेन वेशकृपया योगस्तथाऽऽप्तोऽद्य वो-
ऽत्राऽऽलस्यं यदि तद् ब्रुवे किमपरं भाग्यं न मे तादृशम् ॥ १६ ॥
यो नाम्नाऽऽनकदुन्दुभिर्जनिसमुद्भूतानकध्वानतः
पुत्रः श्रीपतिरात्मवृत्तिरनघाऽऽनन्दान्तरङ्गप्रियः ।
तस्मिन् येन हि दर्शितं निजबलं दिष्टस्य तस्याग्रतो
दीनाया मम का तु नाम गणना पापैककूपात्मनः ॥ १७ ॥
येषां नास्ति सुहृत्सखा न परमाऽऽप्तोऽप्यत्र तेऽनुक्षणं
क्लिश्यन्त्यात्मनि नास्ति कोऽपि ममताभागार्तिहर्तेति नः ।
मद्भाग्यादखिलेषु सत्स्वपि मयाऽक्रूरेयमाप्ता दशा
तत्किं तैः सदसद्भिरार्त्यपहृतौ त्रातैक एवाच्युतः ॥ १८ ॥
भ्रात्रेय इति : १०.४९.९.
परित्राता कृष्णो जगति परमाप्तः सुखकरो
रिपु द्वेष्टा स्पष्टं भवति ननु कुन्तीतनुभुवाम् ।
इति ख्यातो लोकेऽखिलजनवचो दुन्दुभिरतः
सखे पृच्छामि त्वां स्मरति स हृदा तान् किमधुना ॥ १९ ॥
अक्रूर क्रूरकारानिलयनिगडिताऽवस्थितिर्येन माता
तातोऽपि प्रेमभाजा सपदि रिपुहतिं संविधायाऽन्वमोचि ।
तस्यावश्यं तदीयान्वयगतजनता - सौख्यदानन्दयाब्धे-
र्भूयस्तत्रार्थ्यमेवं यदियमहमितो यात धैर्याचलस्था ॥ २० ॥
सपत्नमध्य इति : १०.४९.१०.
दीनां वाणीमेवमाकर्ण्य पूर्णामाक्रोशन्त्या मे द्विषत्क्लेशितायाः ।
अत्रैत्यैषोऽक्रूर मां सान्त्वयेद्वा श्रीशस्यास्मत्साध्यमस्मिन्किमस्ति ॥ २१ ॥

कृष्ण कृष्णेति : १०.४९.११.

लोकोपकारविधुरोऽपि नरोऽतिरागी
स्वाप्ताऽवने भवति भुव्यनुदासितात्मा ।
त्वं तु त्रिलोकहितकृद्दृगसीति सिद्धे
कैमुत्यतस्त्वयि हरे स्वजनार्तिहृत्त्वम् ॥ २२ ॥

स्वाप्तावनैकरसिको यदहं भवामि
स्यात् तत्कुटुम्बभृतिसक्त इति प्रसिद्धिः ।
गर्ह्या विरक्तहृदयैरिति चेदुपेक्षा
तत्त्वं दयालुरसि दीनजनेऽस्मि दीना ॥ २३ ॥

मत्तातस्य सहोदरीति जननीतुल्येति दीनेति वा
काचिल्लोकगताऽस्ति धर्मदृगिति प्रोद्यद्गुणाऽसाविति ।
सम्बन्धं कमपि प्रभो त्वमधुना हृद्यानवद्यं दया-
म्भोधे बुद्धिमिहाऽऽनयन् कुरु कृपामस्मिन्ननाथे जने ॥ २४ ॥

नान्यदिति : १०.४९.१२.

केऽप्याप्ताः सुहृदश्च केऽपि कतिचिन्मित्राणि वा गोत्रजाः
केषां केचन सन्ति भुव्यभयदाः क्लेशापहास्तोषदाः ।
आप्तादाप्ततमः प्रियात् प्रियतमो मित्रोत्तमो मित्रतः
कृष्ण त्वं तु ममैक एव तदहं त्वत्पादमेवाऽऽश्रये ॥ २५ ॥

स्वाद्याक्षरं[1] सततमेव विचिन्तयन्ती
कुन्ती न पात्रमवनौ मदनुग्रहस्य ।
वक्तुं तवाच्युत न जात्वपि युक्तमेतद्
यत्सर्वतोऽस्युपनिषत्सु धृताभिमानः ॥ २६ ॥

नमः कृष्णायेति : १०.४९.१३.

किं कुर्यां किं न कुर्यां तव सपदि हरे प्राप्तिरर्हा यथा स्यात्
किं दद्यां किं न दद्यामविकलसुगुणा धर्मवृद्धिर्यथा स्यात् ।
जाने श्रीभूमिजानेऽण्वपरमपि न वै वेद्मि किं त्वेकमेवा-
ऽकम्पा भक्तेऽनुकम्पाऽस्ति हि तव तदहं पादपद्मं प्रपन्ना ॥ २७ ॥

---

१ स्वनामाद्याक्षर कुमिति कुं पृथ्वीम्, पक्षे स्वरूपभूतमाद्यमक्षरं ब्रह्म ।

इत्यनुस्मृत्येति : १०.४९.१४.

दयोदयेन वाष्पोदबिन्दूदय इवापरः ।
हेतुरित्यास तादृक् सा दयोत्पत्त्यै तदनन्तरे ॥ २८ ॥

समदुःखसुख इति : १०.४९.१५.

या धर्मोद्भवकारणं जगति या धर्मर्धिमाकाङ्क्षति
या धर्मेण समाश्रिताऽनिशमसौ धर्मो यथा पाल्यते ।
तस्यां त्वय्यनपायिभव्यगुणसद्धर्मैकहार्दस्थितौ
धर्मैकावनदीक्षितस्य सततं सिद्धैव विष्णोः कृपा ॥ २९ ॥

साहाय्यं यस्य लब्ध्वा क्वचिदपि विधितो जानकीजानिरस्मिन्
दुर्लङ्घ्यं क्षारवारांनिधिमपि कृतवानञ्जसैवाङ्घ्रिगम्यम् ।
सोऽयं ते नित्यमास्ते परिचरणधिया सन्निधौ पावमानिः
का चिन्ता संकटं वा रिपुकृतमपि ते सौख्यसौभाग्यभाजः ॥ ३० ॥

यो हेमप्रसवश्च योऽध्वरभुजां हव्यप्रदः पावकः
प्राचीन - प्रमुखा-ऽखिला-ऽमर - समुद्गीत-प्रतापो-ऽनलः[1][2] ।
तस्मिन् साध्वि धनञ्जये तव वरो सत्येतदाचिन्तय
प्राप्ताः स्युर्निखिलारयोऽपि शलभप्राग्भारयोग्यां दशाम् ॥ ३१ ॥

सत्कुलमेव सतीनां रक्षति दुःखाद् दुरध्वभीतानाम् ।
तत्किं बिभेषि वितथं यस्मान्नकुले[3] न भवसि महती त्वम् ॥ ३२ ॥

सहदेवेन तिष्ठन्त्याः सर्वदैव तवानघे ।
न दुर्जनभयं नापि दुर्लभं कृष्णदर्शनम् ॥ ३३ ॥

यस्या धर्मानुकूल्यं सततमविकलं या गुणै[4]र्नामलेन
युक्ता या चाप्तसौख्यप्रदविजयवती[5] या च नासत्ययुक्ता[6] ।
क्लेशाधिव्याध्युपाधिद्विषदुपधिभवत्रासदारिद्र्यवार्ता
तस्याः स्वप्नेऽपि न स्यात्क्वचिदिति कलयासंदिहानाम्ब लोके ॥ ३४ ॥

---

१. इन्द्रः । २. अनलो नरश्च । ३. नकुलेन महतीपूज्या, पक्षे नञ्द्वयात्कुले महती । ४. शीलादिर्भीमसेनश्च । ५. उत्कर्षोऽर्जुनश्च । ६. असत्ययुक्ता आश्विनेयांशौ नकुल-सहदेवौ च ।

दुर्वासाः क्व क्व तस्य प्रियकृदपचितिर्मन्त्रलाभश्च तस्मात्
तस्मात्प्राप्तिः सुतानामपरदिविषदा - मानुकूल्यं च पत्युः ।
इत्थं येनाऽप्रयत्नादघटितघटनाशालिनाऽकारि कर्तुं
सम्भाव्याव्याजभव्यं जगति स च विधिर्न क्षमः स्यात्किमग्रे ॥ ३५ ॥

बधान धैर्यं त्यज शत्रुसाध्वसं
दरिद्रभावं न मनः समानय ।
अनेहसाऽल्पेन सकल्पवृक्षतां
निजामजस्त्वामिह दर्शयिष्यति ॥ ३६ ॥

अव्याजतावकसुतावनचिन्तनं स
श्रीशः करोति कियदत्र हि साक्षिभूतम् ।
तच्चित्तमेव सति बाह्यदशा तु वच्मः
सर्वात्मनैव स वशस्तव वासुदेवः ॥ ३७ ॥

मुकुन्दपदपङ्कजं तव विधाय हार्दाश्रितं
स धर्मगुणमीप्सितं निजमहर्निशं चिन्तयन् ।
त्वदङ्घ्रिकमलावलोकनसमुत्सुकोऽनन्यभाग्
जनोऽयमिह तेऽधुनेदृगिति विज्ञ विज्ञाप्यताम् ॥ ३८ ॥

मदीयमनुपालयाम्यहमिमं सदेति प्रभु-
र्गिरैव न तु केवलं वदति दर्शयत्यर्थतः ।
प्रथेति च वृथा यथा न भविता तथा तत्पुरो-
ऽपि कथ्यमिह सत्पथे प्रथितधीरसि त्वं यतः ॥ ३९ ॥

यास्यन्निति : १०.४९.१६.

येनावश्यमुपस्थितं प्रभविता वैरस्य संवर्धनं
वासस्तत्सविधे पुरा नयविदा पुंसा हि वाग्वादतः ।
कार्यो नैव तदूर्ध्वमप्यलमिति न्यायप्रवीणः क्षमं
यास्यन् राजसभां जगाम गदितुं नीतिं स राज्ञे सुधीः ॥ ४० ॥

भो भो इति : १०.४९.१७.

प्रजासु पुत्रेषु च साम्यवृत्त्या स्ववंश्यभूपैर्जनिता सुकीर्तिः ।
वैषम्यतो येन हि खण्डितेति यथार्थसम्बुद्धिमदात् स तस्मै ॥ ४१ ॥

धर्मेणावनिपालनं निजगुणेनैव प्रजारञ्जनं
कार्यं चार्जुनसद्यशःप्रसरणं चैषा स्वरूपस्थितिः ।
राज्ञां तेषु न चान्यबोधितनयापेक्षाऽधुनागन्तुक-
स्त्वं राज्यासनमाश्रितस्त्विवति ममोक्तेश्चावकाशोऽजनि ॥ ४२ ॥

धर्मेणेति : १०.४९.१८.

दृष्टादृष्टफलं विभाव्य मतिमान् वर्तेत सर्वेष्वपि
कार्येष्वेवमगूढदुन्दुभिरयं जागर्ति सत्ताडितः ।
तत्राद्ये सहवासिनो हितदृशो बन्ध्वाप्तमित्रादयः
साह्याग्र्याश्चरमे तु धीरिह निजैवैकाऽथवा श्रीधरः ॥ ४३ ॥

अन्यथेति : १०.४९.१९.

पीयूषं विषवद्विषं च मनसा पीयूषवन्मन्यते
सोऽस्मिन् योऽपरिपक्वबुद्धिरपरिज्ञातार्थशास्त्रः पुमान् ।
त्वं वृद्धः सदसद्विवेकनिपुणः प्रज्ञावतामग्रणीः
सन्नप्येवमिहाऽऽचरस्यतिमहच्चित्रं किमस्मात् परम् ॥ ४४ ॥

धर्मं पालय लालयाऽर्जुनमलङ्कुर्वाशु भीमं मुदा
वीक्षेथा नकुलं हितं गणयतं देवं सहाद्यस्थितिम् ।
तेषामेव ततो न भव्यमपि तु स्पष्टं तवापि क्षितौ
धर्मार्थिर्विजयो गुणर्धिरतनुश्रेयोऽखिलश्रीरपि ॥ ४५ ॥

दत्तं वित्तमहो न पाण्डुतनयैर्नो वा भवद्भिर्हृतं
तुल्या एव सुहृत्तयाऽन्वयितया यूयं च ते चापि नः ।
उक्तं त्वेददथापि भूरि भवतामैक्योदितश्रीकृते
कृत्वा चित्तमकैतवं यदि हितं धत्स्वाऽन्यथा सन्त्यज ॥ ४६ ॥

यत्रावस्थितिरस्ति धर्मवचसस्तत्रापि नार्युद्गमः
किं वाच्यं पुनरेष तावकगृहे मूर्तः स्वयं तिष्ठति ।

तत्पश्यन् भृशमन्तरङ्गजदृशा वर्तस्व तादृग्यथा
स्यादग्रे सुखमन्तरङ्गजदृशां प्रज्ञादृगास्ते भवान् ॥ ४७ ॥

जगत्प्राणाधारं क्षणमपि विनोन्मेषणमपि
न कर्तुं ब्रह्माऽपि प्रभवति परे केऽत्र मनुजाः ।
तदीयं प्राणेष्टं तनुजमवधूयाऽतुलबलं
कथं सौख्यावाप्तिस्तव तनुभुवां पश्य निभृतम् ॥ ४८ ॥

यश्चासेव्यधनञ्जयं वशयति प्रेप्सुः प्रियं प्राणभृत्
क्षिप्रं भूरि धनञ्जयं स लभते निर्विघ्नमेवंस्थिते ।
तद्वैरस्यविचिन्तनं कृतवतस्ते त्वत्सुतानां च वा
स्यात्स्वप्नेऽपि धनञ्जयोऽर्जुनयशश्चन्द्रप्रसारः कथम् ॥ ४९ ॥

वर्तस्वाऽऽत्मजवत्स्वबन्धुतनुजेष्वव्याजमेवं मया
श्रीशादेष विशिष्टमिष्टममलं निर्दिष्टमाप्तोक्तितः ।
रुच्यं तन्न भवत्यलं यदि मनस्युद्बुद्धदुर्वासना-
जाले ते दृगिवास्ति बुद्धिदृगपि भ्रष्टेति तत्स्यात् स्फुटम् ॥ ५० ॥

नेह चेति : १०.४९.२०.

को नास्मिन् पुरुषो गुरुर्लघुरपि स्वाभीष्टमत्युत्कटं
चित्तेऽहर्दिवमेव चिन्तयति तत्तादृक् त्वभीष्टोदयः ।
प्राक्प्रारब्धबलानुसारत इति व्यक्ते विविक्तात्मनो
मोहोऽयं तव भात्यहो विधिवशादूहोऽप्यनीहोऽत्र मे ॥ ५१ ॥

तस्मादिति : १०.४९.२५.

येषामर्थे प्रयत्नः स्फुरति तव महान् वक्रगामी त एते
सर्वेऽप्यर्थानुबन्धा न पुनरुपनत - त्वत्कृताघांशभाजः ।
जानन्नेवं विहाय स्वपरमतिमिमां शान्तचित्तो यतात्मा
धर्मर्द्धौ सन् परस्मिन्निह च सुखकरं भव्यमेवं चिनुष्व ॥ ५२ ॥
सर्वत्राकुण्ठशक्ति - र्जगति मतिमतामग्रगण्यः स्वतोऽहं
शूरख्यात - प्रतापः प्रगुण - नयचणो नाहमस्म्यन्यबोध्यः ।

एवं चेद्वक्षि कुक्षिम्भरिरपि मनुते स्वेषु विश्वंभरत्वं
स्वस्मिन् किं तावताऽस्मात् त्रिजगदनुमतिर्यत्र वाक् सैव साध्वी ॥५३॥

अस्त्येषा दुर्निवारा रणरसचतुरा वाहिनी साऽवनीशा
योद्धारोऽर्कप्रताप - प्रतिनिधिमहसः पूरिताशा च सम्पत् ।
राजन् सत्योक्तिरेवं सति शुभदविधावन्यथा व्यर्थमेतत्
सर्वं स्यादक्षसङ्गो गतनयन इवैषाऽस्ति तेऽद्धाऽनुभूतिः ॥ ५४ ॥

वर्षन्त्यम्बुधराः परन्तु पुरुषाद्दृष्टेन सस्योदयः
सन्तस्तत्त्वमुदीरयन्ति परमानन्दस्तु सद्भाग्यतः ।
एवं भूरि मयोपदिष्टमपि सत्त्वच्छ्रोत्रयोस्त्रासकृद्
यत्सम्प्रत्यजनीति निश्चिनु मनस्येतद्विधेश्चेष्टितम् ॥ ५५ ॥

मुख्यं धाम दुराग्रहस्य सदसद्द्वैधुर्यधुर्यास्पदं
यच्चाशान्तरसस्य पात्रमवनौ कामस्य लोभस्य च ।
वृद्धेऽप्याश्रितदूष्यपाकचरिते तद्बालिशत्वं त्वयि
स्पष्टं दृश्यमपि प्रवक्तुमधुना जिह्वैव जिह्रेति नः ॥ ५६ ॥

पथ्यं तावकमेव चेतसि चिरं संचिन्तयन्नच्युत-
स्त्यक्त्वा कार्यशतान्यतीव मतिमान्वाग्मीति यं प्राहिणोत् ।
तस्याप्यत्र ममेदृशी चतुरता सर्वाऽपि सद्धक्कृता
त्वामास्पृश्य दुराग्रहग्रहिल - मामुक्तस्तयाऽभून्नृप ॥ ५७ ॥

अस्ति द्रोण[1]प्रधानं यदपि तव गृहं मुख्यदुर्वर्ण[2]युक्तं
गाङ्गेया[3]ढ्यं तथा सन्मणिगणखचितं सर्वदैवं तथापि ।
भ्राजत्पद्मं[4] सुशङ्खं मकरविलसितं नीलकान्ति मुकुन्दं
लब्ध्वा स्वानन्दभाजां तव निखिलमिदं तुच्छमेवास्ति तेषाम् ॥ ५८ ॥

---

१. धान्यपरिमाणविशेषः द्रोणाचार्यश्च । २. रजतं मुख्यः दुरिति वर्णो येषां ते दुर्योधनाद्याश्च । ३. भीष्मः सुवर्णं च । ४. पद्मादयो निधिभेदाः, पक्षे स्पष्टम् ।

धृत्वा पाण्डवपक्षपातमपि मे कुर्यात् किमेषोऽखिल-
क्ष्मेशस्येत्यभिमानदुर्विलसितां गाथां वृथा मा कृथाः।
सत्यं सत्यमवेहि यस्य हि दशोलेशं रुषाऽक्तं विपन्-
मूलं प्राहुरमन्दसंपदुदयं जातानुकम्पं बुधाः ॥ ५९ ॥
यत्प्रोक्तं परिणामसौख्यदममुत्राप्यत्र कीर्त्यास्पदं
सद्यः कर्णमनःकठोरमिति चेन्न त्वं वचः श्रोस्यसि।
सत्यं वच्मि ततो न हानिरथवा लाभोऽपि नः किन्त्वलं
प्रेष्ठं स्वं भविताऽत्यनिष्टमथवा पश्य त्वमेवान्ततः ॥ ६० ॥

यथा वदतीति : १०.४९.२६.

यथा वदति कल्याणी तद्वाणीति विदन्नपि।
नाङ्गीचकार तच्चित्रं नृपः प्रज्ञेक्षणोऽपि सः ॥ ६१ ॥
दातुर्या मधुरा वाणी मन्ये तदमृतं भुवि।
यद्दानपतिवाचं तां तुलयामास तेन सः ॥ ६२ ॥
अभिनन्द्यं द्विजैः सर्वैः सन्मानसकृतास्पदम्।
साधूदितामृतं चित्रं धृतराष्ट्रोऽपि नापिबत् ॥ ६३ ॥

तथापीति : १०.४९.२७.

जाड्यान्वितं च मलिनं धृतराष्ट्रचित्तं
युक्तं तदाप घनतां हि तमःप्रसारि।
युक्तं तदुक्तिरपि तत्र हि चञ्चलाऽऽसी-
द्यचाऽऽस सत्पथपराङ्मुखमद्भुतं तत् ॥ ६४ ॥

ईश्वरस्येति : १०.४९.२८.

यद्भीत्या पवनश्चरत्यनुदिनं भास्वानुदेत्यन्वहं
वह्निस्तापयतीह वर्षति भुवि श्रीमानमर्त्याधिपः।

---

१. ब्राह्मणैः पक्षिभिश्च। २. सरोवरं चित्तं च। ३. उदितमेवामृतम् उदितं च तदमृतं च। ४. राजा हंसविशेषश्च। ५. कठिनतां मेघतां च। ६. विद्युत् अस्थिरा च। ७. आकाशः सन्मार्गश्च।

मृत्युर्यद्विहितानुशासनगतिः सर्पत्यहो प्राणिन-
स्तस्य श्रीजगदीशितुर्बत विधेः के वा वयं लङ्घने ॥ ६५ ॥

यं साधुसङ्घा निजमानसेषु
हंसायितं बिभ्रति योगभाजः ।
कंसादिनाशाय स चावतीर्णः
कं साधयेत् स्वेष्टमलं न चार्थम् ॥ ६६ ॥

भूभूरिभार-हरणाय कुले यदूना-
माविर्बभूव हरिरेष च भक्तवश्यः ।
कुन्तीभुवोऽस्य हि पदाब्जरता हृदीति
ज्ञात्वाऽप्यकारि तदुपेक्षणमेष मोहः ॥ ६७ ॥

यो दुर्विमर्शेति : १०.४९.२९.

यः सृष्ट्वा रजसा चराचरमिदं सत्त्वेन रक्षंस्तमो-
भूम्ना संहरति प्रपञ्चरचना - स्वातन्त्र्यमादर्शयन् ।
तस्मै भक्तसुखार्पणाहितहृदे राज्ञा नमस्कुर्वता
श्रीशाहं त्वदभीष्टसिद्ध्यनुमतोऽस्मीति व्यबोध्याशयः ॥ ६८ ॥

इत्यभिप्रेत्येति : १०.४९.३०.

इति तदुक्तिविबोधितमाशयं समवबुद्ध्य नृपस्य स यादवः ।
निजसुहृद्विहितानुमतिर्मुदा यदुपुरीं हरिपूर्णशुभां ययौ ॥ ६९ ॥

प्रभो राज्ञास्त्यैषेत्युचितमवगम्यात्मनि सुधी-
र्विधत्ते स्वौत्सुक्यात्तदनु भुवि धर्मानुसरणम् ।
जनानन्यानन्धानुपदिशति चैवं स हि हरेः
स्वरूपद्रष्टेति स्फुटमभव - दक्रूरचरितात् ॥ ७० ॥

शशंसेति : १०.४९.३१.

दृष्टो धर्मनृपः ससूनुरथ संपृष्टो मयाऽनामयं
दुष्टोपध्यसुखा पृथा सुखकराऽक्लिष्टोत्तरैर्बोधिता ।

स्पष्टोक्तैर्वचनैर्नृपोऽप्यधिसभं शिष्टोचितैर्बोधिता
धृष्टोऽसौ न बुबोध तत्तव पदं हृष्टोऽस्म्युपेत्य प्रभो ॥ ७१ ॥
श्रुत्वाऽक्रूरसमीरितं क्रमवशाद्गत्वा प्रभुर्हास्तिनं
नत्वा धर्ममनेन चोक्तमखिलं तत्त्वार्थमाकर्ण्य च ।
कृत्वाऽऽश्वासनमस्य भक्तहितकृद् भूत्वा च दूतः स्वयं
यात्वा भूपसभामिमं शुभगिरा स त्वार्थयाऽबोधयत् ॥ ७२ ॥
ज्ञात्वाचाशयमस्य पाण्डुतनयानुक्त्वा च युद्धोद्यमं
धृत्वा चार्जुनसूततां निजरिपून् हत्वाऽखिलानाहवे ।
हृत्वा राज्यममुष्य शान्तमनसे दत्वा च धर्माय त-
न्नीत्वाऽमून् सुखशेवधिं स मुमुदे मत्वाऽऽत्मनो धन्यताम् ॥ ७३ ॥
( युग्मम् )

